THE

# KASHI-SANSKRIT-SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

**140.**

( Nyāya Section, No. 21 )

महामहोपाध्याय श्रीगङ्गेशोपाध्यायकृतं

# तर्कप्रकरणम्

श्रीमथुरानाथतर्कवागीशविरचित-

## तर्करहस्ययुतं

तर्कतीर्थ-न्यायाचार्य-

श्रीश्यामाचरणभट्टाचार्य विरचित—

विवृतिसंवलितम् ।



प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

# अस्मत्प्रकाशित-वेदान्तग्रन्थाः ।

१ अद्वैतसिद्धिसिद्धान्तसारः । सदानन्दव्यासप्रणीतः तत्कृतव्याख्या च ४॥)
२ ब्रह्मसूत्रवृत्ति । ( मरीचिका ) ३)
३ खण्डनखण्डखाद्यम् । "खण्डनभावप्रकाशिका" "शाङ्करी" "खण्डनभूषामणि" 'खण्डनदर्पण" "खण्डनरत्नमालिका" पञ्चटीका समेतम् १॥)
४ खण्डनपरिशिष्टम् । श्रीताराचरणशर्मणा विरचितम् । ॥)
५ जीवनमुक्तिविवेकः । विस्तृतसरल भाषानुवादेन सहितः । २)
६ तत्त्वदीपनम् । अखण्डानन्दमुनिकृतं (पञ्चपादिकाविवणस्य व्याख्यानं) ८)
७ तत्त्वत्रयम् । लोकाचार्यप्रणीतं । वरवरस्वामिनिबद्धभाष्योपबृंहितं २।।)
८ तत्त्वशेखरः । ,, तथा वरदगुरुकृतः तत्त्वत्रयचुलुकसंग्रहः १।।)
९ न्यायपरिशुद्धिः-सटीक । श्रीवेदान्ताचार्यप्रणीता । ७।।)
१० न्यायमकरन्दः-सटीक । प्रमाणमाला-न्यायदीपावली युतः ६)
११ प्रणवकल्पः । "प्रणवकल्पप्रकाशाख्यभाष्य" समलंकृतः १॥)
१२ श्रीभाष्यवार्तिकं-यतीन्द्रमतदीपिका सकलाचार्यमतसंग्रहश्च ३)
१३ वेदान्तरत्नमञ्जूषा तथा वेदान्ततत्त्वबोधः । सम्पूर्णः ३)
१४ वेदान्तसिद्धान्तसङ्ग्रहः तथा-वेदान्तकारिकावली "अध्यात्मसुधातरङ्गिणी" टीकायुता ४।।)
१५ वेदान्तदर्शनम् । "ब्रह्मामृतवर्षिणी" टीका सहितम् ६)
१६ वेदान्तपरिभाषा । "अर्थदीपिका" टीका-टिप्पणी सहिता । १।)
१७ श्रुत्यन्तकल्पवल्ली । पुरुषोत्तमप्रसादकृत सम्पूर्णा । ४।।)
१८ श्रुत्यन्तसुरद्रुमः । तथा-श्रुतिसिद्धान्तमञ्जरी । व्रजेश्वरकृता । ४।।)
१९ पञ्चीकरणम् । "वार्तिक" टीका 'तत्त्वचन्द्रिका' 'विवरणेन' च सहितम् ॥)
२० बोधसारः । श्रीनरहरिकृतः, तच्छिष्य दिवाकरकृत टीकया सहितः १५)
२१ भेदधिक्कारः-सटीक । अप्पयदीक्षितविरचित "उपक्रमपराक्रमश्च" ३)
२२ विवरणोपन्यासः । "वाक्यसुधा" ब्रह्मानन्दी व्याख्यासहितः । ३)
२३ सिद्धान्तविन्दुः-न्यायरत्नावली-नारायणीटीकोपेतः । ४)
२४ संक्षेपशारीरकम् । रामतीर्थकृत 'अन्वयार्थबोधिनी" टीका सहितम् ८)
२५ संक्षेपशारीरकम् । "मधुसूदनी" टीकासहितम् । ८)
२६ स्वानुभवादर्शः-सटीक । 'अनुभूतिलेशः समेतः । ३)
२७ श्रीमत्सनत्सुजातीयम् शङ्करभाष्य "नीलकण्ठी" व्याख्यद्वयसमन्वितम् १।)
२८ हरिलीलामृतम् । मधुसूदनीटीकासहितं । १॥)
२९ श्रीविद्वन्मण्डनम् । पुरुषोत्तमजीकृत "सुवर्णसूत्र" व्याख्यासहितं ३॥)
३० प्रस्थानरत्नाकरः । गोस्वामी पुरुषोत्तमजी कृतः सम्पूर्णः ३)
३१ शुद्धाद्वैतमार्तण्डः । "प्रकाश" "प्रमेयरत्नार्णव" टीकाद्वयोपेतः १॥)
३२ श्रीमदणुभाष्यम् । गोस्वामिश्रीपुरुषोत्तमजीकृत "प्रकाश" व्याख्यासहितं २२॥

THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

140.



( Nyāya Section. No. 21 )

THE

# TARKA PRAKARAṆA

OF

M. M. S'RĪ GANGES'OPĀDHYĀYA

*With*

## Tarkarahasya

*OF*

M. M. S'RĪ MATHURĀNĀTHA TARKAVĀGĪS'A

*WITH A COMMENTARY BY*

Nyāyāchārya & Tarkatīrtha

PT. VĀMĀCHARAṆA BHATTĀCHĀRYA





PUBLISHED BY

JAYA KRISHNA DÂS HARI DAS GUPTA

*The Chowkhambâ Sanskrit Series Office*

Benares City

1944

* श्रीः *

काशी-संस्कृत-सीरिज-ग्रन्थमालायाः

१४०



न्यायविभागे एकविंशति ( २१ ) पुष्पम् ।

महामहोपाध्याय—

श्रीमद्गङ्गेशोपाध्यायविरचितं

# तर्कप्रकरणम्

आत्मानन्द आरुड स्वा
मु. गौ.पोष्ट, मो.ता.मा.जि. वि
मैसूर स्टेट

महामहोपाध्याय—

श्रीमन्मथुरानाथतर्कवागीशकृत-

तर्करहस्ययुतं

तर्कतीर्थ-न्यायाचार्य-

श्रीमद्वामाचरणभट्टाचार्यविरचित-

विवृतिसंवलितं

तदन्तेवासिनोः—

श्रीमत्स्वामि निर्दोषानन्द-योगीन्द्रानन्दयोः

साहाय्येन संशोधितश्च ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

वि० सं० २००१ ] [ मूल्यं १)

# विज्ञप्तिः ।

अयि भोः प्रियपाठकाः !

श्रीमन्महामहोपाध्यायगङ्गेशोपाध्यायविरचिततर्कग्रन्थप्रभाकरः समस्तनास्तिक्यध्वान्तान्तको लौकिकानां परीक्षकाणाञ्च सर्वेषां सर्वकर्मनिमित्तीभूतः सर्वधर्मोपयोगितया पृथिव्यामापामरैः सर्वैरेव समाद्रियते, किं बहुना निखिलशास्त्रज्ञानार्थं तर्कस्य सर्वथाऽऽवश्यकता संभवतीत्यस्माभिर्मन्यते । अस्य च महामहोपाध्यायश्रीमन्मथुरानाथतर्कवागीशविनिर्मितमतिसरलं तर्करहस्यं विराजमानमप्यतिसंक्षिप्ततया सुधीभिरनवगततत्त्वमिति मयाऽस्य सुविस्तरा तर्कविवृतिर्विरचिता, सा यदि सुधीभिः समादरणीया सती तेषामुपकाराय प्रभवति तदा कृतकृत्योऽहं भविष्यामि ।

तर्केणेश्वरनिश्चयः समजनीवादीप्यमानेन यः
कुर्यादार्यगणश्च कर्मजनितं जन्मेति सन्निश्चयम् ।
यं वाऽऽसाद्य जनाः प्रमाणनिचयैरासादयन्ती प्रमां
तर्कोऽयं प्रतिभातु भारतजनैरालोचितः सादरम् ॥ १ ॥
अन्यस्मिन्निहिता सदा कठिनता शास्त्रे तमिस्रायते
दृष्टा शिष्टगणेन यश्च नियतं ज्योत्स्नायमानः कृतः ।
येनेशः प्रमितः सता सुमहता सच्छ्रेयसे भारते
न्यायः प्राणसमः सखेति मतिमान् जानाति मानप्रियः ॥ २ ॥
गौडे गौरवसौरभे जनपदे विख्यातविद्याश्रये
जातेनाऽऽशु विनिर्मितेव तरणी मग्नाय तर्काम्बुधौ
माथुर्या विवृतिर्मयाऽतिविमला तर्कस्य सा धीमता
श्री वामाचरणेन धीरजनतानन्दप्रदानेच्छया ॥ ३ ॥
रसर्त्तुवसुचन्द्रेऽस्मिन् शाके भाद्रसिता मीं ।
प्राप्येयं विवृत्तिर्याता समाप्तिं धीमदन्तिके ॥ ४ ॥

इति

श्रीवामाचरण भट्टाचार्यस्य ।

॥ ॐ तत्सन्नमो ब्रह्मणे ॥

# तत्त्वचिन्तामणौ

## सविवृतिकतर्करहस्ययुतं

## तर्कप्रकरणम् ।



### * अथ तत्त्वचिन्तामणिः *

तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थेति चेत्—न, यावदाशङ्कं तर्कानुसरणात् ।

### * अथ विवृतिः *

तर्केण यस्य महतो भवतापहन्तुः प्रामाण्यनिश्चयमहो कुरुते स धीरः ।
यज्ज्ञानतो लभत एव जनः स मुक्तिं तं नौमि शङ्करमहं बहुतर्कवेद्यम् ॥ १ ॥
श्रीवामाचरणौ नत्वा पितरौ च गुरुं वरम् ।
विवृणोति सुधीरेकां दुर्गमां तर्कमाथुरीम् ॥ २ ॥
ज्ञानिनो यदि पश्यन्ति विस्तृतां मरकृतामिमाम् ।
विवृतिश्चेत्तदा मन्ये धन्योऽहमिति सांप्रतम् ॥ ३ ॥

अनुमिनोमीत्याकारकानुभवविषयतावच्छेदकमनुमितित्वं यथा जातिस्तथा आपादयामीत्यनुभवविषयतावच्छेदकतर्कत्वमपि जातिरेवेति केचित् । अन्ये तु व्यापकाभावप्रकारकनिश्चयविषयीभूते धर्मिणि आहार्यव्याप्यारोपेण तथाविधव्यापकारोपस्तर्क इति वदन्ति । वस्तुतः पक्षे आपाद्यव्याप्यापादकवत्तानिश्चयजन्यज्ञानं तर्कः । तत्र चापाद्यव्यतिरेकनिश्चयपक्षतावच्छेदकादिनिश्चयस्तादृशापादकनिश्चयश्च हेतुस्तादृशनिश्चयं प्रति आपाद्याभावाद्यवगाहिसंशयादेः स्वातन्त्र्येण संशयसामग्रीसंपादकतया वा प्रतिबन्धकत्वं, तादृशसंशयाद्यनुत्पादार्थं यदि तर्कान्तरस्यावश्यकता स्यात्तदा तादृशतर्कान्तरकारणविघटकसंशयविघटकत्वेन तर्कान्तरस्याप्यावश्यकतेति तत्र तत्रापीत्यादिरीत्याऽनवस्था स्यात्, न हि तादृश्यनवस्था बीजाङ्कुरवत्प्रामाणिकी बीजाङ्कुरस्थले अनवस्थाया अगत्या प्रामाणिकत्वसंभवेऽपि अनवस्थिततर्कधाराया अप्रामाणिकत्वात् । अन्यथा अनवस्थिततर्कस्य तर्कं प्रति प्रयोजकतायाः स्वीकरणीयतया तादृशप्रयोजकतानिश्चायकविरहेण तर्कं प्रति तर्कस्य प्रयोजकत्वाऽसंभवात् वह्निधूमव्याप्तिग्राहकतर्कस्य प्रयोजकाभावेनानुत्पादात् तादृशतर्कस्य वह्निधूमव्याप्तिग्राहकत्वाभिधानं नैयायिकानामतिसाहसमिति चार्वाका एव विजयेरन् ।

वस्तुतस्तु तर्को यदि तर्कत्वव्यापकप्रयोजकतानिरूपितप्रयोज्यतावान् स्यात्तदा तर्कभिन्नः

यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः ।

तथाहि—

*** अथ तर्कमाथुरी ***

यत्तर्कविघटकशङ्कासामान्यं तर्काभावातिरिक्तकारणप्रतियोगिकाभावादेव पूर्वं नावतरति तं तर्कमाह—*तथाहीति* ।

स्यादित्यापत्तिभयेनानवस्था न प्रामाणिकी, तर्कत्वावच्छिन्नं प्रति तर्कत्वेनाऽप्रयोजकत्वात्तर्कभेदाभावरूपापाद्याभावेन तर्कत्वेन तर्कत्वव्यापकप्रयोजकतानिरूपितप्रयोज्यत्वाभावस्य तर्के सिद्धिरिति तु युक्तमुत्पश्यामः । नव्यास्तु तर्को यदि तर्कजन्यः स्यात्तदा तर्कोऽजन्यजन्यो न स्यादित्येवमापत्तिरनवस्थायामिति प्राहुः । अनवस्थाया अप्रमाणिकत्वे तस्याः परिहारस्तु संभवत्येव । तथाहि यादृशवह्निधूमव्याप्तिग्राहकतर्कात्पूर्वं तादृशतर्कविघटकस्य 'अवह्नेरेव भविष्यति' इत्यादिशङ्कासामान्यस्य तर्कभिन्नवह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानादेवानुत्पादस्तादृशतर्कप्रदर्शनेनानवस्थां परिहर्तुमाह मूले—तथाहीत्यादि । अत्र धूमस्य पक्षत्वम्, उत्पन्नत्वाभावस्याऽपाद्यत्वं, वह्न्यसमवहितजन्यत्वाभावविशिष्टस्य वह्निसमवहितजन्यत्वाभावस्यापादकत्वम्, आपाद्यापादकयो र्व्याप्तिग्रहश्च नित्याकाशादाविति द्रष्टव्यम् । तथा च धूमो यदि वह्न्यसमवहितजन्यत्वाभावविशिष्टवह्निसमवहितजन्यत्वाभाववान् स्यात्तदा जन्यत्वाभाववान् स्यात्, यथा आकाश इत्यर्थः पर्यवसितः । नचान्यतरत्वस्याखण्डोपाधित्वमते लाघवाद् वह्न्यसमवहितजन्यत्ववह्निसमवहितजन्यत्वैतदन्यतराभावस्यैवापादकत्वमस्त्विति वाच्यं, तथा सति आपाद्याभावेन जन्यत्वेन तादृशान्यतराभावाभावस्यान्यतरस्यैव धूमादौ सिद्धिसंभवेन धूमे वह्निसमवहितजन्यत्वस्यासिद्धौ तदभावकोटिकशङ्कां प्रति तर्कस्य प्रतिबन्धकत्वं न स्यात् तादृशसंशयविघटकतयैव निरुक्ततर्कस्याऽवश्यकत्वात् । एतच्चाग्रे स्फुटीभविष्यति । न च वह्न्यसमवहिताजन्यत्वस्य पक्षविशेषणत्वमङ्गीकुर्वतामुपाध्यायानां मते आपाद्याभावेन वह्निसमवहितजन्यत्वमात्रेणापि सिद्धिः स्यादिति वाच्यम्, अनुमितेर्व्यापकतावच्छेदकतादृशान्यतरत्वप्रकारकत्वनियमस्यैव स्वीकरणीयत्वात् ।

न चैवं वह्न्यसमवहितजन्यत्वाभाववह्निसमवहितजन्यत्वाभावान्यतरस्यैवापादकत्वमुच्यतामिति वाच्यं, तथा सति तादृशान्यतरस्य केवलान्वयितया तदभावस्याऽपाद्याभावेन धूमादौ सिद्ध्यनुपपत्तेः । न च तथापि वह्न्यसमवहितजन्यत्ववह्निसमवहितजन्यत्वोभयाभावस्यैवापादकत्वे न दोष इति वाच्यं, तादृशोभयाभावस्य धूमादौ सत्त्वेन तदभावस्यापि आपाद्याभावेन तत्र सिद्ध्यसंभवात्, अधिकमभिहितं प्रागिति ध्येयम् ।

टीकायां यत्तर्केति । यस्य 'धूमो यदीत्या'दि तर्कस्य कारणीभूतापाद्यव्यतिरेकनिश्चयाद्यनुत्पादप्रयोजकीभूताऽवह्नेरेव भविष्यतीत्यादिसंशयसामान्यमित्यर्थः । तर्काभावेति । तादृशशङ्कानुत्पादप्रयोजकत्वेनाभिमतस्य तर्कस्याभावातिरिक्तं यत्तादृशशङ्काकारणं वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानाभावादिरूपं तत्प्रतियोगिकाभावाद् वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानादित एवेत्यर्थः । पञ्चम्यर्थः प्रयुक्तत्वम्, अन्वयश्चास्यानुत्पादरूपानवतारे । एवकारात्तर्कस्य तादृशशङ्काविघटकत्वव्यवच्छेदः । पूर्वं=तादृशतर्काव्यवहितपूर्वकालावच्छे-

"धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यान्नोत्पन्नः स्यात्"

*धूम इति* । धूमो यदि वह्न्यसमवहितजन्यभिन्नत्वविशिष्टवह्निसमवहितजन्यभिन्नत्ववान् स्यात् उत्पन्नत्वाभाववान् स्यादित्यर्थः । विशिदेन । नावतरति=नोत्पद्यते तादृशशङ्कासामान्यमितिपूर्वेणान्वयः । उत्पत्त्यभावाश्रयतावदिति यावत् , धात्वर्थस्यावतरणस्योत्पत्तिरूपत्वात् , तत्र च नञर्थोन्वयबलादुत्पत्त्याभावोऽर्थः । तदन्विताख्यार्थाश्रयत्वस्य तादृशशङ्कासामान्ये लाभ इति तत्त्वम् ।

नच यत्तर्कविघटकशङ्कासामान्यमित्यत्र सामान्यपदं व्यर्थं, यत्तर्कविघटकशङ्केत्यस्यैव सम्यक्त्वादिति वाच्यं, तदनुपादाने यत्किञ्चिच्छङ्कायास्तर्काभावातिरिक्तकारणप्रतियोगिकाभावान्निवृत्तावपि शङ्कान्तरनिवृत्त्यर्थं तर्कानुसरणेऽनवस्थाया दुर्वारतापत्तेरतस्तर्कविघटकशङ्कात्वव्यापकतर्काभावातिरिक्तकारणप्रतियोगिकाभावप्रयुक्तानुत्पादलाभार्थं सामान्यपदोपादानम् । एतेन यादृशस्थले शङ्काचतुष्टयस्यैव तर्कविघटकत्वं तादृशस्थले शङ्कात्रयस्यापि शङ्कासामान्यपदेनोपादातुं शक्यतया तादृशङ्कात्रयसामान्यस्य तर्काभावातिरिक्तकारणप्रतियोगिकाभावादनुत्पादेऽपि अपरशङ्कानुत्पादार्थं तर्कान्तरस्यावश्यकत्वे सामान्यपदोपादानेऽपि अनवस्थायाः परिहारो दुर्वार इति पूर्वपक्षोऽपि निरस्तः । न च तर्काभावातिरिक्तत्वं तादृशसंशयकारणविशेषणमनर्थकमिति वाच्यं, तादृशविशेषणानुपादाने तर्काभावस्यापि निरुक्तसंशयकारणतया तत्प्रतियोगिकाभावरूपतर्कात्संशयनिवृत्तावनवस्थायाः परिहारासंभवापत्तेः । न च कारणपदं व्यर्थं, तर्काभावातिरिक्तप्रतियोगिकाभावादेवेत्यस्यैव सम्यक्त्वादिति वाच्यं, तर्काभावातिरिक्तघटप्रतियोगिकाभावप्रयुक्तत्वस्य तादृशशङ्कानुत्पादे बाधात्कारणपदोपादानस्यावश्यकत्वात् । यद्वा कारणपदानुपादाने पुनरनवस्थाप्रसङ्गः स्याद् भेदाभावस्य भेदप्रतियोगिस्वरूपत्वमते तर्कभेदस्यापि तर्काभावातिरिक्ततया तत्प्रतियोगिकाभावात्तर्कादेव संशयानुत्पादस्य आवश्यकत्वात् तर्कप्रयुक्तशङ्कानुत्पादेऽनवस्थायाः कथामात्रेण वारयितुमशक्यत्वादिति ध्येयम् । तर्कभिन्नादेव नावतरतीति कथं नोक्तमित्याशङ्कनमप्ययुक्तं, तर्कभिन्नघटादिप्रयुक्तत्वस्य शङ्कानुत्पादे बाधात् । तर्काभावातिरिक्तकारणाभावादेव नावतरतीत्यनभिधानन्तु यत्किञ्चित्तादृशकारणाभावप्रयुक्तत्वस्य शङ्कानुत्पादे लाभार्थम् , अन्यथा तर्काभावातिरिक्तकारणसामान्याभावस्य तर्कपूर्वमवस्थानमेवासम्भवि स्यात् तर्काभावातिरिक्तसंशयकारणस्य धर्मिज्ञानादेस्तर्कपूर्वं सत्त्वस्यावश्यकत्वादिति ध्येयम् ।

धूमो यदीति । न च वह्न्यसमवहितजन्यत्वाभावविशिष्टवह्निसमवहितजन्यत्वाभावस्यैवापादकत्वसम्भवे उभयत्र भेदपदोपादानं व्यर्थमिति वाच्यम् , अत्यन्ताभावस्याऽव्याप्यवृत्तितामते वह्निशून्यताकालीनवह्निमद्देशोत्पन्नघटादौ व्यभिचारापत्तेः । तादृशघटानधिकरणदेशावच्छेदेन वह्न्यसवहितजन्यत्वाभावस्य तत्र सत्त्वेन आपादकस्य सत्त्वात् प्रथमभेदपदोपादानस्यावश्यकत्वात् । द्वितीयभेदपदानुपादाने वह्न्यसमवहितजन्यभिन्नेऽप्यालोकादौ वह्निसमवहितजन्यत्वाभावस्यालोकानधिकरणदेशावच्छेदेन सत्त्वात्तत्र मूलशैथिल्यवारणसम्भवात् तदुपादानम् । भेदस्तु न व्याप्यवृत्तिरतो न तत्र तत्र व्यभिचारः । तद-

ष्टान्तं द्वितीयं भिन्नत्वविशेषणम्। जन्यं हि जगति वस्तुद्वयं—वह्न्यसमवहितजन्यं, तत्समवहितजन्यञ्च। तत्रायं चेदुभयजन्य एव न स्यात् तदा जन्य एव न स्यादिति भावः।

ननु नायं वह्निधूमव्याप्तिग्रहोपयोगी, वह्निव्यभिचारित्वापादकतर्कस्यैव तथात्वात्। न चातथात्वेऽपि क्षतिविरह इति वाच्यम्, तादृशवह्निधूमव्याप्तिग्राहकतर्क एवानवस्थाप्रदर्शनादिति चेत्—न 'तस्यापि परम्परया वह्निधूमव्याप्तिग्रहोपयोगित्वात्। तथाहि—धूमो यदि वह्निव्यभिचारी स्यात्, वह्निजन्यो न स्यादिति वह्निधूमव्याप्तिग्राहकस्तर्कः, तत्र च वह्निजन्यत्वरूपापाद्यव्यतिरेकनिश्चयो हेतुः, बाधबुद्धेस्तार्किकबुद्धौ हेतुत्वात्।

व्याप्यवृत्तित्वे वह्न्यसमवहितजन्यो यो यः तत्तद्व्यक्तित्वावच्छिन्नभेदकूटविशिष्टस्य वह्निसमवहितजन्यो यो यस्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटस्यापादकत्वसम्भवेन पूर्वोक्तदोषाणां नावकाशः। वस्तुतस्तादृशजन्यत्वस्याखण्डोपाधित्वमते जन्यत्वत्वाप्रवेशकृतलाघवमभिप्रेत्य भेदपदद्वयोपादानम्, अन्यथा तादृशजन्यत्वाभावविशिष्टस्य वह्निसमवहितजन्यत्वाभावस्यापादकत्वे जन्यत्वत्वस्य प्रवेशे महागौरवं स्यादित्यपि वदन्ति।

विशिष्टान्तं=वह्न्यसमवहितजन्यभिन्नत्वम्। **द्वितीयेति**। वह्निसमवहितजन्यभिन्नत्वविशेषणमित्यर्थः। भावमाह—**जन्यं हीति**। तत्र=जन्याजन्ययोर्मध्ये। अयं=धूमः उभयजन्य एव न स्याद्=वह्न्यसमवहितजन्यवह्निसमवहितजन्य एव न स्यात्। जन्य एव न स्याद्=जन्यत्वाभाववानेव स्यात्। मूलोक्ततर्कस्य वह्निधूमव्याप्तिग्रहोपयोगित्वं प्रदर्शयितुं शङ्कते—**नन्विति**। अयं=मूलोक्ततर्कः। **वह्निव्यभिचारित्वेति**। वह्निव्यभिचारी स्यादित्यादिवक्ष्यमाणतर्कस्यैवेत्यर्थः। तथात्वात्=वह्निधूमव्याप्तिग्रहोपयोगित्वात्। ननु अनवस्थापरिहारप्रदर्शनस्यैवोद्देश्यतया निरुक्ततर्कस्य वह्निधूमव्याप्तिग्रहानुपयोगित्वेऽपि न दोषः निरुक्ततर्कस्यापि तर्कान्तराप्रयोजकतयैवानवस्थापरिहारसम्भवादित्याशङ्कते—**न चेति**। वाच्यमिति परेणान्वयः। समाधत्ते—**तादृशेति**। वक्ष्यमाणे वह्निधूमव्याप्तिग्रहप्रयोजकीभूते तर्क एवेत्यर्थः। **अनवस्थाप्रदर्शनादिति**। चार्वाकमतसिद्धाया अनवस्थायाः प्रदर्शनादित्यर्थः। नन्वित्यादेरुत्तरम्—**इति चेन्नेति**। तस्यापि=धूमो यदीत्यादिमूलोक्ततर्कस्यापि। निरुक्ततर्कस्य वह्निधूमव्याप्तिग्रहोपयोगित्वं प्रदर्शयति—**तथा हीति**। धूमो वह्निव्याप्य इत्याकारकव्याप्तिग्रहे धूमो वह्निव्यभिचारी नवेति संशयः प्रतिबन्धकः, तादृशसंशयरूपप्रतिबन्धकनिवृत्तिस्तु धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादि' त्याकारकतर्केण भवति। एवञ्च निरुक्ततर्कस्यैव तादृशव्यभिचारसंशयानुत्पादद्वारा वह्निधूमव्याप्तिग्राहकत्वं, तादृशतर्के वह्निजन्यत्वाभावाभाववह्निजन्यत्वरूपापाद्यव्यतिरेकनिश्चयो हेतुः, बाधनिश्चयस्य तर्कं प्रति जनकत्वात्। तादृशवह्निजन्यत्वनिश्चये स्वातन्त्र्येण संशयसामग्रीसम्पादकतया वा 'धूमो वन्हिजन्यो न वे'त्याकारकसंशयः प्रतिबन्धकः। निरुक्तसंशयं प्रति तु 'धूमो यदि वह्न्यसमहिते'त्यादितर्कस्य वन्हिजन्यत्वनिश्चयं सम्पाद्य प्रतिबन्धकत्वम्। तथा च निरुक्तमूलोक्ततर्केण वन्हिजन्यत्वनिश्चयस्ततस्तादृशनिश्चयाद् धूमो वन्हिजन्यो न वेत्याकारकशङ्काया अनुत्पादः। तादृशशङ्कानुत्पादात् पूर्वोक्तवह्निजन्यत्वनि-

तस्मिंश्चान्वयव्यतिरेकाभ्यां प्रत्यक्षतो वह्निजन्यत्वनिर्णये वह्निजन्यत्वशङ्का विरोधिनी संशयसमाग्रीसम्पादकत्वात्, तच्छङ्काविरोधी चायं तर्क इति । अत्र च वह्निशून्यत्वदशायां वह्निमद्देशोत्पन्ने घटादौ मूलशैथिल्यवारणाय विशिष्टान्तं द्वितीयभिन्नत्वविशेषणम् , तत्प्रतियोगिविशेषणत्वे तद्दोषतादवस्थात् । वह्निं विनानुत्पद्यमानत्वं तदर्थः ।

---

श्चयरूपापाद्यव्यतिरेकनिश्चयेन धूमो यदि वह्निव्यभिचारी स्यादित्यादितर्कोत्पादः, तादृशतर्केण व्यभिचारशङ्कानिवृत्तिस्ततो निरङ्कुशेन वह्निधूमव्याप्तिग्रहस्योत्पत्तिरितिमूलोक्ततर्कस्य परम्परया वन्हिधूमव्याप्तिग्राहकत्वं निर्विवादमित्येवं 'तच्छङ्काविरोधी चायं तर्क' इत्यन्तसमुदितग्रन्थतात्पर्यम् ।

वह्न्यसमवहितजन्यभिन्नत्वरूपसत्यन्तार्थस्यानुपादाने केवलवह्निसमवहितजन्यभिन्नत्वस्यापादकत्वे वह्निशून्यतादशायां वह्निमति देशे समुत्पन्ने घटविशेषे व्यभिचारः वह्निसमवहितजन्यभिन्नत्वरूपापादकस्य तत्र सत्त्वेन तत्रोत्पन्नत्वाभावरूपापाद्यस्य विरहादतो विशिष्टान्तं, तदुपादाने तु न तत्र व्यभिचारः, वह्न्यसमवहितजन्यत्वस्यैव तादृशघटविशेषे सत्त्वेन वह्न्यसमवह्नितजन्यभिन्नत्वरूपविशेषणाभावाद्विशिष्टापादकस्य तत्र विरहात् । आपादकवति आपाद्याभावसत्त्वेनैव व्यभिचारस्याऽवश्यकत्वादित्याह—**अत्रचेति** । निरुक्तापादके चेत्यर्थः । घटकत्वं सप्तम्यर्थः, अन्वयश्चास्य विशिष्टान्तमित्यनेन । वह्निसत्त्वदशायां वह्निमद्देशोत्पन्नघटादौ वह्निसमवहितजन्यभिन्नत्वविरहाद्विशिष्टान्तव्यावृत्तिर्न सम्भवतीत्यतो वह्निशून्यतादशायामित्युक्तम् । **मूलशैथिल्येति** । व्यभिचारवारणायेत्यर्थः । विशिष्टान्तं = वह्न्यसमवहितजन्यभिन्नत्वविशिष्टान्तम् । **द्वितीयेति** । वन्हिसमवहितजन्यभिन्नत्वविशेषणमित्यर्थः ।

ननु वह्न्यसमवहितजन्यभिन्नत्वस्य सामानाधिकरण्यसम्बन्धेन द्वितीयभिन्नत्वविशेषणत्वापेक्षया लाघवात्स्वरूपसम्बन्धेन द्वितीयभिन्नत्वप्रतियोगिवह्निसमवहितजन्यविशेषणत्वमेव समुचितमित्यत आह—**तत्प्रतियोगीति** । वह्निसमवहितजन्यभिन्नत्वप्रतियोगिवह्निसमवहितजन्यविशेषणत्व इत्यर्थः । **तद्दोषतेति** । तादृशघटविशेषादौ व्यभिचारतादवस्थ्यादित्यर्थः । तथा च वह्न्यसमवहितजन्यभिन्नत्वविशिष्टं यद् वह्निसमवहितजन्यं तद्भिन्नत्वस्यापादकत्वे वह्निशून्यताकालीनवह्निमद्देशोत्पन्नघटादौ व्यभिचारः वह्न्यसमवहितजन्यनिरुक्तघटभिन्नं यद्वह्निसमवहितजन्यं नान्तरीयकं घटादिकं तद्भिन्नत्वरूपापादकस्य निरुक्तघटविशेषे सत्त्वेन तत्रोत्पन्नत्वाभावरूपापाद्यस्यासत्त्वात् , अतो वह्नसमवहितजन्यभिन्नत्वं सामानाधिकरण्यसम्बन्धेन वह्निसमहितजन्यभिन्नत्वस्यैव विशेषणमिति भावः । ननु वह्न्यसमहितजन्यभिन्नत्वं यदि वह्न्यभाववद्देशोत्पत्तिकान्यत्वं तदा पूर्वोक्तघटविशेषे व्यभिचारो दुर्वारः वह्न्यभाववद्देशोत्पत्तिकान्यत्वस्य वह्निसमवहितजन्यभिन्नत्वस्य च तत्र सत्त्वेन विशिष्टापादकस्य तत्र सत्त्वादत आह—**वह्निं विनेति** । वह्निं विनोत्पद्यमानं यत्तदन्यत्वमित्यर्थः । तदर्थः = विशिष्टान्तदलस्यार्थः । तथा च वह्निं विनोत्पद्यमानभिन्नत्वस्य निरुक्तघटे विरहाद्विशेषणाभावेन विशिष्टापादकस्य तत्र सत्त्वं सम्भावितमपि नास्तीत्याशयः ।

**स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितपूर्वक्षणकं यद्यत्तदन्यत्वमिति तु निष्कर्षः। स्वपदं = अन्यत्वप्रतियोगिपरम्।**

**अन्यथा इदानीन्तनघटादेः सामग्रीकालेऽपि कुत्रचिद्देशे वह्निसत्त्वेन मूलशैथिल्यतादवस्थ्यात्, महाप्रलये मानाभावात् खण्डप्रलयेऽपि**

---

नन्वेवमपि महाप्रलयानभ्युपगन्तृमते तादृशवह्निं विनोत्पद्यमानभिन्नत्वमप्रसिद्धं सर्वस्यैव जन्यवस्तुनः पूर्वक्षणे कुत्रचिद्देशे वह्निसत्त्वात्, अत आह-**स्वसमानाधिकरणेति**। स्वाधिकरणे वर्तमानो यो वह्निस्तदन्यत्ववत्स्वाऽव्यवहितपूर्वक्षणं यस्य स्वस्य एवम्भूतं यद्यत्स्वं तदन्यत्वं वह्न्यसमवहितजन्यभिन्नत्वमित्यर्थः। अत एवोक्तं स्वपदमन्यत्वप्रतियोगिपरमिति। एतादृशं स्वं वह्निशून्यतादशायां वह्निमद्देशोत्पन्नघटादिकमेव। तादृशघटाव्यवहितपूर्वक्षणस्य तादृशघटादिसमानाधिकरणवह्निमदन्यत्वादिति तादृशस्वात्मकघटादिभेदस्य तत्र विरहेण विशेषणदलस्य तादृशघटादावसत्त्वं बोध्यमतो न तत्र व्यभिचारः। वह्निव्यधिकरणघटादौ व्यभिचारस्तु स्वयमेवाग्रे वारयिष्यते। अत्र स्वसामानाधिकरण्यं वह्नावुपलक्षणविधयैव वक्तव्यम्, अन्यथा वह्निशून्यतादशायां वह्निमद्देशोत्पन्नघटादेरधिकरणे वह्न्यसत्त्वेन तस्य स्वपदेन धर्तुमशक्यतया तत्र व्यभिचारतादवस्थ्यं स्यादिति ध्येयम्।

वह्नौ स्वसामानाधिकरण्यनिवेशव्यावृत्तिमाह—**अन्यथेति**। स्वसामानाधिकरण्यानिवेश इत्यर्थः। इदानीन्तनघटादेः = अधुना वह्निमद्देशोत्पन्नघटादेः, नतु वह्निव्यधिकरणघटादेः, वह्निव्यधिकरणघटादौ आपादकसत्त्वेऽपि वक्ष्यमाणवह्निसमानाधिकरणत्वविशिष्टोत्पन्नत्वस्याभावस्यापाद्यस्य तत्र सत्त्वेन व्यभिचारवारणसम्भवात् स्वसामानाधिकरण्यदलव्यावृत्तेस्तत्रासङ्गतत्वापत्तेः। सामग्रीकाले=तादृशघटादेः सामग्रीमति स्वाव्यवहितपूर्वक्षणे। कुत्रचिद्देशे=देशान्तरे वह्निसत्त्वेन=तादृशघटाद्यव्यवहितपूर्वक्षणस्य वह्निमत्त्वेन। **मूलशैथिल्यतादवस्थ्यादिति**। व्यभिचारतादवस्थ्यादित्यर्थः। तथा च स्वसामानाधिरण्यस्य वह्नावविवक्षणे वह्निशून्यतादशायां वह्निमद्देशोत्पन्नघटादौ व्यभिचारः वह्निमदन्यस्वाव्यहितपूर्वक्षणकं न तादृशघटादिकं भवितुमर्हति तादृशघटाद्यव्यवहितपूर्वक्षणस्य कुत्रचिद्देशे वह्निसत्त्वेन वह्निमत्तया वह्निमदन्यत्वविरहात्। अपितु महाप्रलय एव तादृशं स्वं, तदव्यवहितपूर्वक्षणस्य वह्निमदन्यत्वात्। एवञ्च वह्निमदन्यस्वाव्यवहितपूर्वक्षणको यो महाप्रलयस्तदन्यत्वस्य वह्निशून्यतादशायां वह्निमद्देशोत्पन्नघटादौ सत्त्वेन वह्न्यसमवहितजन्यभिन्नत्वविशिष्टवह्निसमवहितजन्यभिन्नत्वरूपविशिष्टापादकवति तादृशघटे उत्पन्नत्वाभावरूपापाद्यविरहाद् व्यभिचारस्तादृशवह्नौ स्वसामाधिकरण्यनिवेशे तु स्वपदेन निरुक्तघटस्यैव धर्त्तुं शक्यतया न तत्र व्यभिचार इति भावः।

ननु महाप्रलयासत्त्वपक्षे स्वपदेन महाप्रलयोपादानासम्भवान्न तादृशघटे व्यभिचार इत्यत आह—**महाप्रलय इति**। **मानाभावादिति**। नव्यनैयायिकैर्युगपद्ब्रह्माण्डानां प्रलयो नाभ्युपगम्यत इति भावः। ननु तथापि खण्डप्रलयस्य नव्यनैयायिकाऽसम्मततया स्वपदेन खण्डप्रलयमादायैव तादृशघटविशेषे व्यभिचारः संभवतीत्यत आह—**खण्डप्रल-**

ब्रह्माण्डान्तरे वह्निसत्त्वात् सामग्रीमात्रस्यैव वह्न्यधिकरणक्षणवृत्तित्वे-नाप्रसिद्धिप्रसङ्गाच्च । न तु वन्ह्यघटितसामग्र्यजन्यत्वं तत्, धूमे प्राक् तदनिश्चयात्, आपाद्याभावेनापादकाभावसाधने विशेष्यविरहप्रकारकसिद्ध्यर्थं तन्निश्चयस्यापेक्षितत्वात् । वह्न्यसमवहिताजन्ये

येऽपीति । ब्रह्माण्डान्तरे वह्निसत्त्वादिति । तथा च तत्पूर्वक्षणस्यापि वह्निमत्त्वात् स्वपदेन तस्यापि ग्रहणं न सम्भवतीति हृदयम् । सामग्रीमात्रस्यैवेति । जन्यजातस्येत्यादिः । वह्न्यधिकरणेति । जन्यजातवस्तुनः सामग्र्यधिकरणस्य वन्हिमत्त्वेन सर्वस्यैव पूर्वक्षणस्य वन्हिमत्त्वादित्याशयः । अप्रसिद्धिप्रसङ्गाच्चेति । वह्निमदन्यस्वाव्यवहितपूर्वक्षणकत्वस्य कुत्रापि जन्येऽप्रसिद्धतया तादृशक्षणकान्यत्वरूपवह्न्यसमवहितजन्यभिन्नत्वस्याऽप्रसिद्धेरिति भावः । न च स्वसामानाधिकरण्यमनिवेश्य स्वाधिकरणदेशावच्छिन्नवन्हिमदन्यत्वमेव वन्ह्यसमवहितजन्यभिन्नत्वमस्तु तावतैव तादृशघटविशेषे व्यभिचारवारणं सम्भवतीति वाच्यं, भेदस्य व्याप्यवृत्तितया तादृशवन्हिमदन्यत्वे स्वाधिकरणदेशस्याऽवच्छेदकत्वाऽसम्भवात् । न च तथापि स्वाधिकरणदेशावच्छिन्नवन्ह्यभाववत्स्वाव्यवहितपूर्वक्षणकान्यत्वमेव तादृशविशिष्टान्तमिति वाच्यं, तथा सति गौरवाद् यथासन्निवेशे वैयर्थ्याभावाच्च । ननु लाघवाद् वह्न्यघटितसामग्रीजन्यभिन्नत्वमेव वन्ह्यसमवहितजन्यमत्वमस्तु वन्हिशून्यतादृशायां वन्हिमद्देशोत्पन्नघटादे वह्न्यघटितसामग्रीजन्यतयैव तादृशसामग्रीजन्यभिन्नत्वविरहेण तत्रापादकविरहादेव व्यभिचारवारणसम्भवादित्यत आह—नतु वह्न्यघटितेति । वन्ह्यघटितसामग्रीजन्यं यत्तद्भिन्नत्वमित्यर्थः । तत्=वन्ह्यसमवहिताजन्यत्वम् । निषेधे हेतुमाह—धूम इति । प्राक्=वन्हिनिष्ठधूमकारणतानिश्चयात् पूर्वम् । वन्हौ धूमकारणत्वसन्देहे धूमसामग्र्यां वन्ह्यघटितत्वसंदेहस्याऽवश्यकत्वे धूमे वन्ह्यघटितसामग्र्यजन्यत्वस्यापि सन्दिग्धत्वादिति भावः । ननु तर्कपूर्वं धूमे वन्ह्यघटितसामग्र्यजन्यत्वरूपविशेषणवत्तानिश्चयस्याऽसत्त्वे का क्षतिरित्यत आह—तदनिश्चयादिति । निरुक्ततर्कपूर्वं धूमे वन्ह्यघटितसामग्र्यजन्यत्वरूपविशेषणवत्त्वस्यानिश्चयादित्यर्थः । आपाद्याभावेन=उत्पन्नत्वाभावाभावेनोत्पन्नत्वेन । आपादकाभावसाधने=निरुक्तवह्न्यसमवहितजन्यभिन्नत्वविशिष्टवन्हिसमवहितजन्यभिन्नत्वाभावसाधने । विशेष्येति । केवलविशेष्यीभूतवन्हिसमवहितजन्यभिन्नत्वाभावप्रकारकानुमित्यर्थमित्यर्थः । तन्निश्चयस्य=वन्ह्यघटितसामग्र्यजन्यत्वरूपविशेषणवत्तानिश्चयस्य । अपेक्षितत्वादिति । आपाद्याभावेनापादकाभावस्य यस्य सिद्धिर्भवति तदभावकोटिकसंशयं प्रति तर्को विरोधीति नियमः । एवञ्च धूमे तर्कात्पूर्वं यदि वन्ह्यसमवहिताजन्यत्वस्य निरुक्तस्य निश्चयो न भवति तदा उत्पन्नत्वरूपापाद्याभावेन केवलवन्हिसमवहितजन्यभिन्नत्वाभावस्य वन्हिसमवहितजन्यत्वस्य सिद्धिर्न भवितुमर्हति, तस्याऽसिद्धौ च निरुक्तमूलोक्ततर्केण वन्हिसमवहितजन्यत्वाभावरूपवन्हिजन्यत्वाभावकोटिकसंशयस्यानुत्पादासम्भवे तेन संशयेन वन्हिजन्यत्वनिश्चयप्रतिबन्धसम्भवात्तादृशनिश्चयानुत्पत्तौ आपाद्यव्यतिरेकनिश्चयाभावेन धूमो यदि वन्हिव्यभिचारी स्याद वन्हिजन्यो न स्यादित्यादितर्कानुत्पत्तौ वन्हिधूमव्याप्तिग्रह एव न स्यादिति हृदयम् ।

वन्हिसमवहितजन्यभिन्नत्वरूपविशेष्यदलव्यावृत्तिमाह—वह्न्यसमवहितेति ।

वह्निजन्यालोकादौ मूलशैथिल्यवारणाय विशेष्यदलम् । न च चरमसमव-हितपदं व्यर्थं वह्निजन्यत्वाभावस्यैव सम्यक्त्वादिति वाच्यम् ; वह्न्यजन्ये वह्निसमवधाननियतोत्पत्तिके घटादिविशेषे मूलशैथिल्यापत्तेः । वह्निस-मवहितजन्यत्वञ्च वह्निकालीनसामग्रीजन्यत्वम् . स्वसमानाधिकरणव-

---

स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितपूर्वक्षणान्य इत्यर्थः । वह्निजन्येति । आलोकादौ वह्निजन्यत्वमुक्त्वा आलोकपूर्वक्षणस्य वन्हिमत्त्वं सूचितम् , तेन विशेषणदलसत्त्व-मालोकादौ स्फुटीकृतम् । स्वसमानाधिकरणवन्हिमदन्येत्यादौ स्वपदेनालोकस्य धर्तुम-शक्यत्वादिति भावः । मूलशैथिल्यवारणाय=व्यभिचारवारणाय । विशेष्यदलमि-ति । तथा च वन्हिसमवहितजन्यभिन्नत्वरूपविशेष्यदलानुक्तौ केवलवन्ह्यसमवहि-ताजन्यत्वस्य यथोक्तस्यापादकत्वे वन्हिजन्यालोकादौ व्यभिचारः स्वसमानाधिकर-णवन्हिमदन्यस्वाव्यवहितपूर्वक्षणकं यत्तादृशवन्हिमद्देशोत्पत्तिकघटादिकं तदन्यत्वस्य तत्र सत्त्वेनोत्पन्नत्वाभावरूपापाद्यस्य तत्र विरहात् । विशेष्यदलोक्तौ तु न वन्हि-जन्यालोकादौ व्यभिचारः तत्र वन्हिसमवहितजन्यत्वस्यैव सत्त्वेन तद्भिन्नत्व-विरहेण विशिष्टापादकस्यालोकादौ विरहादित्याशयः । ननु वन्ह्यसमवहितजन्यभिन्नत्व-घटकासमवहितप्रतियोगिसमवहितपदानुपादाने वन्ह्यघटितसामग्र्यजन्यत्वनिवेशे पूर्वं दोषस्याभिहितत्वेऽपि चरमं वन्हिसमवहितजन्यभिन्नत्वघटकसमवहितपदं व्यर्थं वन्हि-जन्यभिन्नत्वस्यैव तादृशविशेषणविशिष्टस्यापादकत्वसम्भवेन सामञ्जस्यादित्याशङ्कते—नचेति । वाच्यमितिपरेणान्वयः । वह्निजन्यत्वेति । वन्हिजन्यभिन्नत्वस्यैव वन्हिज-न्यत्वाभावरूपत्वादिति भावः । वह्निजन्यत्वाभावस्य स्वसमानाधिकरणवन्हिमदन्य-स्वाव्यवहितपूर्वक्षणकान्यत्वविशिष्टस्यापादकत्वे यादृशघटस्य पूर्वक्षणे वह्निसत्त्व एवोत्पत्ति स्तादृशवन्हिनान्तरीयके घटे व्यभिचारः तत्र विशेषणदलस्य वन्हिजन्यत्वाभावरूपवि-शेष्यदलस्यापि सत्त्वेनापादकसत्त्वादापाद्यस्योत्पन्नत्वाभावस्य तत्र विरहादतो वन्हिज-त्वाभावस्य विशेष्यदलत्वं परित्यज्य वन्हिसमवहितजन्यभिन्नत्वस्यापादकत्वं वक्तव्यम् । उक्तघटे तु वन्हिसमवहितजन्यत्वस्य सत्त्वेन तादृशजन्यभिन्नत्वस्याऽसत्त्वान्न व्यभिचार इति समाधत्ते-वह्न्यजन्य इति । वन्हिजन्यत्वाभाववतीत्यर्थः । तादृशनान्तरीयक-घटस्य पूर्वक्षणे वन्हिसत्त्वेऽपि तस्य वन्ह्यजन्यत्वमक्षतमिति हृदयम् । वह्निसमवधाने-ति । वन्हिमत्स्वाव्यवतिपूर्वक्षणकघटादिविशेषइत्यर्थः ।

ननु वन्हिसमवहितजन्यत्वं यदि वन्हिकालीनसामग्रीजन्यत्वं तदा जन्यमात्रस्यैव सामग्रीक्षणे वन्हिसत्त्वेन वन्हिकालीनसामग्रीजन्यतया धूमादावपि वन्हिकालीनसा-मग्रीजन्यत्वनिश्चयसम्भवात्तर्कवैफल्यं स्यात् विशेष्याभावमात्रस्य धूमादौ निश्चयार्थमेव निरुक्ततर्कस्याऽवश्यकत्वादित्याशयेनाह—स्वसमानाधिकरणेति । स्वं जन्यत्वे-नाभिमतम् , तादृशजन्यव्यक्तिरूपस्वसमानाधिकरणो यो वन्हिस्तद्वत् स्वाव्यवहित पूर्वक्षणं यस्य स्वस्य तादृशं स्वं वह्निसमवहितजन्यं, तद्भिन्नत्वमेव विशेष्यदलं पर्यवसितम् । तथा च धूमो यदि स्वसमानाधिकरणवन्हिमदन्य स्वाव्यवहितपूर्वक्षणकान्यत्वविशिष्टस्वस-मानाधिकरणवन्हिमत्स्वाव्यवहितपूर्वक्षणकान्यत्ववान् स्यात् तदोत्पन्नत्वाभाववान् स्यादित्येव

ह्निमत्स्वाव्यवहितपूर्वक्षणकत्वमिति तु निष्कर्षः। अन्यथा इदानीन्तनजन्यमात्रस्यैव वह्न्यधिकरणक्षणवृत्तिसामग्रीजन्यतया पक्षीभूतधूमेऽपि तादृशसामग्रीजन्यत्वनिश्चयसत्त्वेन तर्कवैफल्यापत्तेः। न तु वह्निघटितसामग्रीजन्यत्वं तत्, तथा सति वह्न्यजन्ये वह्निसमवधाननियतोत्पत्तिकघटादिविशेषे मूलशैथिल्यापत्तेः।

वह्निसमानाधिकरणत्वे सतीत्यनेन चापाद्यप्रतियोगी विशेषणीयस्तेन वह्निव्यधिकरणे वह्निजन्यरूपादौ वह्निव्यधिकरणे घटादौ च न मूलशैथि-

---

तर्क आदरणीय इति भावः। वह्नौ स्वसामानाधिकरण्यनिवेशव्यावृत्तिमाह—अन्यथेति। स्वसामानाधिकरण्यानिवेशे इत्यर्थः। इदानीन्तनेति। कुत्रचिद्देशे वह्निसत्त्वेनेत्यादिः। तर्कवैफल्यापत्तेरिति। तथा चोक्ततर्कस्य वह्निसमवहितजन्यत्वनिश्चयप्रयोजकतया तर्कपूर्वं तादृशनिश्चयस्य स्वभावत एव धूमादौ सत्त्वेन निरुक्तर्कानुसरणमनुचितमिति भावः। ननु वह्निघटितसामग्रीजन्यत्वमेव वह्निसमवहितजन्यत्वमस्तु किं निरुक्तरीत्या गुरुतरनिवेशेनेत्यत आह—नन्विति। तथा च वह्निघटितसामग्रीजन्यभिन्नत्वस्य विशेष्यदलस्वरूपत्वे वह्निनान्तरीयकघटे व्यभिचारः तत्र वह्निघटितसामग्रीजन्यभिन्नत्वस्य सत्त्वात्, आपाद्यस्योत्पन्नत्वाभावस्य तत्र विरहात्। स्वसमानाधिकरणवह्निमत्स्वाव्यवहितपूर्वक्षणकान्यत्वस्य विशेष्यदलार्थस्य तादृशे घटे सत्त्वमेव न संभवति स्वपदेन तादृशघटस्यैवोपादातुं शक्यत्वान्न तादृशघटे व्यभिचार इत्याशयः। नन्वेवं वह्निव्यधिकरणे घटे व्यभिचारस्तस्य स्वपदेन धर्तुमशक्यतया स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितपूर्वक्षणकान्यत्वेन स्वसमानाधिकरणवह्निमत्स्वाव्यवहितपूर्वक्षणकान्यत्वेन चापादकवत्त्वात् तत्र चोत्पन्नत्वाभावरूपापाद्यविरहात्। एवं वह्निजन्यरूपादावपि व्यभिचारः तादृशरूपसमानाधिकरणत्वस्य वह्नौ विरहेण तस्यापि स्वपदेनोपादातुमशक्यत्वादित्यत आह—वह्निसमानेति। वह्न्यधिकरणवृत्तित्वविशिष्टत्वे सतीत्यर्थः। आपाद्यप्रतियोगी=उत्पन्नत्वम्। विशेषणीय इति। वह्न्यधिकरणवृत्तित्वविशिष्टस्योत्पन्नत्वस्याऽभावस्यैवापाद्यत्वमिति हृदयम्। न मूलशैथिल्यमिति। तथा च न वह्निव्यधिकरणघटादौ व्यभिचारः तत्र यथोक्तापादकस्य सत्त्वेऽपि वह्न्यधिकरणवृत्तित्वविशिष्टोत्पन्नत्वाभावरूपापाद्यस्यापि तत्र सत्त्वात्। आपादकवत्यापाद्याभावसत्त्वेनैव व्यभिचारः संभवतीति भावः।

केचित्तु स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वस्य सत्यन्तार्थत्वमनुक्त्वा लाघवात्स्वसमानाधिकरणवह्निमदन्यस्वोत्पत्तिकक्षणकान्यत्वस्य तथात्वाभिधानेनैव वह्निशून्यतादशायां वह्निमद्देशोत्पन्नघटादौ व्यभिचारवारणं संभवति तादृशघटे स्वसमानाधिकरणवह्निमदन्यस्वोत्पत्तिक्षणकान्यत्वविरहेण आपादकस्यैव तत्राऽसत्त्वादिति पूर्वपक्षयन्ति। तन्न, यदीयसम्बन्धसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वं नास्ति तस्य तत्समयसम्बन्धः उत्पत्तिरित्यस्यैव स्वोत्पत्तिपदार्थतया वक्तव्यतया तस्याः स्वाधिकरणसमयप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति स्वाधिकरणसमयप्रागभावाधिकरणत्वरूपस्वाव्यवहितप्राक्क्षणत्वापेक्षया गुरुत्वात्। किञ्च स्वसमानाधिकरणवह्निमदन्यस्वोत्पत्तिक्षणकान्यत्वस्य सत्यन्तार्थत्वे यादृशघटस्य पूर्वक्षणे वह्निर्नास्ति किन्तु स्वोत्पत्तिक्षणएव

वह्निर्वर्तते तादृशघटविशेषे व्यभिचारस्तत्र स्वसमानाधिकरणवह्निमदन्यस्वोत्पत्तिक्षणको यो वह्निशून्यताकालीनवह्निमद्देशोत्पन्नो घट स्तदन्यत्वस्य स्वसमानाधिकरणवह्निमत्स्वाव्यवहितप्राक्क्षणकान्यत्वरूपवह्निसमवहितजन्यभिन्नत्वस्य च सत्त्वेन आपादकसत्त्वात्तत्र च निरुक्तापाद्यस्योत्पन्नत्वाभावस्य विरहात् । यद्यपि स्वसमानाधिकरणवन्हिमत्स्वोत्पत्तिक्षणकान्यत्वमेव वन्हिसमवहितजन्यभिन्नत्वं, तथा च नोक्तघटे व्यभिचारः तस्य वन्हिमत्स्वोत्पत्तिक्षणकत्वेन स्वसमानाधिकरणवन्हिमत्स्वोत्पत्तिक्षणकान्यत्वविरहादापादकसत्त्वमेव तादृशघटे न संभवतीति विभाव्यते, तदापि नव्यमते निरुक्तघटे व्यभिचारो दुर्वार एव तन्मते आपाद्यप्रतियोग्युत्पन्नत्वस्यैव विशेषणतायाः सत्यन्ते वक्तव्यतया स्वसमानाधिकरणवन्हिमदन्यस्वोत्पत्तिक्षणकान्यत्वविशिष्टोत्पन्नत्वस्यैव यथोक्तघटे सत्त्वेन निरुक्तोत्पन्नत्वाभावस्य तादृशघटे विरहात् ।न च नव्यमते तादृशस्वोत्पत्तिक्षणकान्यत्वं न सत्यन्तार्थः । अपि तु तादृशवन्हिमदन्यस्वाव्यवहितपूर्वक्षणकान्यत्वमेव तथेति वाच्यं पूर्वाभिहितसत्यन्तार्थस्यैव नव्यमतेऽपि मथुरानाथाभिमतत्वाद् अन्यथा 'तदर्थश्चोक्त एवे' त्यादिग्रन्थस्याऽलग्नतापत्तिः स्यात् । एतेन सत्यन्तार्थस्य तादृशस्वोत्पत्तिक्षणकान्यत्वस्वरूपत्वे अवच्छेरेव भविष्यतीत्यादिशङ्कायास्तादृशस्वाव्यवहितप्राक्क्षणकान्यत्वसंशयस्वरूपतया तस्या निरुक्तसत्यन्तदलप्रतिबन्धकता न संभवतीत्यतः सत्यन्तार्थोऽपि तादृशस्वाव्यवहितप्राक्क्षणकान्यत्वरूप एव वाच्यः निरुक्तसंशयादेः स्वसमानाधिकरणवन्हिमदन्यस्वोत्पत्तिक्षणकान्यत्वकोटिकत्वे 'तस्मात्तदुपादानमेव तादृशशङ्काप्रतिबन्धकमित्या'दिमूलग्रन्थस्यासंगतिः स्यादित्यादि केषाञ्चित्तादृशपूर्वपक्षोत्तरमनुत्तरतयैवास्माभिरुपेक्षणीयमित्यलं पल्लवितेन ।

अथ तर्ककारणयोः पक्षे आपाद्यव्यतिरेकनिश्चयाऽपाद्यव्याप्यापादकवत्तानिश्चययोर्युगपत्समावेशो न संभवति आपाद्यव्यतिरेकप्रकारकबुद्धौ आपाद्यव्याप्यवत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया प्रतिबन्धकत्वादिति चेन्न, बाधनिश्चययवत् तदभावव्याप्यवत्तानिश्चयस्य कार्यसहभावेन प्रतिबन्धकतायाः सर्वाऽसम्मततया तर्कपूर्वमापाद्यव्यतिरेकविषयकसमूहालम्बनापाद्यव्याप्यनिश्चयोत्पत्तिसंभवादिति वदन्ति । यत्तु प्रथममापाद्यव्यतिरेकनिश्चयस्ततस्तादृशव्याप्यवत्ताज्ञानं ततस्तर्क इतिमतं तत्तुच्छं, तर्कपूर्वक्षणे आपाद्यव्यतिरेकनिश्चयसत्त्वे तादृशकारणयोरनाहार्यत्वाऽसंभवात् । केचित्तु आहार्यात्मकतादृशकारणसम्वलनात्तर्क उत्पद्यते तर्ककारणेऽनाहार्यत्वस्यानपेक्षितत्वादित्याहुः ।

नन्वेवमपि आपादके आपाद्यव्याप्यताया आवश्यकतया आपाद्याभावे ऽपि आपादकाभावव्याप्यत्वं निर्विवादमिति तर्कपूर्वमवस्थितस्यापाद्यव्यतिरेकनिश्चयस्यापादकाभावव्याप्यवत्तानिश्चयमुद्रयैवापादककोटिकसंशयप्रतिबन्धकत्वसंभवे तादृशसंशयनिवृत्तिफलकस्य तर्कस्य वैफल्यं स्याद् आपाद्याभावे आपादकाभावव्याप्यत्वग्रहस्याऽनियमेऽपि तर्ककारणापाद्यनिष्ठापादकव्यापकतानिश्चयसहितस्यापाद्यव्याप्यप्रकारकनिश्चयस्यापादककोटिकसंशयप्रतिबन्धकताया वारयितुमशक्यत्वादिति चेन्न, तादृशापाद्यव्यतिरेकनिश्चयनाशकाले तन्मूलकमानसाऽपाद्यव्यतिरेकज्ञानं यादृशस्थले न संभवति तादृशस्थले तर्कसत्त्वदशायां संशयप्रतिबन्धार्थं तर्कस्यावश्यकत्वात् । न च धूमे वह्निसमवहितजन्यत्वनिश्चयस्य सत्वे तत एव तत्र वन्हिव्याप्यत्वस्यानुमितत्वसंभवे कार्यकारणभावनिश्चयो निरुक्ततर्कजन्यो निरर्थक इति वाच्यं यादृशघटविशेषस्य स्वाव्यवहितपूर्वक्षणावच्छिन्नवन्हिमति तच्छून्ये चोत्पत्ति-

त्वम् । न च पक्षतावच्छेदकविशिष्ट आपाद्याभावेनापादकाभावसाधने नियमतो यद्धर्मावच्छिन्नं सिद्ध्यति तद्धर्मावच्छिन्नाभावकोटिकसंशयं प्रत्येव तर्को विरोधीतिनियमः, प्रकृते तु धूमे उत्पन्नत्वाभावाभावेनोत्पन्नत्वेन वह्न्यसमवहितजन्यभिन्नत्वविशिष्टवह्निसमवहितजन्यभिन्नत्वस्यापादकीभूतस्याभावसाधने वह्निजन्यभिन्नत्वाभावरूपस्य विशेष्याभावस्य नासिद्धिः विशिष्टाभावस्यातिरिक्तस्यैव सिद्धेस्तथा च कथमस्य वह्निजन्यत्वाभावकोटिकसंशयविरोधित्वमिति वाच्यम् ; विशिष्टाभावस्य विशेषणविशेष्याभावानतिरिक्ततया वह्निजन्यभिन्नत्वाभावरूपस्य विशेष्याभावस्य सिद्धेः ।

---

वह्निसमवहितजन्यत्ववति तादृशघटविशेषे वन्हिव्याप्यत्वविरहेण व्यभिचाराद् वन्हिसमवहितजन्यत्वस्य वन्हिव्याप्यत्वानुमापकत्वाऽसंभवात् । वन्ह्यसमवहिताजन्यत्वविशिष्टवन्हिसमवहितजन्यत्वस्य वन्हिव्याप्यत्वानुमापकत्वमपि नाशङ्कनीयं निरुक्तविशिष्टस्य व्यर्थविशेषणघटिततया तादृशव्याप्यत्वानुमापकत्वाऽसम्भवाद् वन्ह्यसमवहिताजन्यत्वविशिष्टजन्यत्वस्यापि हेतुत्वौचित्यादिति तु विभावनीयमिति दिक् ।

शङ्कते—न चेति । वाच्यमिति परेणान्वयः । पक्षतेति । तथा च धूमो यदि वन्हिव्यभिचारी स्याद् वन्हिजन्यो न स्यादित्यादौ सर्वत्र तर्के पक्षतावच्छेदकधूमत्वादिविशिष्टे आपाद्याभावेन वन्हिजन्यत्वाभावाभावेन वन्हिजन्यत्वादिना वन्हिव्यभिचारित्वाभावाद्यनुमितौ नियमतो वह्निव्यभिचारित्वाभावत्वाद्यवच्छिन्नस्यैव विधेयतया तदवच्छिन्नाद्यभावकोटिक 'धूमो वह्निव्यभिचारी न वे' त्याकारकसंशयं प्रत्येव पूर्वोक्ततर्कादेः प्रतिबन्धकत्वमिति नियमः । निरुक्तमूलोक्ततर्कस्थले तु तादृशनियमो न घटते उत्पन्नत्वाभावाभावेन आपाद्याभावरूपोत्पन्नत्वेन वन्ह्यसमवहितजन्यभिन्नत्वविशिष्टवह्निसमवहितजन्यभिन्नत्वाभावरूपापादकाभावस्याऽनुमितौ वह्निजन्यभिन्नत्वाभावत्वावच्छिन्नस्य विधेयत्वाऽसम्भवाद्विशिष्टाभावत्वावच्छिन्नस्यैव तत्र विधेयतया धूमो वह्निजन्यभिन्नत्वाभाववान् न वेत्याकारकशङ्काप्रतिबन्धकत्वमुक्ततर्कस्य न संभवति वह्निजन्यभिन्नत्वाभावकोटिकशङ्काप्रतिबन्धार्थमेव निरुक्ततर्कस्यादरणीयत्वात् । अन्यथा पूर्वोक्तरीत्या निरुक्ततर्केण वन्हिजन्यत्वाऽनिश्चये धूमो वन्हिव्यभिचारी स्यादित्यादितर्कानुत्थितौ वन्हिधूमव्याप्तिग्रहासम्भवेन मूलोक्ततर्कस्य तादृशव्याप्तिग्रहोपयोगित्वं न स्यात्, परन्तु मूलोक्ततर्केण विशिष्टाभावकोटिकशङ्काया एवाऽनुत्पादः स्यादितिशङ्काग्रन्थाभिप्रायः । समाधत्ते—विशिष्टेति । वह्न्यसमवहितजन्यभिन्नत्वविशिष्टवन्हिसमवहितजन्यभिन्नत्वाभावस्येत्यर्थः । विशेषणेति । वन्ह्यसमवहितजन्यभिन्नत्वाभाववन्हिसमवहितजन्यभिन्नत्वाभावानतिरिक्ततयेत्यर्थः । विशेष्याभावस्य सिद्धेरिति । तथा च केवलविशेष्याभावस्य वन्हिजन्यभिन्नत्वाभावस्याऽपाद्याभावेन सिद्धौ सत्यां धूमो वन्हिजन्यो न वेत्याकारकसंशयं प्रति मूलोक्ततर्कस्य प्रतिबन्धकत्वमक्षतं वन्हिजन्यभिन्नत्वाभावत्वावच्छिन्नस्यैवाऽपाद्याभावेन सिद्धिसंभवात् तद्धर्मावच्छिन्नाभावकोटिकशङ्काप्रतिबन्धकत्वमेव तर्कस्य नियम इत्यस्य पूर्वमभिहितत्वादिति भावः।

नन्वनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादुत्पन्नत्वरूपापाद्याभावेन विशिष्टाभावत्वेनैव रूपेण वह्निजन्यभिन्नत्वाभावस्य सिद्धिसंभवाद् वह्निजन्यत्वत्वस्योपन्नत्वव्यापकतान-

अथ तथापि न वह्निजन्यभिन्नत्वाभावत्वरूपेण वह्निजन्यत्वस्य सिद्धिः अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन विशिष्टाभावत्वेनैव तत्सिद्धेः। न च विशेषणाभावबाधनिश्चयसहकाराद् व्यापकतानवच्छेदकेनापि विशेष्याभावत्वेन तत्सिद्धिरिति वाच्यम्; तथापि पक्षे विपर्ययानुमाने पूर्वं विशेषणाभावबाधप्रतिसन्धानानावश्यकतया नियमतस्तेन रूपेणासिद्धेरिति चेत्-न; वह्न्यसमवहिताजन्यत्वेन पक्षस्यापि विशेषणीयत्वात्। तथा च पक्षतावच्छेदकावच्छिन्ने विपर्ययानुमाने पूर्वं विशेषणाभावबाधप्रतिसन्धानस्यावश्यकतया नियमतो वह्निजन्यभिन्नत्वाभावत्वरूपेण वह्निजन्यत्वसि-

---

वच्छेदकतया तद्रूपेणानुमितौ सिद्ध्यसंभवात् कथमुक्ततर्कस्य धूमो वह्निजन्यो नवेतिसंशयप्रतिबन्धकत्वमित्याशङ्कते-अथेति। तटस्थः शङ्कते-नचेति। वाच्यमिति परेणान्वयः विशेषणेति। वह्न्यसमवहितजन्यभिन्नत्वाऽभावस्य यो बाधनिश्चयो वह्न्यसमवहितजन्यभिन्नत्वनिश्चयस्तत्सहकृतात्सामान्यपरामर्शादित्यर्थः। विशेष्याभावत्वेन=वह्निजन्यभिन्नत्वाभावत्वेन वह्निजन्यत्वत्वेनेति यावत्। तत्सिद्धिः=वह्निजन्यत्वसिद्धिः। तथा च धूमे वन्ह्यसमवहितजन्यभिन्नत्वरूपविशेषणवत्तानिश्चयसत्त्वे तादृशनिश्चयस्यैव विशेषणाभावबाधनिश्चयरूपतया सामान्यपरामर्शबलाद् उत्पन्नत्वव्यापकतानवच्छेदकवह्निजन्यत्वत्वेनापि रूपेणानुमितिसंभवादुक्ततर्कस्य वह्निजन्यत्वाभावकोटिकसंशयप्रतिबन्धकत्वं निर्विवादमिति भावः। समाधत्ते-तथापीति। पक्षे=धूमे। विपर्ययानुमानात्=उत्पन्नत्वाभावाभावेनोत्पन्नत्वेनापादकाभावरूपविशेष्याभावानुमानात्। पूर्वम्=अव्यवहितपूर्वम्। विशेषणेति। वन्ह्यसमवहितजन्यभिन्नत्वनिश्चयस्याऽनावश्यकतयेत्यर्थः। तेन रूपेण=वह्निजन्यभिन्नत्वाभावत्वेन रूपेण। असिद्धेरिति। धूमे यदा आपाद्याऽभावेन आपादकाभावानुमानं तदैव तादृशानुमानात्पूर्वं धूमो वन्ह्यसमवहितजन्यभिन्नइत्याकारकनिश्चयसत्त्वस्य प्रमाणासिद्धत्वादनावश्यकत्वाच्च विशिष्टाभावत्वेनैवाऽनुमितौ सत्यां न वह्निजन्यो नवेतिसंशयप्रतिबन्धकत्वमुक्ततर्कस्य संभवति आपाद्याभावेन केवलवह्निजन्यत्वत्वेनानुमित्यनुदयादिति हृदयम्।

उपाध्यायमतवलम्ब्य अथेत्यादेरुत्तरमाह-इतिचेन्नेति। वह्न्येति। स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वेनेत्यर्थः। पक्षस्यापि=धूमस्यापि। विशेषणीयत्वादिति। तथा च तादृशवन्ह्यसमवहिताजन्यो धूमो यदि वन्ह्यसमवहितजन्यभिन्नत्वविशिष्टवह्निसमवहितजन्यभिन्नत्ववान् स्यात् तदोत्पन्नत्वाभाववान् स्यादित्येवं तर्काकार उपाध्यायादिमते बोध्य इति भावः। ननु वन्ह्यसमवहिताजन्यत्वस्य पक्षविशेषणत्वे कथं तादृशतर्केण वह्निजन्यत्वशङ्कानिवृत्तिरित्यत आह—तथाचेति। निरुक्तवन्ह्यसमवहिताजन्यत्वस्य पक्षविशेषणत्वे चेत्यर्थः। पक्षतेति। वन्ह्यसमवहितजन्यभिन्नत्वविशिष्टधूमत्वावच्छिन्न इत्यर्थः। विपर्ययानुमाने=आपाद्याभावेनोत्पन्नत्वेन वन्ह्यसमवहितजन्यभिन्नत्वविशिष्टवह्निसमवहितजन्यभिन्नत्वाभावरूपापादकाभावानुमाने। पूर्वं=निरुक्तानुमानात् प्राक्। विशेषणेति। वन्ह्यसमवहितजन्यभिन्नत्वनिश्चयस्येत्यर्थः। नियमतः=विशेषणाभावबाधनिश्चयसहकृतसामान्यपरामर्शादितः। वह्निजन्येति। केवलेत्यादिः। वह्निजन्यत्वसिद्धिरिति। आपाद्याभावेन तादृशविशेषणविशि धूमादावापादकाभावानुमितेः

द्धिरप्रत्यूहेति सम्प्रदायविदः।

तदसत्; वह्निसमवहितजन्यभिन्नत्वस्यैव विशेष्यतया बाधसहकारेण तदभावत्वेन तदभावस्य वह्निसमवहितजन्यत्वरूपस्य सिद्धावपि वह्निजन्यभिन्नत्वाभावत्वरूपेण वह्निजन्यभिन्नत्वाभावस्य वह्निजन्यत्वरूपस्यासिद्धेर्वह्न्यजन्यस्यापि वह्निनान्तरीयकस्य घटादेर्वह्निसमवहितजन्यतया वह्निसमवहितजन्यत्ववह्निजन्यत्वयोरत्यन्तं भेदात्, वह्निजन्यत्वासिद्धौ च कुतोऽस्य वह्निजन्यत्वसंशयप्रतिबन्धकत्वम्?।

पूर्वं पक्षतावच्छेदकतादृशविशेषणविषिष्टधूमत्वावच्छिन्नज्ञानमावश्यकमनुमितौ विशिष्टपक्षज्ञानस्य हेतुत्वात्। एवञ्च धूमे वन्ह्यसमवहिताजन्यत्वनिश्चयस्य विपर्ययानुमानात्पूर्वं सत्त्वे तस्यैव विशेषणाभावरूपवन्ह्यसमवहितजन्यभिन्नत्वाभावसिद्धौ प्रतिबन्धकतया तात्पर्याद् विशेष्याभावात्मकवह्निजन्यभिन्नत्वाभावरूपवह्निजन्यत्वमात्रेण आपाद्याभावेन हेतुनाऽनुमितिसम्भवान्निरुक्तमूलोक्ततर्केण वह्निजन्यत्वाभावकोटिकशङ्काप्रतिबन्ध इत्याशयः। सम्प्रदायविदः = यज्ञपत्युपाध्यायप्रभृतयः प्राचीनाः।

धूमे वन्ह्यसमवहितजन्यभिन्नत्वस्य विशेषणत्वे आपाद्याभावेन विशिष्टाभावसिद्धौ विशेषणाभावस्य वन्ह्यसमवहितजन्यभिन्नत्वाभावस्य निरुक्तविशेषणवत्तानिश्चयरूपबाधसहकारादसिद्धावपि विशेष्याभावस्य वह्निसमवहितजन्यभिन्नत्वाभावस्य वह्निसमवहितजन्यत्वस्य तादृशापाद्याभावेनावश्यं सिद्धौ धूमो वह्निसमवहितजन्यो न वेत्याकारकसंशयं प्रत्येव मूलोक्ततर्कस्य प्रतिबन्धकत्वे धूमो वह्निजन्यो नवेतिसंशयप्रतिबन्धकत्वमुक्ततर्कस्य न संभवति विशेष्याभावस्य वह्निजन्यत्वातिरिक्तत्वात्, निरुक्ततर्कस्य वह्निजन्यत्वसंशयाप्रतिबन्धकत्वे च धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्यादिवह्निधूमव्याप्तिग्रहोपयोगितर्कोत्पाद एव न सम्भवति वह्निजन्यत्वसंशयस्य निरुक्ततर्ककारणवह्निजन्यत्वनिश्चयविघटकत्वादित्येवं निरुक्तोपाध्यायमतं दूषयति—तदसदिति। बाधसहकारेण = वन्ह्यसमवहितजन्यभिन्नत्वनिश्चयसहकारेण। तदभावस्य=विशेष्याभावस्य। असिद्धेरिति। आपाद्याभावेनापादकाभावस्य यद्रूपेण सिद्धिस्तद्रूपावच्छिन्नाभावकोटिकशङ्कां प्रत्येव तर्कस्य विरोधित्वम्। तथा च वह्निजन्यत्वत्वेन रूपेणासिद्धौ कुतोऽस्य तर्कस्य वह्निजन्यत्वाभावकोटिकशङ्काप्रतिबन्धकत्वमित्याशयः। ननु वह्निसमवहितजन्यत्वमेव वह्निजन्यत्वं, तथा च वह्निसमवहितजन्यत्वसिद्धिमात्रेणैव वह्निजन्यत्वशङ्काप्रतिबन्धकत्वमुक्ततर्कस्य संभवतीत्यत आह—वह्न्यजन्येति। वह्निजन्यत्वाभाववतोऽपीत्यर्थः। वह्निनान्तरीयकेति। स्वसमानाधिकरणवह्निमत्त्वाव्यवहितपूर्वक्षणकस्येत्यर्थः। वह्निसमवहितेति। स्वसमानाधिकरणवह्निमत्त्वाव्यवहितपूर्वक्षणकतयेत्यर्थः। अत्यन्तं भेदादिति। तथा च वह्निसमवहितजन्यत्वं यदि वह्निजन्यत्वस्वरूपं तदा वह्निनान्तरीयकघटादेरपि वह्निजन्यत्वापत्तिरतो वह्निसमवहितजन्यत्वं वन्हिजन्यत्वातिरिक्तमेवेति भावः। अस्य=मूलोक्ततर्कस्य।

ननु धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निसमवहितजन्यो न स्यादित्येवं तर्को वन्हिधूमव्याप्तिग्रहोपयोगी वक्तव्यस्तादृशतर्के च वन्हिसमवहितजन्यत्वनिश्चय आपाद्य-

न च धूमो यदि संयोगसम्बन्धावच्छिन्नोत्पत्तिसम्बन्धेन वह्निव्यभिचारी स्याद् वह्निसमवहितजन्यो न स्यादिति तर्को वह्निधूमव्याप्तिग्रहोपयोगी, तत्र च बाधनिश्चयविधया वह्निसमवहितजन्यत्वनिश्चयो हेतुस्तन्निश्चयविरोधिनो वह्निसमवहितजन्यत्वसंशयस्य निवर्तकतयैवास्य वह्निधूमव्याप्तिग्रहोपयोगित्वसम्भवेन वह्निजन्यत्वसंशयाप्रतिबन्धकत्वेऽपि न क्षतिरिति वाच्यम्; स्वसमानाधिकरणवह्निमत्स्वाव्यवहितपूर्वक्षणकत्वरूपस्य वह्निसमवहितजन्यत्वस्य धूमे निश्चितत्वेन तत्संशयनिवृत्त्यर्थं तर्कवैफल्यात्। धूमे तन्निश्चयासत्त्वे तु वह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य सत्यन्तदलसंशयप्रतिबन्धकत्वस्य वक्ष्यमाणस्यासंगतत्वापत्तेः, निरुक्तवह्निसमवहितजन्यत्वस्यैव वह्न्यन्वयव्यतिरेकानुविधायित्वरूपत्वात्।

---

व्यतिरेक निश्चयविधया हेतुस्तादृशनिश्चयविघटकश्च धूमो वन्हिसमवहितजन्यो न वेत्याकारकसंशयस्तत्प्रतिबन्धार्थमेव मूलोक्ततर्कानुसरणं वाच्यम् उत्पन्नत्वरूपापाद्याभावेन यदि विशेषणाभावबाधनिश्चयसहकाराद्विशेष्याभावस्य वन्हिसमवहितजन्यत्वमात्रस्य सिद्धिस्तदा निरुक्ततर्कस्यापि वह्निसमवहितजन्यो न वेतिसंशयप्रतिबन्धकत्वं संभवत्येवेत्याशङ्कते—नचेति। वाच्यमितिपरेणान्वयः। संयोगाद्यतिरिक्तसंबन्धावच्छिन्नोत्पत्तिसंबन्धेन संबन्धसामान्येन वा वह्निव्यभिचारित्वं न वह्निसमवहितजन्यत्वापादकमित्यतः संयोगेत्याद्यभिहितम्। तथा च धूमो यदि संयोगसंबन्धावच्छिन्नोत्पत्तिसंबन्धेन वह्न्यभाववद्वृत्तितावान् स्यात्तदा स्वसमानाधिकरणवह्निमत्स्वाऽव्यवहितपूर्वक्षणको न स्यादित्येव तर्को वह्निधूमव्याप्तिग्रहोपयागी वक्तव्य इत्याशयः। तत्र च=निरुक्तवह्निधूमव्याप्तिग्रहोपयोगितर्के च। बाधेति। आपाद्यव्यतिरेकनिश्चयविधयेत्यर्थः। तन्निश्चयविरोधिनः=निरुक्तवह्निसमवहित जन्यत्वनिश्चयविरोधिनः। निवर्त्तकतया=प्रतिबन्धकतया। अस्य=मूलोक्ततर्कस्य। न क्षतिः=न वह्निधूमव्याप्तिग्रहोपयोगित्वक्षतिः। समाधत्ते-स्वसमानेति। धूमसमानाधिकरणवह्निमत्स्वाऽव्यवहितपूर्वक्षणकत्वरूपस्येत्यर्थः। निश्चितत्वेनेति। मूलोक्ततर्कात्पूर्वमित्यादिः। तत्संशयनिवृत्त्यर्थं = वह्निसमवहितजन्यत्वसंशयानिवृत्त्यर्थम्। तर्कवैफल्यादिति। मूलोक्तेत्यादिः। तथा च धूमे यदि मूलोक्ततर्कात्पूर्वमेव यथोक्तवह्निसमवहितजन्यत्वनिश्चयो भवति तदा तादृशनिश्चयप्रतिबन्धकसंशयनिवृत्त्यर्थं मूलोक्ततर्कानुसरणं विफलमेव स्यादितिभावः। ननु धूमे तर्कात्पूर्वं वह्निसमवहितजन्यत्वनिश्चयो भवतीत्यत्र किं मानमित्यत आह—धूम इत्यादि। तन्निश्चयाऽसत्त्वे=वह्निसमवहितजन्यत्वनिश्चयासत्त्वे। वह्न्यन्वयेति। वक्ष्यमाणस्येत्यादिः। सत्यन्तेति। स्वसमानाधिकरणवह्निमदन्यस्वाऽव्यवहितपूर्वक्षणकान्यत्वसंशयप्रतिबन्धकस्येत्यर्थः। असङ्गतत्वापत्तेरिति। तथा च धूमे पूर्वं वह्निसमवहितजन्यत्वनिश्चयसत्त्वमावश्यकमिति हृदयम्। नन्वेतावता वह्न्यन्वयव्यतिरेकानुविधायित्वस्य पूर्वं धूमे निश्चितत्वेऽपि न वह्निसमवहितजन्यत्वनिश्चयस्तदानीं तत्र संभवतीत्यत आह—निरुक्तेति। स्वसमानाधिकरणवह्निमत्स्वाऽव्यवहितपूर्वक्षणकत्वस्यैवेत्यर्थः। तथा च वह्निसमवहितजन्यत्वमेव वह्न्यन्वयव्यतिरेकानुविधायित्वमित्यग्रे स्फुटी भविष्यतीत्याशयः।

नतु वह्निजन्यत्वमेव वह्निसमवहितजन्यत्वमस्तु। तथा चापाद्याभावेन विशेष्याभावस्य

किञ्च पक्षतावच्छेदकविशिष्टे आपाद्याभावेनापादकाभावसाधने यद्धर्ममात्रविधेयतावच्छेदककसिद्धिर्भवति तद्धर्मावच्छिन्नाभावकोटिकसंशयं प्रत्येव तर्को विरोधीत्येव नियमः। अन्यथा "महत्त्वदीर्घत्वेतरपरिमाणाभाववान् घटो यदि परिमाणवान् न स्याद् द्रव्यं न स्यादित्य"स्यापि घटो महान्नवेत्यादिसंशयप्रतिबन्धकत्वापत्तिः, बाधसहकारेण विपर्ययानुमाने महत्त्व-

---

वह्निजन्यभिन्नत्वाभावस्य वह्निजन्यत्वस्य सिद्धौ वह्निजन्यत्वाभावकोटिकसंशयं प्रत्येव मूलोक्ततर्कस्य प्रतिबन्धकत्वं संभवति। न चैवं वह्न्यसमवहितजन्यभिन्नत्वविशिष्टवह्निजन्यभिन्नत्वस्यापादकत्वे वह्निनान्तरीयकघटे व्यभिचारस्तत्रोक्तापादकसत्त्वादिति वाच्यं वह्निनान्तरीयकघटादिभिन्नत्वविशिष्टस्योत्पन्नत्वस्य योऽभावस्तस्यैवापाद्यत्वेनाऽगत्या कथञ्चिद्व्यभिचारस्य वारणीयत्वात्तादृशघटादिभिन्नत्वरूपविशेषणाभावेन विशिष्टोत्पन्नत्वाभावरूपापाद्यस्याऽपि तादृशनान्तरीयकघटादौ सत्त्वादिति यदि ब्रूयात् तदाप्याह—**किंचेति**। पक्ष एवापादककोटिकशङ्काप्रतिबन्धस्तर्केण भवतीत्याशयेनाह—**पक्षतेति**। आपादकाभावसाधने=आपादकाभावानुमितौ। निरूपितत्वं सप्तम्यर्थः, अन्वयश्चास्य यद्धर्ममात्रविधेयतावच्छेदकतायामिति ध्येयम्। **यद्धर्ममात्रेति**। यद्धर्मपर्याप्तावच्छेदकताकविधेयताकनिश्चयो भवति तद्धर्मपर्याप्तावच्छेदकताकप्रतियोगिताकाभावकोटिकसंशयं प्रत्येव तर्कः प्रतिबन्धक इत्येव नियम इत्यर्थः। तेन घटो यदि विशिष्टसत्त्वाभाववान् स्यात्तदा द्रव्यं न स्यादित्यादितर्कस्य घटो विशिष्टसत्त्वाऽभाववान्नवेति संसयप्रतिबन्धकत्वं, नतु घटः सत्तावान्नवेति संशयं प्रत्यपि तस्य तथात्वमिति मन्तव्यम्। मात्रपदप्रयोजनं पर्याप्तिनिवेशस्य वा प्रयोजनमाह—**अन्यथेति**। मात्रपदानुपादाने इत्यर्थः। **महत्त्वेति**। महत्त्वं दीर्घत्वञ्च परिणामविशेषः तदितरपरिमाणाभाववानित्यर्थः। **घटो यदीत्यादि**। तथा च महत्त्वपरिमाणभिन्नत्वे सति दीर्घत्वपरिमाणभिन्नपरिमाणाभाववान् घटो यदि परिमाणाभाववान् स्यात्तदा द्रव्यत्वाभाववान् स्यादित्यस्यापि तर्कस्येत्यर्थः पर्यवसितः। **घटो महान्नवेत्यादि**। आदिपदाद्दीर्घो नवेत्यादिसंशयमात्रपरिग्रहः। संशयप्रतिबन्धकत्वापत्तिः=संशयमात्रप्रतिबन्धकत्वापत्तिः। **बाधसहकारेणेत्यादि**। अयमाशयः मात्रपदानुपादाने आपाद्याभावेन यद्धर्मविधेयतावच्छेदकताकानुमितिस्तद्धर्मावच्छिन्नाभावकोटिकशङ्कां प्रति तर्कस्य प्रतिबन्धकत्वं भवतीत्यर्थः पर्यवसितः स्यात्। तथा सति महत्वदीर्घत्वेतरपरिमाणाभाववान् घटो यदि परिमाणवान् न स्याद्द्रव्यं न स्यादित्याकारकतर्कीयापाद्याभावेन द्रव्यत्वेन पक्षे महत्वदीर्घत्वेतरपरिमाणाभावरूपेतरबाधनिश्चयसहकृतेन महत्त्वस्याऽपि सिद्धिर्भवति, तस्य सिद्धौ च निरुक्ततर्केण महत्त्वाद्यभावमात्रकोटिकसंशयनिवृत्त्यापत्तिः स्याद्। मात्रपदोपादाने तु न निरुक्ततर्कस्य महत्त्वाभावमात्रकोटिकशङ्काप्रतिबन्धकत्वापत्तिस्तादृशेतरबाधसहकारादापाद्याभावेन द्रव्यत्वेन केवलं महत्त्वत्वावच्छिन्नस्य न सिद्धिरपि तु दीर्घत्वत्वावच्छिन्नस्याऽपि। एवञ्च निरुक्ततर्कस्य 'महान् न वा' 'दीर्घो नवेत्या'कारकशङ्काद्वयं प्रत्येव प्रतिबन्धकत्वं महत्त्वत्वदीर्घत्वत्वधर्मद्वयपर्याप्तावच्छेदकताकविधेयताकानुमितेरेव द्रव्यत्वरूपापाद्याभावेनोत्पादादिति।

त्वावच्छिन्नस्य दीर्घत्वत्वावच्छिन्नस्य च सिद्धः। तथाच प्रकृते बाधसह-कारेण व्यापकतानवच्छेदकीभूतेन विशेष्याभावत्वेन सिद्धावपि न तन्मात्र-प्रकारेण सिद्धि र्व्यापकतावच्छेदकीभूतेन विशिष्टाभावत्वेनापि विशेषणा-भावविशेष्याभावयोः सिद्धौ बाधकाभावादिति वह्निसमवहितजन्यत्वसंश-यं प्रत्येव कुतोऽस्य प्रतिबन्धकत्वम् ?।

नव्यास्तु वह्निसमवहिताजन्यः स्यादित्यत्र वह्निसमवहितजन्यत्वं वह्निजन्यत्वमेव वक्तव्यम्। सत्यन्तं चापाद्यकोटिप्रतियोगिविशेषणं वक्त-व्यम्। तथात्र "धूमो यदि वह्निजन्यत्वाभाववान् स्यात् वह्न्यसमवहिताज-न्यत्वविशिष्टस्योत्पन्नत्वस्याभाववान् स्यादि"त्याकारकस्तर्कः। अत्र घटादौ मूलशैथिल्यवारणाय आपाद्ये विशिष्टान्तं प्रतियोगिविशेषणं नत्वभावविशे-

---

प्रकृते दोषं सङ्गमयति—तथा चेति। प्रकृते=उपाध्यायप्रभृतिमतसिद्धतर्कस्थले। बाधसहकारेण=पक्षविशेषणवह्न्यसमवहितजन्यभिन्नत्वनिश्चयसहकारेण। व्यापकतान-वच्छेदकीभूतेनेति। आपाद्याभावस्योत्पन्नत्वस्येत्यादिः। विशेष्याभावत्वेन=वह्निसम-वहितजन्यभिन्नत्वाभावत्वेन वह्निजन्यत्वत्वेनेति यावत्। सिद्धावपि=अनुमितावपि। न तन्मात्रप्रकारेण=न तादृशविशेष्याभावत्वप्रकारेण। सिद्धिः=अनुमितिः। व्यापकेति। आपाद्याभावस्येत्यादिः। विशिष्टाभावत्वेनापि=वह्न्यसमवहितजन्यभिन्नत्वविशिष्टवह्निस-समवहितजन्यभिन्नत्वाभावत्वेनापि। विशेषणेति। वह्निसमवहिजन्यभिन्नत्वाभावव-ह्न्यसमवहितजन्यभिन्नत्वाभावयोरित्यर्थः। सिद्धौ=अनुमितौ। बाधकाभावादितीति। विशिष्टाभावत्वावच्छिन्नेतरबाधस्याऽसत्त्वादिनि भावः। अस्य=मूलोक्ततर्कस्य। प्रतिब-न्धकत्वमिति। उत्पन्नत्वाभावाभावेन विशेषणाभावबाधसहकारात्पक्षे विशेष्याभावस्य वह्निसमवहितजन्यत्वाभावस्य न केवलं विशेष्याभावत्वेन सिद्धिस्तस्योत्पन्नत्वव्यापकता-नवच्छेदकतया व्यापकतावच्छेदकीभूतविशिष्टाभावत्वेनाऽपि सिद्धिर्भवति, एवञ्च विशे-ष्याभावरूपवह्निसमवहितजन्यत्वत्वमात्रनिष्ठावच्छेदकताकविधेयताकसिद्ध्यसम्भवान्न मू-लोक्ततर्कस्य वह्निसमवहितजन्यत्वाभावकोटिककशङ्कां प्रत्यपि प्रतिबन्धकत्वमिति हृदयम्।

दीधितिकारमतमवलम्ब्य समाधत्ते—नव्यास्त्विति। वह्नीति। वह्न्यसमवहि-ताजन्यत्वविशिष्टेत्यादिः। वह्निजन्यत्वमेवेति। एवकाराद् वह्निसमवहितजन्यत्वस्या-पादकघटकत्वव्यवच्छेदः। अत एव 'वस्तुतो वह्न्यजन्यमपि वह्निसमवहितजन्यमि" त्युक्तं दीधितिकृता। सत्यन्तञ्चेति। वह्न्यसमवहिताजन्यत्वञ्चेत्यर्थः। आपाद्य-कोटिप्रतियोगीति। उत्पन्नत्वाभावप्रतियोग्युत्पन्नत्वविशेषणमित्यर्थः। निरुक्तमते समुदिततर्काकारमाह—तथा चेति। वह्न्येति। स्वसमानाधिकरणवह्निमदन्यस्चाव्यव-हितपूर्वक्षणकं यद् यत्तदन्यत्वविशिष्टस्योत्पन्नत्वस्याभाववान् स्यादित्यर्थः। तर्कः=मूलोक्त-तर्कः। नन्वापाद्यप्रतियोग्युत्पन्नत्वविशेषणं निरर्थकमित्यत आह—अत्रेति। अस्मिन् तर्के इत्यर्थः। घटादौ=वह्निशून्यतादृशायां वह्निमद्देशोत्पन्नघटादौ, न तु वह्निव्यधिकरणे घटे तत्र विशिष्टान्तोपादानेऽपि व्यभिचारवारणासम्भवात्। वक्ष्यमाणपारिभाषिकोत्पन्नत्ववि-क्षयैव तत्र व्यभिचारस्य वारणीयत्वादिति ध्येयम्। मूलशैथिल्यवारणायेति। आपाद्य-

षणं घटादौ मूलशैथिल्यतादवस्थ्यापत्तेः। तदर्थश्चोक्त एव, नतु वह्नि-मद्भिन्नदेशोत्पत्तिकान्यत्वं तत्, वह्निमति वह्नेः पूर्वमुत्पन्ने रासभादौ व्य-

प्रतियोग्युत्पन्नत्वे वह्न्यसमवहिताजन्यत्वस्याविशेषणत्वे वह्निशून्यतादशायां वह्निमद्देशोत्पन्नघटादौ व्यभिचारः तादृशघटादौ वह्निजन्यत्वाभावस्याऽऽपादकस्य सत्त्वेन तत्रापाद्यस्योत्पन्नत्वाभावस्य विरहात्। तादृशोत्पन्नत्वे वन्ह्यसमवहिताजन्यत्वस्य विशेषणत्वे तु न तादृशघटादौ व्यभिचारस्तत्र वन्हिजन्यत्वाभावस्यापादकस्य सत्त्वेऽपि वन्ह्यसमवहिताजन्यत्वरूपविशेषणाभावेन तादृशविशेषणविशिष्टोत्पन्नत्वस्याऽभावरूपापाद्यस्याऽपि तत्र सत्त्वादितिभावः। विशिष्टान्तं = वन्ह्यसमवहिताजन्यत्वम्। ननु उत्पन्नत्वाभावरूपापाद्यस्यैव वन्ह्यसमवहिताजन्यत्वविशेषणमस्तु किं तादृशापाद्यप्रतियोग्युत्पन्नत्वे तस्य विशेषणत्वेनेत्यत आह—न त्विति। अभावविशेषणम् = उत्पन्नत्वाभावविशेषणम्। घटादौ = वन्हिशून्यतादशायां वन्हिमद्देशोत्पन्नघटादौ। मूलशैथिल्यतादवस्थ्यापत्तेरिति। तथा च वह्न्यसमवहिताजन्यत्वं यदि उत्पन्नत्वाभावरूपापाद्यविशेषणं स्यात्तदा वन्हिशून्यतादशायां वन्हिमद्देशोत्पन्नघटादौ व्यभिचारः स्यात्। स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितपूर्वक्षणकान्यत्वरूपवन्ह्यसमवहिताजन्यत्वविशेषणविशिष्टस्योत्पन्नत्वाभावस्य नित्यवस्तुनिष्ठस्य तादृशघटादावसत्त्वादतः उत्पन्नत्वविशेषणमेव तादृशं वन्ह्यसमवहिताजन्यत्वं, तथा सति विशेषणाभावेन विशिष्टोत्पन्नत्वस्याभावस्यापि तादृशघटादौ सत्त्वान्न व्यभिचार इत्याशयः। तदर्थश्च = आपाद्यप्रतियोगिविशेषणसत्यन्तार्थश्च। उक्त एवेति। स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितपूर्वक्षणकं यद्यत्तदन्यत्वरूपोऽर्थोऽभिहित एवेत्यर्थः। एवकारात्सत्यन्तस्यान्यविधार्थकत्वव्यवच्छेदः। एवकारव्यवच्छेद्यमाह—नत्विति। वन्हिमदिति। वन्हिमद्भिन्नदेशोत्पत्तिको यो यस्तदन्यत्वमित्यर्थः। वन्ह्युत्तरमुत्पन्ने रासभादौ स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वस्योत्पन्नत्वस्य च सत्त्वेन सत्यन्तस्य निरुक्तार्थकत्वेऽपि तत्र व्यभिचारवारणं न संभवतीत्यतो वन्हेः पूर्वमित्युक्तम्। रासभादाविति। आदिना वन्हिशून्यतादशायां वन्हिमद्देशोत्पन्नघटादिपरिग्रहः। तेन वन्हिमद्भिन्नदेशोत्पत्तिकान्यत्वस्य सत्यन्तार्थत्वे निरुक्तघटादावपि व्यभिचारसम्भवे वन्हेः पूर्वमुत्पन्नरासभादौ व्यभिचाराभिधानमसङ्गतमित्यपि समाहितमिति ध्येयम्। व्यभिचारापत्तेरिति। तथा च वन्हिजन्यत्वाभावरूपापादकवति वह्नेः पूर्वमुत्पन्ने रासभादौ वन्हिमद्भिन्नदेशोत्पत्तिकान्यत्वरूपसत्यन्तार्थस्योत्पन्नत्वस्य च सत्त्वेन तादृशविशिष्टोत्पन्नत्वाभावरूपापाद्यविरहाद् व्यभिचारः स्याद् यदि वन्हिमद्भिन्नदेशोत्पत्तिकान्यत्वस्य सत्यन्तार्थत्वं स्यात्, स्वसमानाधिकरणवन्हिमदन्यस्वाऽव्यवहितप्राक्क्षणकान्यत्वस्य सत्यन्तार्थत्वे तु न तत्र व्यभिचारः निरुक्तसत्यन्तार्थस्य तादृशरासभादौ विरहेण तद्विशिष्टोत्पन्नत्वाभावस्य तत्र सत्त्वादिति भावः।

अथ स्वसमानाधिकरणवन्हिमत्स्वाव्यवहितप्राक्क्षणकत्वरूपवन्हिसमवहितजन्यत्वस्योत्पन्नत्वविशेषणत्वेनैवोपपत्तौ निषेधद्वयगर्भवन्ह्यसमवहिताजन्यत्वस्याऽऽपाद्यप्रतियोग्युत्पन्नत्वविशेषणत्वमनर्थकं वन्हिशून्यताकालीनवन्हिमद्देशोत्पन्नघटादौ यथोक्तवन्हिसमवहितजन्य-

भिचारापत्तेः। अजन्ये मूलशैथिल्यवारणाय विशेष्यदलम्। न च वह्न्य-जन्ये वह्निसमवधाननियतोत्पत्तिके घटादिविशेषे मूलशैथिल्यमिति वाच्यम्, उत्पन्नत्वं हि वह्न्यसमवहितवह्नितत्संयोगेतरयावत्कारणाधिकरणक्षण-

स्वरूपविशेषणाभावेनैव विशिष्टोत्पन्नत्वाभावस्य तत्राक्षतत्वादिति चेदत्र केचित्—अवन्हेरेव भविष्यतीत्यादिवक्ष्यमाणायाः शङ्कायाः स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वशङ्कास्वरूपायाः सत्यन्तदलनिश्चयविघटकताया एव वक्तव्यतया वन्हिसमवहितजन्यत्वस्य सत्यन्तार्थत्वे तदनुपपत्तिः स्याद् वन्हिसमवहितजन्यत्वबुद्धौ तादृशशङ्काया अप्रतिबन्धकत्वादतः सत्यन्तं निषेधद्वयगर्भम्। न च अवन्हेरित्यादिशङ्काऽपि स्वसमानाधिकरणवन्हिमत्स्वाव्यवहितप्राक्क्षणकत्वसंशयरूपैवास्त्विति वाच्यं, तथा सति यथाश्रुतार्थपरित्यागापत्तेरिति वदन्ति। अन्ये तु यादृशघटस्य स्वाव्यवहितप्राक्क्षणावच्छिन्नवन्हिमति तादृशवन्हिशून्ये चोत्पत्तिस्तादृशघटविशेषे स्वसमानाधिकरणवन्हिमत्स्वाऽव्यवहितप्राक्क्षणकत्वविशिष्टोत्पन्नत्वसत्त्वेन तत्रापाद्यविरहादतः सत्यन्तं निषेधद्वयगर्भमित्याहुस्तच्चिन्त्यम्। यत्तु स्वसमानाधिकरणवन्हिमदन्यस्वाऽव्यवहितप्राक्क्षणकान्यत्वस्य सत्यन्तार्थत्वे वन्हिव्यधिकरणे घटादौ व्यभिचारवारणायैवोत्पन्नत्वस्य वक्ष्यमाणपारिभाषिकत्वस्यावश्यकतया वन्हिनान्तरीयकघटादौ व्यभिचारवारणाय तस्य तथात्वाभिधानमनुचितमिति भट्टाचार्यैरुक्तं तदसङ्गतम्, एतन्मते वन्हिव्यधिकरणघटादौ व्यभिचारवारणाय वन्हिसमानाधिकरणत्वस्योत्पन्नत्वविशेषणतायाः पूर्वमुक्तत्वादुत्पन्नत्वस्य तदर्थं पारिभाषिकत्वाऽभिधानस्यानौचित्यादिति ध्येयमिति दिक्।

उत्पन्नत्वरूपविशेष्यदलं विहाय स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वाभावमात्रस्याऽऽपाद्यत्वे नित्यगगनादौ व्यभिचारः वन्हिजन्यत्वाभावरूपापादकवति तत्र स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपवन्ह्यसमवहिताजन्यत्वस्यैव सत्त्वेन तदभावस्य तत्र विरहात्। उत्पन्नत्वरूपविशेष्यदलप्रवेशे तु न तादृशगगनादौ व्यभिचारः उत्पन्नत्वरूपविशेष्यदलस्य तत्र विरहेण विशिष्टोत्पन्नत्वाभावरूपापाद्यस्य तत्र सत्त्वादित्याह—**अजन्येति**। नित्यगगनादावित्यर्थः। **विशेष्यदलमिति**। उत्पन्नत्वरूपमित्यादिः। न च स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वविशिष्टाभावस्यैवाऽऽपाद्यत्वमस्तु किमुत्पन्नत्वपदेन गगनादौ तादृशक्षणकान्यत्वविशिष्टाभावसत्त्वादेव व्यभिचारवारणं सम्भवतीति वाच्यं, तथा सति वन्हिशून्यतादृशायां वन्हिमद्देशोत्पन्नघटादौ व्यभिचारापत्तेस्तत्र तादृशवन्ह्यसमवहिताजन्यत्वरूपविशेषणाभावेन तादृशविशेषणविशिष्टाभावरूपापाद्यस्याऽसत्त्वादिति भावः।

नन्वेवमपि वन्हिजन्यत्वाभावरूपापादकवति वन्हिनान्तरीयकघटे व्यभिचारस्तत्र यथोक्तवन्ह्यसमवहिताजन्यत्वस्योत्पन्नत्वस्य च सत्त्वेन तादृशविशिष्टोत्पन्नत्वाभावरूपापाद्यविरहादित्याशङ्कते—**न चेति**। वाच्यमितिपरेणान्वयः। वन्ह्यजन्य इत्यनेन वन्हिजन्यत्वाभावरूपाऽऽपादकसत्त्वं सूचितम्। **वह्निसमवधानेति**। वन्हिसत्त्व एव यादृशघटस्योत्पत्तिस्तादृशघटविशेष इत्यर्थः। समाधत्ते—**उत्पन्नत्वमित्यादि**। स्वसमानाधिकरणवन्हिमदन्यक्षणवृत्तीनि वन्हितत्संयोगेतरयावत्त्वविशिष्टकारणानि यस्य स्वस्य एवं भूतं यत्स्वं तत्त्वमेवोत्पन्न-

त्वम् । नान्तरीयके उक्तमूलशैथिल्यवारणाय वह्न्यसमवहितेति क्षणविशेषणम्, स्वसमानाधिकरणवह्निमदन्यत्वं तदर्थः । वह्निनान्तरीयकस्य यावत्कारणाधिकरणक्षणस्तु न वह्निमदन्यः, तथा सति वह्निं विनापि तदुत्पत्त्यापत्तेः, नहि यावत्कारणसत्त्वे कार्य्यविलम्बः ।

पक्षीभूते धूमे इष्टापत्तेः, महाप्रलये मानाभावात्, खण्डप्रलयेऽपि ब्रह्माण्डान्तरे वह्निसत्त्वादसिद्धेर्वारणाय स्वसमानाधिकरणेति वह्निविशेषणम् ।

त्वमित्यर्थः । वन्ह्यसमवहिताजन्यत्वविशिष्टस्य तादृशोत्पन्नत्वस्याभावश्चापाद्यं, तथा च न वन्हिनान्तरीयकघटे व्यभिचारस्तादृशघटे स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपवन्ह्यसमवहिताजन्यत्वस्य सत्वेऽपि तद्विशिष्टस्य स्वसमानाधिकरणवन्हिमदन्यवन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणकत्वरूपधूमनिष्ठोत्पन्नत्वस्य विरहेणापाद्यस्य तादृशनान्तरीयकेऽक्षतत्वादित्याशयः । वन्ह्यसमवहितत्वं यदि तादृशयावत्कारणाधिकरणक्षणविशेषणं न स्यात्तदा निरुक्तवह्निनान्तरीयके व्यभिचारः स्यात्तत्र वह्नितत्संयोगेतरयावत्कारणाधिकरणक्षणकत्वमात्ररूपोत्पन्नत्वस्य सत्त्वेन तदभावरूपापाद्यस्य तत्रासत्त्वादित्याह—नान्तरीयक इति । क्षणविशेषणमिति । वन्हितत्संयोगेतरयावत्कारणाधिकरणेत्यादिः। वन्ह्यसमवहितत्वं न कालिकसम्बन्धावच्छिन्नवन्ह्यभाववत्वं महाप्रलये व्यभिचारापत्तेः वन्ह्यजन्ये तत्र तादृशवन्ह्यभाववत्सकलतत्कारणक्षणकत्वरूपोत्पन्नत्वस्य सत्त्वेन तदभावरूपापाद्यस्य तत्र विरहादत आह—स्वसमानाधिकरणेति । स्वमुत्पन्नत्वेनाभिमतं वस्तु तत्समानाधिकरणो यो वन्हिस्तद्वदन्यत्वं वन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणविशेषणं बोध्यमित्यर्थः । तदर्थः = वन्ह्यसमवहितदलस्यार्थः । वन्हिनान्तरीयके व्यभिचारं वारयति—वह्निनेति । न वह्निमदन्यः = न तादृशघटसमानाधिकरणवन्हिमदन्यः । तथा सति = तादृशघटस्य यावत्कारणाधिकरणक्षणस्य वन्हिमदन्यत्वे सति । तदुत्पादापत्तेः = नान्तरीयकघटस्योत्पादापत्तेः । तादृशघटोत्पादापत्तौ साधिकां युक्तिमप्याह—न हीति । यावत्कारणसत्त्व इति । तादृशघटस्येत्यादिः ।

ननु वन्हिमदन्यत्वमेव वन्ह्यसमवहितत्वं स्याद्वन्हौ स्वसामानाधिकरण्यविशेषणन्त्वनर्थकमेवेत्याह—पक्षीभूत इत्यादि । इष्टापत्तेरिति । तथा च सर्वस्यैव महाप्रलयातिरिक्तस्य जन्यवस्तुनः पूर्वं कारणाधिकरणक्षणस्य देशान्तरे वन्हिसत्वेन वन्हिमत्त्वाद् धूमस्याप्यव्यवहितपूर्वक्षणस्य वन्हिमत्तया वन्हिमदन्यवन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणकत्वरूपोत्पन्नत्वं महाप्रलयमात्रएव वर्तमानं, तदभावरूपापाद्यस्य तु धूमे सत्त्वात्तत्रेष्टापत्तिः स्यात्, पक्षे आपाद्यसत्त्वस्यैवेष्टापत्तिपदार्थत्वादित्याशयः । महाप्रलयाऽनङ्गीकारपक्षे निरुक्तेष्टापत्त्यसंभवादाह—महाप्रलय इति । युगपद्ब्रह्माण्डानां प्रलयस्य नव्यैरनभ्युपगमादाह—मानाभावादिति । तथा च वन्हिमदन्यतादृशयावत्कारणाधिकरणक्षणत्वं न कुत्रापि प्रसिद्ध्यतीति भावः । ननु खण्डप्रलयस्य नव्यैरभ्युगम्यमानतया तत्पूर्वक्षणस्य वन्हिमदन्यत्वं प्रसिद्धमित्यत आह—खण्डप्रलय इति । वन्हिसत्त्वादिति । तथा च खण्डप्रलयपूर्वक्षणस्यापि ब्रह्माण्डान्तरावच्छेदेन वन्हिमत्त्वाद्वन्हिमदन्यत्वं न कस्याऽपि जन्यस्य पूर्वक्षणे संभवतीति हृदयम् । तादृशयावत्कारणाधिकरणक्षणे स्वसामानाधिकरण्यसहितवन्हिमदन्यत्वनिवेशे तु नाऽप्रसिद्धिरित्याह—स्वसमानाधिक-

वह्न्यसमवहिताजन्यत्वविशिष्टस्य वह्न्यसमवहितयावत्कारणाधिकरणक्षणकत्वस्याप्रसिद्धत्वाद् वह्नितत्संयोगेतरेति यावत्कारणविशेषणम् । इत्थं चरणेतीति । तादृशवन्ह्यसमवहिताजन्यत्वविशिष्टस्य निरुक्तोत्पन्नत्वस्य प्रसिद्धिर्धूम एव संभवतीत्यग्रे स्फुटीभविष्यिति ।

यथोक्तवन्ह्यसमवहिताजन्यत्वविशिष्टस्य स्वसमानाधिकरणवन्हिमदन्ययावत्कारणाधिकरणक्षणकत्वस्य कुत्राऽपि प्रसिद्धिर्न स्यात् वन्हितत्संयोगघटितयावत्कारणाधिकरणक्षणस्य स्वसमानाधिकरणवन्हिमदन्यत्वाऽसंभवात् । अतो वन्हितत्संयोगेतरत्वं यावत्कारणविशेषणं वाच्यमित्याह—वन्ह्येति । तथा च वन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणकत्वं धूम एव प्रसिद्ध्यतीत्याह—इत्थञ्चेति। वन्हिपदानुपादाने वन्हिघटितयावत्कारणाधिकरणक्षणस्य तादृशवन्ह्यसमवहितत्वाऽप्रसिद्धिरतो वन्हीतरत्वं यावत्कारणविशेषणम् । एवं वन्हिसंयोगघटितकारणाधिकरणक्षणस्याऽपि वन्ह्यसमवहितत्वमप्रसिद्धं स्यादतो वन्हिसंयोगेतरत्वमपि तादृशकारणविशेषणं वक्तव्यमिति नव्याः। अथ वन्ह्युत्पत्तिक्षणस्याऽपि धूमाधिकरणवृत्तित्वविशिष्टवन्हिमदन्यत्वेन वन्हिघटितयावत्कारणाधिकरणत्वेन च धर्तुं शक्यतया वन्हीतरत्वमनिवेश्यापि तादृशयावत्कारणाधिकरणक्षणकत्वस्य धूमे प्रसिद्धिसंभवाद् वन्हीतरत्वस्य यावत्कारणविशेषणत्वमनर्थकम् । न च धूमाधिकरणवृत्तित्वोपलक्षितवन्हिमदन्यत्वं विवक्षणीयं, तच्च न वन्ह्युत्पत्तिक्षणे प्रसिद्ध्यतीति वाच्यं, तादृशवृत्तित्वोपलक्षितवन्हिमदन्यत्वं निवेश्य वन्हीतरत्वस्य सार्थक्योपपादनस्याऽनौचित्यादिति चेन्न, केवलवन्हिमत्त्वस्य वन्ह्युत्पत्तिक्षणे सत्त्वे धूमाधिकरणवृत्तित्वविशिष्टवन्हिमदन्यस्य तत्रासंभवात् । मथुरानाथमते विशेष्यवति विशिष्टभेदमस्वीकृत्यैव वन्हीतरत्वनिवेशस्याऽवश्यकत्वात् ।

यत्तु धूमाधिकरणवृत्तित्वविशिष्टवन्हिमदन्यत्वप्रतियोगितावच्छेदकताघटकसंबन्धस्तु वन्हिप्रतियोगिकः कालिक एव वक्तव्यः, तथा च तादृशसंसर्गतावच्छेदकतायाः पर्याप्तिविवक्षणे गौरवं स्यादतो धूमाधिकरणवृत्तित्वोपलक्षितवन्हिमदन्यत्वमेव विवक्षणीयम् । तथा च वन्ह्युत्पत्तिक्षणेऽपि तादृशवन्हिमदन्यत्वविरहाद् वन्हीतरत्वं यावत्कारणविशेषणमावश्यकमिति मतं, तत्तुच्छं, धूमाधिकरणवृत्तित्वोपलक्षितवन्हिमदन्यत्वस्य किञ्चिदवच्छेदेन सत्त्वाद् भेदस्याऽव्याप्यवृत्तित्वात् । प्रकारान्तरेण तादृशवन्हिमदन्यत्वविवक्षणे लाघवानवकाशादिति ध्येयम् ।

यत्तु समवायसंबन्धावच्छिन्नकार्यतानिरूपितयावत्कारणधिकरणक्षणस्य धूमाधिकरणवृत्तित्वविशिष्टवन्हिमदन्यत्वाद् वन्हितत्संयोगेतरत्वं यावत्कारणविशेषणमनर्थकं, वन्हितत्संयोगादेः संयोगेन धूमं प्रत्येव जनकत्वादिति; तदपि तुच्छं तादृशसमवायावच्छिन्नपारिभाषिककार्यत्वरूपोत्पन्नत्वेनाऽपादकाभावस्य संयोगावच्छिन्नवन्हिकार्यत्वस्य धूमेऽनुमानाऽसंभवात् संयोगावच्छिन्नवन्हिकार्यतानिश्चयार्थमेव मूलोक्ततर्कस्याऽनुसरणीयत्वात् ; अन्यथा निरुक्ततर्कस्य वन्हिधूमव्याप्तिग्रहोपयोगित्वोपपादनस्याऽसंगतत्वापत्तिः स्यात् । एतेन समवायावच्छिन्नकार्यतानिरूपितयावत्कारणाधिकरणक्षणकत्वविवक्षणे यादृशस्थले घटावयवद्वयसंयोगोत्पत्तिर्दण्डनाशो वन्हिनाशश्चेत्येकः कालस्ततो दण्डान्तरोत्पत्तिस्ततो वन्हि-

धूमे एव प्रसिद्धिः। दण्डादियत्किञ्चित्कारणाधिकरणक्षणस्य वह्न्यसमवहितत्वात् नान्तरीयकघटविशेषादौ मूलशैथिल्यतादवस्थ्याद्‌ यावदिति। न च वह्न्यजन्ये वह्न्यभिघातजाततण्डुलादिकर्मणि पाकजरूपादिनाशे च व्यभिचार इति वाच्यम्; संयोगेन स्वसामानाधिकरण्यस्य उत्पन्नत्वघटकवह्न्यसमवहितत्वघटकतया भेदकूटस्यापाद्यस्य तत्रापि सत्त्वात्।

---

संयोगोत्पत्तिस्ततः पूर्वावयवद्वयसंयोगाद्घटोत्पत्तिस्तादृशस्थले तादृशघटविशेषे व्यभिचारः, निरुक्तघटावयवद्वयसंयोगाधिकरणक्षणस्य वन्हिमदन्यतादृशकारणाधिकरणक्षणत्वादित्युत्तरमप्यनादेयमिति दिक्।

ननु कारणे यावत्त्वविशेषणमनुपादेयमेवेत्यत आह—दण्डादीति। तथा च वन्हितत्संयोगेतरकारणविशेषणयावत्त्वानुपादाने वन्हिनान्तरीयकघट एव व्यभिचारः तादृशघटीययत्किञ्चिद्दण्डादिकारणाधिकरणक्षणस्य तादृशघटाधिकरणवृत्तिवन्हिमदन्यत्वेन स्वसमानाधिकरणवन्हिमदन्यवन्हितत्संयोगेतरयत्किञ्चिद्दण्डादिकारणाधिकरणक्षणकत्वरूपोत्पन्नत्वस्यैव तादृशघटे सत्त्वेनापाद्यविरहात्। यावत्कारणनिवेशे तु न तत्र व्यभिचारः, वन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणस्य वन्हिमदन्यत्वविरहेण तादृशवन्हिमदन्यत्वविशिष्टतादृशयावत्कारणाधिकरणक्षणकत्वस्य धूमनिष्ठस्याभावरूपापाद्यस्य तत्र सत्त्वादिति भावः। न चेति। वाच्यमितिपरेणान्वयः। वन्ह्यजन्ये=वन्हिजन्यत्वाभावरूपापादकवति। वन्ह्येति। वन्ह्यभिघातसंयोगजन्या या तत्तत्तण्डुलादिक्रिया तत्रेत्यर्थः। तादृशतण्डुलकर्मणि तादृशवन्हिसंयोगजन्यत्वसत्त्वे यदि वन्हिजन्यत्वमपि तत्र वर्तत एवेत्युच्युते तदाप्याह—पाकजेति। विजातीयतेजःसंयोगावच्छिन्नक्रियाजन्ये रूपादिनाशे चेत्यर्थः। निरुक्तक्रियाजन्यरूपादिनाशस्तु न वन्हिजन्य इति तत्राऽपादकसत्त्वं निर्विवादमित्याशयः। व्यभिचार इति। तथा च निरुक्ततण्डुलादिकर्मसमानाधिकरणवन्हिमदन्यत्वस्य तादृशकर्मजनकयावत्कारणाधिकरणक्षणे सत्त्वात् स्वपदेन कर्मणो धर्त्तुं शक्यतया तादृशपारिभाषिकोत्पन्नत्वस्यैव तत्र सत्त्वेन आपाद्यविरहादिति हृदयम्। समाधत्ते—संयोगेनेति। अयमाशयः—स्वसमानाधिकरणवन्हिमदन्यवन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणकत्वरूपोत्पन्नत्वघटकं स्वसामानाधिकरण्यं स्वाधिकरणवृत्तित्वरूपं, स्वाधिकरणत्वञ्च संयोगेनैव वाच्यम्। एवञ्च निरुक्ततण्डुलक्रियायास्तादृशरूपादिनाशस्य च स्वपदेनोपादानमेव न संभवति, तयोः संयोगेनाधिकरणत्वाऽप्रसिद्धेरतः स्वपदेन धूममादाय तन्निष्ठतादृशक्षणकत्वरूपोत्पन्नत्वस्याभावस्यापाद्यस्य निरुक्ततण्डुलकर्मणि तादृशरूपादिनाशे च सत्त्वान्न व्यभिचार इति। भेदकूटस्येति। धूमान्तरे इष्टापत्तिवारणाय संयोगेन स्वसमानाधिकरणवन्हिमदन्यवन्हितत्संयोगेतरयावत्कारणाधिकरणं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नभेदकूटस्यापाद्यत्वमवश्यं वक्तव्यमिति हृदयम्। तत्रापि=तयोरपि निरुक्ततण्डुलकर्मपाकनाशयोरपीति यावत्। सत्त्वादिति। तथा च क्व व्यभिचार इति भावः।

धूमावयवद्वयसंयोगधूमप्रागभावघटितवन्हितत्संयोगेतरधूमीययावत्कारणक्षणस्य धूमोत्पत्त्यव्यवहितपूर्वक्षणतया तत्र वन्हेरपि सत्त्वेन स्वसमानाधिकरणवह्नितत्संयोगेतरयावत्का-

ननु तथापि आपाद्यप्रतियोगिनो विशिष्टस्याऽप्रसिद्धिः, धूमावयवतदु-भयसंयोगधूमप्रागभावप्रटितवद्धूमीययावत्कारणस्य धूमोत्पत्त्यव्यवहित-प्राक्क्षणे एव सत्त्वेन तदानीं वह्नेरपि कारणतया आवश्यकत्वेन धूमीयवह्नित-त्संयोगेतरयावत्कारणाधिकरणक्षणस्यापि वह्न्यसमवहितत्वाभावात् धूमेऽ-पि विशिष्टप्रसिद्ध्यसम्भवात्। न च वह्निविरहेऽपि तदुत्पन्नधूमद्व्यणुकाना-मेव परस्परसंयोगक्रमेण धूमोत्पादसम्भवात् न तदानीं वह्नेरावश्यकत्वं, धूमनिष्ठजातिविशेषस्यैव वह्नितत्संयोगजन्यतावच्छेदकतया धूमं प्रति तयो-र्व्यभिचाराभावात् तथा च तादृशधूमे एव प्रसिद्धिरिति वाच्यम्; ता-दृशधूमस्य घटादितुल्यतया तत्र सत्यन्तदलाभावेनैव विशिष्टप्रसिद्ध्यस-म्भवात्। न च यावत्कारणपदेन संयोगसम्बन्धावच्छिन्नस्वनिष्ठजन्यता-

रणाधिकरणक्षणकत्वं धूमेऽपि न प्रसिद्ध्यतीत्याशङ्कते—नन्विति। आपाद्येति। पारिभाषिकोत्पन्नत्वरूपस्येत्यर्थः। विशिष्टस्येति। स्वसमानाधिकरणवन्हिमदन्यस्वा-व्यवहितप्राक्क्षणकान्यत्वविशिष्टस्याप्रसिद्धिरित्यर्थः। केवलस्य पारिभाषिकोत्पन्नत्वस्य वन्हिशून्यतादशायां वन्हिमद्देशोपन्नघटादौ प्रसिद्धिसंभवात् तादृशविशेषणविशेषस्याऽ-प्रसिद्धिरित्युक्तमिति ध्येयम्। तदानीं=धूमप्रागभावाधिकरणकारणक्षणे। कारणतयेति। अन्यथा तस्य धूमस्य घटादिसमशीलत्वापत्तिः स्यादिति भावः। वन्ह्येति। धूमसमाना-धिकरणवन्हिमदन्यत्वाभावादित्यर्थः। धूमेऽपीति। अपिना सर्वत्रैवाऽप्रसिद्धिः सूचिता। विशिष्टेति। पूर्वोक्तार्थकम्। ननु वन्ह्यादिजन्यधूमद्व्यणुकाधिकरणक्षणे वन्हिविरहेऽपि परस्परसंयुक्ततादृशद्व्यणुकादित एव धूमोत्पत्तिसंभवात् स्वपदेन धूममेवोपादाय तत्समाना-धिकरणवन्हिमदन्यवन्हितत्संयोगेतरयावत्कारणरूपधूमद्व्यणुकसंयोगाद्यधिकरणक्षणकत्वस्य धूमे प्रसिद्धिसंभवात्कथं तादृशमुत्पन्नत्वमप्रसिद्धमित्याशङ्कते—न चेति। वाच्यमितिपरे-णान्वयः। तदुत्पन्नेति। वन्ह्यादिजन्यधूमद्व्यणुकानामेवेत्यर्थः। परस्परेति। तादृश-द्व्यणुकानां परस्परसंयोगक्रमेणेत्यर्थः। तदानीं=द्व्यणुकसंयोगाधिकरणक्षणे। नन्वेवं वन्हित-त्संयोगं विनापि धूमोत्पादे वन्हिसंयोगयोर्धूमं प्रति व्यभिचारित्वमित्यत आह—धूमनिष्ठेति। तथा च विजातीयधूमत्वावच्छिन्नं प्रत्येव वन्हितत्संयोगयोर्जनकतया न तयोस्तं प्रति व्य-भिचारित्वमित्याशयः। उपसंहरति—तथाचेति। धूम एव=वन्हिजन्यतावच्छेदकानाक्रान्त-धूम एव। समाधत्ते—तादृशेति। निरुक्तद्व्यणुकादिसंयोगजन्यधूमस्येत्यर्थः। घटादीति। वन्हिशून्यतादशायां वन्हिमद्देशोत्पन्नघटादितुल्यतयेत्यर्थः। तत्र=तादृशधूमे। सत्यन्तेति। स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपस्य सत्यन्तदलस्याऽभावेने-त्यर्थः। सत्यन्तदलस्थस्वपदेन निरुक्तधूमस्यापि धर्तुं शक्यत्वात्तदन्यत्वस्य तत्र विरहा-दिति भावः। विशिष्टेति। स्वसमानाधिकरणवन्हिमदन्यस्वाव्यवहितप्राक्क्षणकान्य-त्वविशिष्टस्य स्वसमानाधिकरणवन्हिमदन्यवन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणकत्वरू-पस्योत्पन्नत्वस्य प्रसिद्ध्यसंभवादित्यर्थः।

पुनः शङ्कते—नचेति। वाच्यमितिपरेणान्वयः। यावत्कारणपदेनेति। वन्हितत्संयोगेतरेत्यादिः। संयोगसम्बन्धेति। संयोगसंबन्धावच्छिन्ना या स्वनिष्ठ-

प्रतियोगिककारणताश्रयो यावान् विवक्षणीयः, भेदकूटं चापाद्यम्, तथा च धूमे एव प्रसिद्धिरिति वाच्यम्; यस्य नान्तरीयकस्य घटविशेषादेः संयोगसम्बन्धावच्छिन्नजन्यताप्रतियोगिककारणताश्रयो दण्डादिर्यावान् वह्न्यनधिकरणकाले वर्तते केवलमवयवसंयोगमात्रं वह्न्यधिकरण एव काले जातं तादृशनान्तरीयके व्यभिचारापत्तिरिति ।

मैवं; यत्र धूमावयवद्वयोत्पत्तिर्वह्नेर्नाशश्चेत्येकः कालः, ततो धूमावयवद्वयसंयोगस्तदनन्तरं न वह्निजन्यतावच्छेदकाक्रान्तधूमोत्पत्तिस्तत्र वह्नितत्संयोगयोः साक्षाद्धेतुत्वेन तद्विरहात्; अपि तु वह्न्यन्तरोत्पत्तिस्ततः संयोगोत्पत्तिस्ततः पूर्वोत्पन्नधूमावयवद्वयसंयोगाद् वह्निजन्यविलक्षणधूमोत्पत्तिस्तत्रैव धूमव्यक्तिविशेषे विशिष्टप्रसिद्धिसम्भवात्, धूमावयवद्वयसंयोगोत्पत्तिक्षणस्यैव तदीयतादृशयावत्कारणाधिकरणत्वेन तदानीं वह्न्यभावस्य सत्त्वात्, उत्पत्तिप्राक्क्षणे च वह्नेः सत्त्वात् ।

---

जन्यता तन्निरूपितकारणताश्रयो यावानित्यर्थः । विवक्षणीय इत्यादि । तथा च स्वसमानाधिकरणवन्हिमदन्यो यः स्वनिष्ठसंयोगसंबन्धावच्छिन्नजन्यतानिरूपितवन्हितत्संयोगेतरयावत्कारणाधिकरणक्षणः स एव यस्य स्वस्य एवम्भूतं यद्यत् स्वं, तत्तद्व्यक्तित्वावच्छिन्नभेदकूटश्चापाद्यमित्यर्थः पर्यवसितः । उपसंहरति—तथा चेति । प्रसिद्धिरितीति । वन्ह्यसमवहिताजन्यत्वविशिष्टस्य निरुक्तयावत्कारणाधिकरणक्षणकत्वरूपोत्पन्नत्वस्य प्रसिद्धिरित्यर्थः । तथा च संयोगेन धूमोत्पत्तिप्रयोजकवन्हितत्संयोगेतरपर्वतादिरूपतत्तत्कारणाधिकरणक्षणस्य धूमाधिकरणवृत्तिवह्निमदन्यत्वेन स्वपदेन धूमस्यैव धर्तुं शक्यतया यथोक्तोत्पन्नत्वस्य धूमे प्रसिद्धिरिति भावः । यस्य वन्हिनान्तरीयकघटविशेषस्य संयोगेनोत्पादकारणीभूतदण्डादिर्यावानेव तादृशघटाधिकरणवृत्तिवन्हिमदन्यक्षणे वर्त्तते केवलमवयवद्वयसंयोगमात्रं वह्न्यधिकरणकाल उत्पन्नं भवति, तादृशघटविशेषे व्यभिचारः स्याद् यदि यावत्कारणपदेन संयोगसंबन्धावच्छिन्नस्वनिष्ठकार्यतानिरूपितकारणताश्रययावतां विवक्षा स्यात् । निरुक्तघटे स्वसमानाधिकरणवन्हिमदन्यवन्हितत्संयोगेतरतादृशयावत्कारणाधिकरणक्षणकत्वरूपोत्पन्नत्वस्यैव सत्त्वेनापाद्यविरहादित्याशयेन समाधत्ते—यस्येत्यादि । वन्ह्यनधिकरणकाल इति तु तादृशदण्डादिकारणाधिकरणक्षणस्य स्वसमानाधिकरणवन्हिमदन्यत्वरक्षार्थं । तादृशघटस्य वन्हिनान्तरीयकत्वरक्षार्थमाह–केवलमिति ।

नन्वित्यादेः समाधानं—मैवमिति । तथा च यत्रैकस्मिन्काले धूमावयवद्वयोत्पत्ति र्वह्निनाशश्च भवति, ततो धूमावयवद्वयसंयोगो वन्ह्यन्तरोत्पत्तिश्च, ततस्तत्संयोगाद्धूमावयवद्वयसंयोगजन्यस्य वन्हिजन्यतावच्छेदकाक्रान्तधूमविशेषस्योत्पत्तिस्तादृशधूमविशेषे स्वसमानाधिकरणवन्हिमदन्यवन्हितत्संयोगेतरधूमावयवद्वयसंयोगाधिकरणक्षणकत्वरूपपारिभाषिकोत्पन्नत्वस्य प्रसिद्धिरतो नाऽऽपाद्यप्रतियोगिनो विशिष्टस्याऽप्रसिद्धिरिति भावः । निरुक्तधूमोत्पत्तेरव्यवहितप्राक्क्षणे वन्हेरसत्त्वे तस्य वन्हिजन्यत्वं न संभवतीत्याह—उत्पत्तिप्राक्क्षणे चेति । न च धूमावयवद्वयसंयोगानन्तरं धूमोत्पत्तिः स्यादिति वाच्यं, कस्यचित्प्रतिबन्धकस्य तदानीं सत्त्वेन धूमोत्पादाऽ-

इत्यत्र किं धूमोऽवह्नेरेव भविष्यति ? क्वचिद् वह्निं विनापि भविष्यति ? अहेतुक एव वोत्पत्स्यत इति शङ्का स्यात्,

न च तत्रैव विशिष्टप्रसिद्धौ धूममात्रस्य पक्षत्वाद् धूमान्तरेंऽशत इष्टापत्तिरिति वाच्यम्, पक्षतावच्छेदकावच्छेदेनापत्तेरुद्देश्यत्वादिति प्राहुरिति संक्षेपः ।

*अवह्नेरेवेति* । न विद्यते वन्हिर्यत्रेतिव्युत्पत्त्या स्वसमानाधिकरणवह्निमद्भिन्नात् क्षणादेवेत्यर्थः । अव्यवहितोत्तरत्वं पञ्चम्यर्थः । *क्वचिद्वन्हि विनापीति*। किंधूमः क्वचिदव्यवहितपूर्वं स्वसामाधिकरणवन्हि विनापि भविष्यतीत्यर्थः । *अहेतुक इति* । किं धूमो निर्हेतुक एवोत्पत्स्यत इत्यर्थः । *इतिशंका स्यादिति* । इति शंका विरोधिनी स्यादित्यर्थः । आद्यशङ्काद्वयस्य सम्प्रदायमते निरुक्तवन्ह्यसमवहिताजन्यत्वरूपपक्षविशेषणाभावविषयकतया तर्कजनकपरामर्शविघटकत्वेन तर्कविरोधित्वात्,

संभवात् । नचैवमग्रेऽपि कथं धूमोत्पत्तिरिति वाच्यं तादृशप्रतिबन्धकस्य वन्ह्यन्तरोत्पत्तिक्षणादौ विनाशं कल्पयित्वा तादृशधूमोत्पादसंभवादिति वदन्तीत्यास्तां विस्तरः । निरुक्तधूमव्यक्तिविशेषे यथोक्तपारिभाषिकोत्पन्नत्वस्य प्रसिद्धत्वेऽपि धूमान्तरे तादृशोत्पन्नत्वाभावसत्त्वात्तत्रेष्टापत्तिः स्यादित्याशङ्कते—न चेति । तत्रैव=निरुक्तधूमव्यक्तिविशेष एव । विशिष्टप्रसिद्धौ =वन्ह्यसमवहिताजन्यत्वविशिष्टनिरुक्तोत्पन्नत्वस्य प्रसिद्धौ । धूमान्तरे = तादृशधूमव्यक्तिभिन्नधूमे । अंशतः=धूमत्वसामानाधिकरण्येन । इष्टापत्तिः = तादृशापाद्यस्योत्पन्नत्वाभावस्य सत्त्वम् । समाधत्ते—पक्षतेति । तथा च धूमत्वसामानाधिकरण्येन कुत्रचिद्धूमे आपाद्यसत्त्वं न क्षतिकरं पक्षतावच्छेदकीभूतधूमत्वावच्छेदेनैव निरुक्तोपन्नत्वाभावापत्तेरुद्देश्यतया धूमत्वावच्छेदेनैवेष्टापत्तेर्दोषत्वादिति भावः । एतन्मतस्य निर्दोषत्वात् प्रकर्षसूचनाय प्राहुरित्युक्तमिति ध्येयम् ।

अवह्नेरेवेत्यादिमूलं व्याकुरुते—न विद्यत इति । यत्र=क्षणे । पञ्चम्यर्थमन्तर्भाव्य समुदितार्थमाह—स्वसमानेति । तथा च धूमोऽवह्नेरेव भविष्यतीत्यादिप्रथमशङ्का तु 'धूमः स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणको न वे'त्याकारिका पर्यवसिता । क्वचिदित्यस्यार्थमाह—क्वचिदव्यवहितपूर्वमिति । तथा च द्वितीयापि शङ्का धूमः स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणको न वे'त्याकारिका पर्यवसिता । प्रथमा धूमत्वावच्छेदेन, द्वितीया तु धूमत्वसामानाधिकरण्येनातो द्वयोर्नाभेद इत्यग्रे स्वयमेव वक्ष्यते । अहेतुक इतीति । तथा च 'धूमो निर्हेतुक न वे'त्याकारिका शङ्का तृतीया पर्यवसितेति भावः। विरोधिनीति । मूलोक्ततर्क इत्यादिः । मूलोक्ततर्कं प्रति शङ्कात्रयस्य विरोधित्वं व्यवस्थापयति—आद्यशङ्काद्वयस्येति । सम्प्रदायमते=उपाध्यायप्रभृतीनां मते । निरुक्तेति । स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपधूमात्मकपक्षविशेषणाभावविषयकतयेत्यर्थः । तर्केति । तर्कजनको यः पक्षे आपाद्यव्याप्यापादकवत्तानिश्चयरूपः परामर्शस्तद्विघटकत्वेनेत्यर्थः । तर्कविरोधित्वात् = तर्कानुत्पा-

**पक्षतावच्छेदकांशेऽनाहार्यपरामर्शस्यैव तर्कजनकत्वात् । नव्यमते तु निरुक्तवन्ह्यसमवहिताजन्यत्वरूपापाद्यप्रतियोगिविशेषणाभावविषयकतया तर्कजनकापाद्यव्यतिरेकनिर्णयविघटकत्वेन तर्कविरोधित्वात् । तृतीयायास्तु संप्रदायमते व्याप्यसंशयविधया आपाद्याभाववत्तया निश्चिते**

---

दप्रयोजकत्वात् । अयं भावः—आद्यशङ्काद्वयी च स्वसमानाधिकरणवह्निमदन्यत्वाभावविषयिणी, सा तु संशयसामग्रीसंपादकतया संप्रदायमते स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपपक्षतावच्छेदकविशिष्टे धूमे आपाद्यव्याप्यापादकवत्तानिश्चयरूपपरामर्शप्रतिबन्धिका, तादृशपरामर्शस्य पक्षतावच्छेदकविशिष्टपक्षनिश्चयरूपत्वात्, सुतरां परामर्शानुत्पादेन तर्क एव कारणाभावान्नोत्पद्यत इति । ननु तादृशसंशययोः पक्षविशेषणाभावविषयकत्वेऽपि तादृशसंशयसत्त्वे आहार्यात्मकपरामर्शादेव तर्कः सम्भवतीत्यत आह—**पक्षेति** । तथा च पक्षविशेषणाभावावगाहिज्ञानानुत्तरजायमानपरामर्शस्यैव तर्कजनकतया निरुक्तसंशयदशायां जायमानपक्षतावच्छेदकांशे आहार्यात्मकपरामर्शात् तर्को न भवत्येवेति हृदयम् ।

दीधितिकारमते तर्ककारणीभूतो निश्चयस्तु स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपवह्न्यसमवहिताजन्यत्वविशिष्टतादृशपारिभाषिकोत्पन्नत्वनिश्चयः, तादृशनिश्चयं प्रति यथोक्तवह्न्यसमवहिताजन्यत्वाभावज्ञानं विशेषणाभावविषयकज्ञानविधया प्रतिबन्धकं, तादृशं च ज्ञानं 'धूमः स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यो न वे'त्याकारकसंशयः । निरुक्तसंशयसत्त्वे तु यथोक्तापाद्यव्यतिरेकनिश्चय एव न भवति, तादृशनिश्चयाभावे च कारणाभावान्मूलोक्ततर्कोत्पादो न सम्भवतीति तर्कं प्रतिपरम्परया निरुक्तवह्न्यसमवहिताजन्यत्वसंशयः प्रतिबन्धक इत्याह—**नव्यमते त्विति** । दीधितिकृन्मते त्विर्थः । **निरुक्तेति** । स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपं यदापाद्यप्रतियोग्युत्पन्नत्वविशेषणं तदभावविषयकतयेत्यर्थः । **तर्कजनकेति** । न च धूमधर्मिकनिरुक्तवह्न्यसमवहिताजन्यत्वाभावज्ञानात्मकसंशयः कथमुत्पन्नत्वविशेष्यकवन्ह्यसमवहिताजन्यत्वविषयकनिश्चये प्रतिबन्धकः विभिन्नधर्मिकत्वादिति वाच्यं, सामानाधिकरण्यसंबन्धेनोत्पन्नत्वविशेष्यकवन्ह्यसमवहिताजन्यत्वबुद्धेस्तादृशाजन्यत्वाधिकरणत्वेन धूमावगाहितया तत्रापि धूमधर्मिकतादृशविशेषणसंशयस्य प्रतिबन्धकत्वसंभवादिति ध्येयम् । **तर्कविरोधित्वादिति** । मूलोक्तेत्यादिः । यत्राहेतुकत्वं तत्र वह्न्यसमवहिताजन्यत्वविशिष्टवह्निसमवहिताजन्यत्वमित्यहेतुकत्वं तादृशविशिष्टापादकव्याप्यम् । एवञ्चोत्पन्नत्वाभावाभावरूपापाद्यव्यतिरेकनिश्चयविषयीभूते धूमे अहेतुकत्वसंशयो व्याप्यसंशयविधया निरुक्तविशिष्टापादकसंशये हेतुः, तादृशापादकसंशयस्तु व्यभिचारसंशयः पर्यवसितः, तत्सत्त्वे चाऽपाद्यव्याप्तिज्ञानमेवापादके न संभवति अनाहार्यव्यभिचारसंशयस्य व्याप्तिग्रहविरोधित्वात्, तादृशव्याप्तिग्रहाभावे च तर्कोत्पाद एव न संभवति कारणाभावादिति परम्परया तृतीयाया धूमधर्मिकाहेतुकत्वशङ्कायाः संप्रदायमते तर्कविरोधित्वं निर्विवादमित्याह—**तृतीयास्त्विति** । शङ्काया इति शेषः । **व्याप्येति** । विशिष्टापादकस्येत्यादिः । **आपाद्याभावेति** । इदन्तु अनाहार्यनिश्चितापाद्याभाववति आपादकसंशयात्मकव्यभिचार-

सर्वत्र स्वक्रियाव्याघातः स्यात् ।

पक्षे आपादकसंशयात्मकानाहार्यव्यभिचारसंशयाधायकतया तर्कविरोधित्वात् । नव्यमते आश्रये च पक्षे आपाद्यप्रतियोगिकोटिविशेष्यविरोधित्वेन तर्कजनकापाद्यव्यतिरेकनिश्चयविघटकतया तर्कविरोधित्वादिति भावः । न चाद्ययोः शंकयोरभेद इति वाच्यम्; प्रथमा धूमत्वावच्छेदेन, द्वितीया धूमत्वसामानाधिकरण्येनेति भेदात् ।

नचैवं धूमत्वसामानाधिकरण्येन वन्ह्यसमवन्हिताजन्यत्वसत्त्वेऽपि धूमत्वसामानाधिकरण्येन वन्ह्यसमवहिताजन्यत्वनिश्चये बाधकाभावाद् द्वितीयसंशयस्य कुतः तर्कविरोधित्वमिति वाच्यम्; विशेष्यतावच्छेदकसामानाधिकरण्येन बाधनिश्चयस्य विशेष्यतावच्छेदकसामानाधिकरण्येन विशिष्टबुद्ध्यप्रतिबन्धकत्वेऽपि विशेष्यतावच्छदकसामानाधिकरण्येन बाधसंशयस्य संशयसामग्रीसंपादकतया विशेष्यतावच्छेदकसामानाधिकरण्येन विशिष्टनिश्चयं प्रत्यपि प्रतिबन्धकत्वात् ।

*सर्वत्रेति* । षष्ठ्यर्थे सप्तमी, सर्वस्याः शङ्काया इत्यर्थः । *स्वक्रियासंशयप्रदर्शनार्थमभिहितम् । आपादकेति वन्ह्यसमवहिताजन्यत्वविशिष्टवह्निसमवहिताजन्यत्वरूपापादकार्थकम् । तर्कविरोधित्वादिति । मुलोक्तेत्यादिः ।

नव्यमते तु धूमः अहेतुको न वेत्याकारकसंशयो हेतुजन्यत्वसामान्याभावविषयकतया धूमधर्मिकविशिष्टोत्पन्नत्वरूपापाद्यव्यतिरेकनिश्चये प्रतिबन्धकः सामान्यभावज्ञानस्य विशेषवत्ताबुद्धौ प्रतिबन्धकत्वादिति तर्कजनकापाद्यव्यतिरेकनिश्चयविघटकतया मूलोक्ततर्कविरोधित्वं नव्यमते तृतीयाया अपिशङ्कायाः संभवत्येवेत्याह—नव्यमत इति । पक्षे= धूमे । प्रथमशङ्काया द्वितीयायाश्च भेदं प्रदर्शयितुं न चेत्याद्याशङ्क्य समाधत्ते-प्रथमेति । तथा च प्रथमा स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितपूर्वक्षणकान्यत्वशङ्का धूमत्वावच्छेदेन, द्वितीया तु तादृशी शङ्का धूमत्वसामानाधिकरण्येनेति तयोः शङ्कयोर्भेद इति भावः । यथा धर्मितावच्छेदकसामानाधिकरण्येन तदभावनिश्चयो धर्मितावच्छेदकसामानाधिकरण्येन तत्प्रकारकबुद्धिं न प्रतिबध्नाति, तथा द्वितीयाया अपि वन्ह्यसमवहिताजन्यत्वशङ्काया धूमत्वसामानाधिकरण्येन धूमधर्मिकतया धूमत्वसामानाधिकरण्येन धूमधर्मिकवन्ह्यसमवहिताजन्यत्वबुद्धिं मा प्रतिबध्नात्विति द्वितीयशङ्कायाः कथं तर्कविरोधित्वमिति शङ्कते—न चैवमिति । एवं=द्वितीयशङ्काया धूमत्वसामानाधिकरण्यावगाहित्वे । समाधत्ते—विशेष्यतेति । तथा च बाधनिश्चयस्य सामानाधिकरण्येन विशिष्टबुद्धिप्रतिबन्धकत्वाभाववत्त्वेऽपि धर्मितावच्छेदकीभूतधूमत्वादिसामानाधिकरण्येन तदभावसंशयस्तत्प्रकारकबुद्धिं प्रतिबध्नात्येव, सामानाधिकरण्येन तदभावसंशयस्य सामानाधिकरण्येन तादृशसंशयसामग्री ˈपादकत्वात् , सामानाधिकरण्येन तत्प्रकारकनिश्चयोत्पादासंभवाद्धूमत्वसामानाधिकरण्येन द्वितीयसंशयोऽपि धूमत्वसामानाधिकरण्येन वन्ह्यसमवहिताजन्यत्वनिश्चयं प्रति प्रतिबन्धक एवेति भावः ।

मूलस्थसर्वत्रेत्यत्र सप्तम्यर्थान्वयासंभवादाह—षष्ठ्यर्थे सप्तमीति ।

यदि हि गृहीतान्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शङ्केत तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं शब्दस्य चोपादानं नियमतः कथं कुर्यात् ? तेन विनापि

---

व्याघात इति* । स्वं = तर्कप्रयोक्ता पुरुषः, तस्य या क्रिया=वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानं, क्रियते प्रवर्ततेऽनेनेतिव्युत्पत्तेः, तेन व्याघातः तत्प्रयुक्तोऽनुत्पाद इत्यर्थः । अन्वयव्यतिरेकाभ्यां प्रत्यक्षतो वन्हिजन्यत्वनिश्चये एवैतत्तर्कस्य सहकारितया वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्यावश्यं पूर्वं सत्त्वादिति भावः ।

अन्वयव्यतिरेकानुविधायित्वज्ञानस्य तादृशशङ्कानुत्पादप्रयोजकत्वे मानमाह—*यदि हीति* । *गृहीतान्वयेति* । तदन्वयव्यतिरेकानुविधायित्वज्ञानसत्त्वेऽपि तदसमवहिताजन्यत्वं सामान्यतोऽहेतुकत्वं वा शङ्केतेत्यर्थः । परप्रतिपत्त्यर्थं = परकीयशाब्दबोधार्थम् । उपादानं = प्रयत्नः । नियमतः = अन्वयव्यतिरेकाभ्यां प्रत्यक्षेण धूमादिरूपेष्टसाधनतानिश्चयतः । नहि धूमादौ वह्न्याद्यसमवहितोत्पत्तिकत्वस्याहेतुकत्वस्य वा ग्रहस्य सामग्र्यां सत्यां वन्ह्यादौ धूमादिरूपेष्टसाधनतानिश्चयः सम्भवतीत्याह—*तेनेति* । तादृशग्रहसामग्रीसमवधानेनेत्यर्थः । विनापि = विनैव । तत्स-

---

तर्कप्रयोक्ता=तर्कप्रयोगकर्ता । तस्य=तर्कप्रयोक्तुः पुरुषस्य । भावार्थकक्रियायाः शङ्काप्रतिबन्धकत्वे मानाभावादाह-क्रियत इति । तेन=वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानेन । इत्यर्थ इति । तथा च तर्कपूर्वकालीनं यद्वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानं तदेव प्रथमशङ्काया द्वितीयशङ्कायास्तृतीयशङ्कायाश्च प्रतिबन्धकमित्याशयः । ननु वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य तर्कपूर्वकालीनत्वं कथं संभवतीत्यत आह—अन्वयेति । तथा च मूलोक्ततर्केण वह्निजन्यत्वनिश्चयो भवति, तादृशनिश्चये च वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानं कारणम्, अतस्तर्कपूर्वं तादृशज्ञानस्य सत्त्वमावश्यकमिति भावः ।

अन्वयेति । वन्ह्यन्वयेत्यर्थकम् । तादृशेति । स्वसमानाधिकरणवह्निमदन्यत्वाव्यवहितप्राक्क्षणकान्यत्वशङ्काया अहेतुकत्वशङ्कायाश्चानुत्पादप्रयोजकत्व इत्यर्थः । तदन्वयेति वह्न्यन्वयेत्यर्थकम् । तदसमवहितेति । वन्ह्यसमवहिताजन्यत्वमित्यर्थः । सामान्यत इति । कार्यमहेतुकं नवेत्यर्थः । मूले स्वयमेवेति । शङ्कावान् पुरुष एवेत्यर्थः । तथा च कार्यमात्रे यदि अहेतुकत्वादिशङ्का स्यात्तदा वह्नौ धूमसाधनतानिश्चयासंभवात्, भोजने च तृप्तिसाधन तानिश्चयाऽसंभवात, शब्देऽपि परप्रतिपत्तिसाधनतानिश्चयस्याऽसंभवात्, इष्टसाधनताज्ञानाभावेन वन्ह्यादौ प्रवृत्तिरेव न संभवतीत्याशयपरोऽयं मूलग्रन्थो बोध्यः । टीकायां नियमत इत्यस्य व्याख्यामाह—अन्वयेति । वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानाधीनधूमादिरूपेष्टसाधनतानिश्चयत इत्यर्थः । ग्रहस्य = शङ्कायाः । तादृशेति । वन्ह्यसमवहिताजन्यत्वाहेतुकत्वादिसंशयरूपतादृशसंशयसामग्रीसमवधानेनेयर्थः । निरुक्तसंशयसामग्र्या एव तादृशेष्टसाधनतानिश्चयविघटकतया विनापीत्यत्रापिकारस्यैवार्थकत्वमाह—विनैवेति ।

तत्सम्भवात् । तस्मात्तदुपादानमेव तादृशशङ्काप्रतिबन्धकम् ।

म्भवात् = वह्न्यादौ धूमादिरूपेष्टसाधनतानिर्णयसम्भवात् । ननु कार्यानुत्पादस्य कारणविरहमात्रप्रयुक्तत्वात् कथं तादृशानुत्पादस्य स्वक्रियाप्रयुक्तत्वमत आह-* तस्मादिति * । प्रयत्नान्यथानुपपत्त्येति शेषः । *तदुपादनमेवेति* । वन्ह्युपादानमित्यर्थः । उपादानञ्चोपादत्ते प्रवर्ततेऽनेनेतिकरणव्युत्पत्त्या प्रवृत्तिप्रयोजकीभूतान्वयव्यतिरेकानुविधायित्वज्ञानपरम् ।

यत्तु भावव्युत्पत्त्या उपादानं प्रवृत्तिः, पूर्वमपि स्वक्रियापदं तत्परमिति, तन्न, प्रवृत्तेः शङ्काप्रतिबन्धकत्वे मानाभावात्, प्रवृत्तेः कारणताग्रहोत्तरकालीनत्वेन तत्पूर्ववर्तिशङ्काप्रतिबन्धकत्वासम्भवाच्च ।

केचित्तु करणव्युत्पत्त्या उपादानपदं धूमादिसाधनतानिश्चयपरं, पूर्व-

तथा च तादृशसंशयसामग्र्यभावदशायामेवेत्यर्थः । वन्ह्यादाविति । तथा च वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानसत्त्वेऽपि यदि वन्ह्यसमवहिताजन्यत्वादिसंशयः स्यात्तदा तादृशसंशयस्यैव वन्ह्यादौ धूमसाधनतानिश्चयप्रतिबन्धकतया निरुक्तनिश्चयानुत्पत्तौ धूमार्थं वन्ह्यादौ प्रयत्न एव न संभवतीति हृदयम् ।

नन्विति । कार्यानुत्पादस्य तादृशसंशयादिरूपकार्यानुत्पादस्य । कारणेति । संशयादिकारणीभूतदोषाद्यभावप्रयुक्तत्वादित्यर्थः । स्वक्रियेति पूर्वोक्तार्थकम् । प्रयत्नेति । तथा च वन्ह्यादौ प्रयत्नानुत्पादार्थमेव वन्ह्याद्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य पूर्वोक्तशङ्काप्रतिबन्धकत्वमावश्यकमिति भावः । यथाश्रुतोपादानपदस्य प्रवृत्त्यर्थकत्वे प्रवृत्तेः शङ्काप्रतिबन्धकत्वं न संभवतीत्यत उपादानपदस्य प्रवृत्तिकरणार्थकत्वमाह-उपादत्त इत्यादि । प्रवृत्तिप्रयोजकीभूतेति । इष्टसाधनतानिश्चयं सम्पाद्य अन्वयव्यतिरेकानुविधायित्वज्ञानं प्रवृत्तिप्रयोजकमित्यवधेयम् ।

पूर्वं स्वक्रियापदं तार्किकपुरुषप्रवृत्तिपरम्, अत्राप्युपादानपदं करणल्युटा प्रवृत्तिप्रयोजकीभूतान्वयव्यतिरेकानुविधायित्वज्ञानपरं न वाच्यम्; अपि तु भावल्युटा प्रवृत्तिपरमेव । तथा च तार्किकपुरषीयप्रवृत्तेरेव सर्वस्या एव पूर्वोक्तायाः शङ्कायाः प्रतिबन्धकत्वं संभवतीतिमतं दूषयितुमुपन्यस्यति—यत्त्विति । पूर्वमपि = पूर्वोक्तमपि । तत्परम् = प्रवृत्तिपरम् । प्रवृत्तेः शङ्काविषयीभूतकोटेरभावानवगाहितया तादृशशङ्काप्रतिबन्धकत्वमप्रामाणिकमित्याशयेन दूषयति—तन्नेति । मानाभावादिति । अभावानवगाहिज्ञानातिरिक्तस्य प्रतिबन्धकताया अदृष्टचरत्वादित्याशयः । न मणिमन्त्रादिन्यायेनैव प्रवृत्तेः शङ्काप्रतिबन्धकताया आवश्यकत्वे उपादानादिपदस्य करणव्युत्पत्तिप्रदर्शनमनर्थकमित्यत आह-प्रवृत्तेरित्यादि । तथा च मूलोक्ततर्केण वह्नौ धूमजनकत्वनिश्चयस्ततः प्रवृत्तिरिति प्रवृत्तेः कारणतानिश्चयोत्तरकालीनत्वात्तर्कपूर्ववर्त्तिवह्न्यसमवहिताजन्यत्वादिसंशयप्रतिबन्धकत्वं न संभवति प्रतिबन्धकस्य शङ्कापूर्वमवस्थितस्यैव शङ्कानुत्पादप्रयोजकतया कारणतानिश्चयोत्तरकालीनायाः प्रवृत्तेस्तादृशशङ्कानुत्पादप्रयोजकत्वाऽसंभवादिति भावः ।

उपादानपदं धूमादिरूपेष्टसाधनतानिश्चयपरम् । एवं पूर्वमपि स्वक्रियापदं तादृश-

शङ्कायां न नियतोपादानं, नियतोपादाने च न शङ्का।

---

मपि स्वक्रियापदं तत्परमित्याहुस्तदसत्; धूमादिसाधनतानिश्चयस्य तर्कोत्तरकालीनत्वेन तत्पूर्ववर्त्तिशङ्काप्रतिबन्धकत्वाभावात्।

तस्य शङ्काप्रतिबन्धकतायामन्वयव्यतिरेकौ दर्शयति—*शङ्कायामिति*। यत इत्यादिः। यतः शङ्कायामुत्पद्यमानायां न नियतोपादानं=नान्वयव्यतिरेकानुविधायित्वज्ञानं, नियतोपादाने च=अन्वयव्यतिरेकानुविधायित्वज्ञाने च न शङ्केत्यर्थः। नियतमुपादानं यस्येतिव्युत्पत्त्या नियतोपादानपदस्यान्वयव्यतिरेकानुविधायित्वज्ञानपरत्वात्। न च वन्ह्यन्वयव्यतिरेकानुविधायित्वस्य वन्हिसत्त्वे उत्पद्यमानत्वे सति वह्निं विनानुत्पद्यमानत्व-

---

निश्चयपरं करणव्युत्पत्त्यैव बोध्यमित्यपि केषाञ्चिन्मतं दूषयति—तदसदिति। अत्रापि वह्नौ धूमजनकत्वनिश्चयरूपधूमादिसाधनतानिश्चयस्य तर्कोत्तरकालीनत्वात्तर्कपूर्वकालीनायास्तादृशाहेतुकत्वादिशङ्कायाः पूर्वोक्तनिश्चयेन प्रतिबन्धाऽसंभवान्नैतन्मतं युक्तमिति हृदयम्। तस्य=वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य। शङ्कासत्त्वे अन्वयव्यतिरेकानुविधायित्वज्ञानरूपं शङ्काप्रतिबन्धकं नास्तीत्यवगम्यत इत्याह—शङ्कायामिति। अत्रापि नियतोपादानपदं पूर्वोक्तार्थकमेवेत्याह—नियतोपादानमिति। इष्टसाधनतानिश्चयजन्या प्रवृत्तिरित्यर्थः। अन्वयेति। तथा चेष्टसाधनतानिश्चयं सम्पाद्य वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानमेव प्रवृत्तिप्रयोजकतया नियतोपादानपदेनाभिहितमित्याशयः।

ननु वह्न्यन्वयव्यतिरेकानुविधायित्वस्य स्वसमानाधिकरणवह्निमत्त्वाव्यवहितप्राक्क्षणकत्वे सति स्वसमानाधिकरणवह्निमदन्यत्वाव्यवहितप्राक्क्षणकान्यत्वस्वरूपतया तन्निश्चयस्य धूमः स्वसमानाधिकरणवह्निमदन्यत्वाव्यवहितप्राक्क्षणकान्यो न वेत्याकारकवन्ह्यसमवहिताजन्यत्वसंशयात्मकस्वसमानाधिकरणवह्निमदन्यत्वाव्यवहितप्राक्क्षणकान्यत्वाभावबुद्धौ तदभावप्रकारकनिश्चयविधया प्रतिबन्धकत्वं तु निर्विवादमेव। धूमत्वावच्छेदेन तादृशप्राक्क्षणकान्यत्वाभावबुद्धौ धूमत्वसामानाधिकरण्येन यथोक्तवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य प्रतिबन्धकतायाः सर्वानुभवसिद्धत्वात्। एवमपि धूमोऽहेतुको नवेत्याकारकतृतीयशङ्कां प्रति कथमुक्तवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य प्रतिबन्धकत्वं निरुक्तसंशयात्मकाहेतुकत्वबुद्धौ तादृशाहेतुकत्वाद्यभावनिश्चयस्यैव तदभावप्रकारकनिश्चयविधया प्रतिबन्धकतया निरुक्तवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य निरुक्ताहेतुकत्वसंशयीयकोट्यभावानवगाहित्वात्। एवं धूमत्वसामानाधिकरण्येन प्रागुक्तवह्न्यसमवहिताजन्यत्वसंशयात्मकद्वितीयशङ्कां प्रत्यपि कथं वोक्तवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य प्रतिबन्धकत्वं संभवति निरुक्तनिश्चयस्य तादृशसंशयीयकोट्यभावावगाहित्वेऽपि सामानाधिकरण्यावगाहिवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य सामानाधिकरण्यावगाहिवह्न्यसमवहिताजन्यत्वाभावाभावावगाहिसंशयाऽप्रतिबन्धकत्वादित्याशङ्कते-नचेति। वह्नीति। स्वसमानाधिकरणवह्निमत्त्वाव्यवहितप्राक्क्षणकत्वे सतीत्यर्थः। वह्निं विनेति।

रूपतया निरुक्तवह्न्यसमवहितजन्यत्वाभावघटितत्वेन तन्निश्चयस्य बाधनिश्चयतया प्रथमसंशयप्रतिबन्धकत्वसम्भवेऽपि विरोध्यविषयकतया कथं तृतीयशङ्काप्रतिबन्धकत्वं ? कथं वा द्वितीयशङ्काप्रतिबन्धकत्वमपि ? अंशतो बाधनिश्चयस्य विशेष्यतावच्छेदकसामानाधिकरण्येन संशया प्रतिबन्धकतया बाधनिश्चयविधया द्वितीयशङ्काप्रतिबन्धकत्वासंभवादिति वाच्यम्; वन्ह्यन्वयव्यतिरेकानुविधायित्वावच्छेदेन वह्निजन्यालोकादौ नान्तरीयकवह्निके घटादौ च वह्न्यसमवहिताजन्यत्वसहेतुकत्वनिश्चयात् व्यावर्तकधर्मदर्शनविधयैव तस्य तादृशशङ्कायामपि प्रतिबन्धकत्वात्। न चांशतो

स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वरूपतयेत्यर्थः । निरुक्तेति । स्वसमानाधिकरणवह्निमदन्यस्वाव्यवहितप्राक्क्षणकान्यत्वाभावघटिततयेत्यर्थः । तन्निश्चयस्य = निरुक्तप्राक्क्षणकत्वाभावघटितवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य । बाधनिश्चयतया = धूमधर्मिकवह्न्यसमवहिताजन्यत्वसंशयविषयीभूतवह्न्यसमवहिताजन्यत्वाभावाभावनिश्चयरूपतया वह्न्यसमवहिताजन्यत्वनिश्चयरूपतयेति यावत्। विरुद्धविषयकतया=धूमधर्मिकाहेतुकत्वसंशयीयाहेतुकत्वाद्यभावाविषयकतया । द्वितीयशङ्केति । न च वह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य धूमत्वावच्छेदेन स्वीकारादेव प्रथमशङ्कां प्रति, समानाधिकरण्येन द्वितीयशङ्कां प्रत्यपि प्रतिबन्धकत्वसंभवे कथं वा द्वितीयशङ्केत्याद्यभिधानमसङ्गतमिति वाच्यं, वह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य प्रत्यक्षनिश्चयात्मकतया धूमत्वावच्छेदेन तन्निश्चयोत्पादासंभवादिति भावः । अंशतः=सामानाधिकरण्येन । बाधनिश्चयविधया=द्वितीयशङ्काविषयकोटयभावावगाहिनिश्चयत्वेन वह्न्यन्वयव्यतिरेकानुविधायित्ववान् वह्न्यसमवहिताजन्यत्ववान् वह्न्यन्वयव्यतिरेकानुविधायित्ववांश्च धूम इत्याकारकनिश्चयविशिष्टनिश्चयस्य धूमधर्मिकवह्न्यसमवहिताजन्यत्वाभावबुद्धौ प्रतिबन्धकताया वह्न्यन्वयव्यतिरेकानुविधायित्ववान् सहेतुकत्ववान् वह्न्यन्वयव्यतिरेकानुविधायित्ववांश्च धूमइत्याकारकनिश्चयविशिष्टनिश्चयस्य धूमधर्मिकसहेतुकत्वाभावबुद्धावपि प्रतिबन्धकतायाश्च सर्वानुभवसिद्धतया तादृशनिश्चयविशिष्टनिश्चयमादायैव धूमो वन्ह्यसमवहिताजन्यो न वेत्याकारकद्वितीयशङ्काया धूमो सहेतुको न वेत्यकारकतृतीयशङ्कायाश्चानुत्पादस्यैव मूलाभिप्रेतत्वमित्याशयेन समाधत्ते—वह्न्यन्वयव्यतिरेकानुविधायित्वावच्छेदेनेति । यत्र वह्न्यन्वयव्यतिकानुविधायित्वं तत्रैव वह्न्यसमवहिताजन्यत्वं सहेतुकत्वञ्चेति प्रदर्शयितुमाह—वह्निजन्येति । न केवलं वह्निजन्यालोकादौ तादृशावच्छेदकधर्मदर्शनमपि तु अन्यत्रापीत्याह—नान्तरीयकेति । वह्न्येति = प्रत्यक्षत इत्यादिः । व्यावर्त्तकेति । सहेतुकत्वाभावादिव्यावृत्तिप्रयोजकीभूतावच्छेदकधर्मदर्शनतयैवेत्यर्थः । एवकारादवच्छेदकधर्मदर्शनानात्मकवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य सहेतुकत्वादिसंशयप्रतिबन्धकत्वव्यवच्छेदः । तस्य = तादृशान्वयव्यतिरेकानुविधायित्वनिश्चयस्य ।

ननु यथा सामानाधिकरण्येन बाधनिश्चयः सामानाधिकरण्येन तत्प्रकारकबुद्धौ न प्रतिबन्धकस्तथा धूमत्वसामानाधिकरण्येन निरुक्तव्यावर्त्तकधर्मदर्शनमपि धूमत्वसामाना-

बाधनिश्चयवत् अंशतो व्यार्तकधमदर्शनमपि न विशेष्यतावच्छेदकसामानाधिकरण्येन संशयनिवर्तकमिति वाच्यम्; बाधनिश्चयस्थले तथा नियमेऽपि व्यावर्तकधर्मदर्शनादिस्थले तथानियमविरहात् । न चैवं वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानं व्यावर्तकधर्मदर्शनविधया वह्निजन्यत्वसंशयं प्रत्येव प्रतिबन्धकमस्तु किमुक्ततर्केणेति वाच्यम्; अनन्यथासिद्धत्वाविशेषितस्य वह्न्यन्वयव्यतिरेकानुविधायित्वस्य नान्तरीयकवह्निके घटादौ वह्निजन्यत्वव्यभिचारितया वह्निजन्यत्वाभावव्यावर्तकत्वाभावात् तद्विशेषितस्य वह्न्यन्वयव्यतिरेकानुविधायित्वस्य च वह्निजन्यत्वानतिरिक्तत्वात्,

---

धिकरण्येन वन्ह्यसमवहिताजन्यत्वाभावबुद्ध्यात्मकद्वितीयशङ्कां मा प्रतिबध्नात्वित्येवं पुनरप्याशङ्क्य समाधत्ते—बाधेति । तथा च सामानाधिकरण्येन बाधनिश्चयस्य सामानाधिकरण्येन तत्प्रकारकबुद्धावप्रतिबन्धकत्वेऽपि सामानाधिकरण्येनावच्छेदकधर्मदर्शनस्य सामानाधिकरण्येनापि तत्प्रकारकबुद्धिप्रतिबन्धकत्वं प्राचीनमतसिद्धमेवेति भावः । नचैवमिति । एवं=वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्यावच्छेदकधर्मदर्शनविधया द्वितीयशङ्कां प्रति तृतीयशङ्कां प्रत्यपि प्रतिबन्धकत्वाभ्युपगमे ।

व्यावर्तकेति । तथा च वन्ह्यन्वयव्यतिरेकानुविधायित्ववान् वह्निजन्यत्ववान्, वन्ह्यन्वयव्यतिरेकानुविधायित्ववांश्च धूम इत्याकारकनिश्चयविशिष्टनिश्चयस्य धूमधर्मिकवह्निजन्यत्वाभावबुद्धौ प्रतिबन्धकतया धूमो वह्निजन्यो न वेत्याकारकसंशयं प्रत्यपि निरुक्तरीत्या वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्यैव प्रतिबन्धकत्वसंभवे मूलोक्ततर्कानुसरणं विफलं स्यात्, वह्निजन्यत्वसंशयनिवृत्त्यर्थमेव निरुक्ततर्कानुसरणस्याऽऽवश्यकतायाः पूर्वमभिहितत्वादित्येवं शङ्काग्रन्थस्य तात्पर्यमवसेयम् ।

वन्ह्यन्वयव्यतिरेकानुविधायित्वमात्रस्य तु नान्तरीयकवह्निके घटादौ वर्त्तमानतया तत्र वह्निजन्यत्वाऽसत्त्वेन वन्ह्यन्वयव्यतिरेकानुविधायित्वस्य वह्निजन्यत्वव्यभिचारित्वाद्वह्निजन्यत्वाभावव्यावृत्तिप्रयोजकतायास्तत्र वक्तुमशक्यत्वात् । अन्यथासिद्धत्वानिरूपकत्वविशिष्टस्य वन्ह्यन्वयव्यतिरेकानुविधायित्वस्य तादृशघटादाववर्त्तमानस्याऽऽलोकादिनिष्ठस्य वह्निजन्यतावच्छेदकतया वह्निजन्यत्वाभावव्यावर्त्तकत्वसंभवेऽपि अनन्यथासिद्धत्वविशिष्टस्य वह्न्यन्वयव्यतिरेकानुविधायित्वस्य वह्निजन्यत्वस्वरूपतया तन्निश्चयस्य तर्कोत्तरकालीनत्वेन तस्य तर्कपूर्वकालीनशङ्काप्रतिबन्धकत्वाऽसंभवात्, स्वस्य स्वावच्छेदकत्वाऽसंभवाच्च न तर्कवैफल्यमित्याह—अनन्यथेति । अन्यथासिद्धत्वाऽनिरूपकत्वाविशेषितस्येत्यर्थः । नान्तरीयकेति । तादृशघटे केवलस्य वन्ह्यन्वयव्यतिरेकानुविधायित्वस्य सत्त्वेऽपि वह्निजन्यत्वस्य तत्र विरहादिति भावः । तद्विशेषितस्य=अनन्यथासिद्धत्वविशिष्टस्य । वह्निजन्यत्वेति । वह्निजन्यत्वस्य वह्निजन्यतावच्छेदकधर्मत्वं न संभवति, न वा तादृशवह्निजन्यत्वनिश्चयस्तर्कपूर्वकालीन इति हृदयम् ।

ननु अनन्यथासिद्धत्वाविशेषितवन्ह्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य वह्निनान्तरीयकघटादौ सत्त्वेऽपि तत्र वह्निजन्यत्वव्यभिचाराऽग्रहकाले भ्रमात्मकवह्निजन्यत्वनिश्चयसंभवाद् वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानमेवावच्छेदकधर्मदर्शनविधया वह्निजन्यत्वशङ्काप्र-

उपायान्तरस्य उपायान्तरादूषकत्वाच्च ।

न च सर्वत्र धूमे वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानविरहाद् यत्र तादृशज्ञानं तत्र वह्न्यसमवहितजन्यत्वादिसंशयासम्भवेऽपि धूमान्तरे तत्संशये किं बाधकमिति वाच्यम्; समानधर्मितावच्छेदकव्यावर्तकधर्मदर्शनस्यैव प्रतिबन्धकतया धूमत्वरूपेण यत्किञ्चिद्धूमे वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानसत्त्वे धूमान्तरेऽपि तेन रूपेण वह्न्यसमवहितजन्यत्वसंशयायोगात्, गृहीतान्वयव्यतिरेकधूमव्यक्तिविशेषस्यैव वा धूमत्वरूपेण तर्के पक्षतया धूमान्तरे तत्संशयेऽपि क्षतिविरहात् ।

---

तिबन्धकत्वं संभवतीति तर्कवैफल्यं दुर्वारमेवेत्यत आह—उपायेति । निरुक्तावच्छेदकधर्मदर्शनात्मकतर्कातिरिक्तवह्निजन्यत्वशङ्काप्रतिबन्धकस्येत्यर्थः । उपायान्तरेति । तर्करूपोपायान्तरस्याऽदूषकत्वादित्यर्थः । तथा चैकेन वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानेन वह्निजन्यत्वशङ्कानिवृत्तिसंभवेऽपि तन्निवृत्त्यर्थं तर्कानुसरणस्य न वैफल्यम्, एकस्मिन् कार्ये नानाप्रतिबन्धकसद्भावे क्षतिविरहादिति भावः ।

अथ प्रत्यक्षतः कुत्रचिद्धूमे वन्ह्यन्वयव्यतिरेकानुविधायित्वनिश्चयसंभवेऽपि यस्मिन् धूमे तादृशनिश्चयो नोत्पन्नस्तत्र वन्ह्यसमवहिताजन्यत्वसंशयः स्यात् प्रत्यक्षतस्तादृशान्वयव्यतिरेकानुविधायित्वनिश्चयस्य सर्वत्र धूमेऽसंभवात् । न चेष्टापत्तिः अवच्छेदावच्छेदेनैवापत्तेरुद्देश्यत्वादिति न चेत्यादिनाऽऽशङ्क्य समाधत्ते—समानेति । धूमत्वादिसमानधर्मितावच्छेदकवह्न्यन्वयव्यतिरेकानुविधायित्वरूपव्यावर्त्तकधर्मदर्शनस्यैवेत्यर्थः । प्रतिबन्धकेति । तथा च यद्रूपावच्छिन्नविशेष्यकयद्व्यावर्त्तकधर्मज्ञानं भवति तद्रूपावच्छिन्नविशेष्यकतत्प्रकारकज्ञानं प्रत्येव व्यावर्त्तकधर्मदर्शनं प्रतिबन्धकमिति धूमत्वेन रूपेण वह्न्यसमवहिताजन्यत्वाभावव्यावर्त्तकवह्न्यन्वयव्यतिरेकानुविधायित्वनिश्चयस्य यत्किञ्चिद्धूमधर्मिकत्वेऽपि धूमत्वेन रूपेण धूमान्तरे वह्न्यसमवहिताजन्यत्वाभावकोटिकसंशयप्रतिबन्धकत्वं निराबाधमेवेत्याशयः । यदि च धूमत्वेन रूपेण यत्किञ्चिद्धूमे वह्न्यन्वयव्यतिरेकानुविधायित्वरूपव्यावर्त्तकधर्मज्ञानसत्त्वे धूमान्तरे तादृशज्ञानं न वह्न्यसमवहिताजन्यत्वज्ञानं प्रति प्रतिबन्धकं समानविशेष्यकत्वस्यैव प्रतिबन्धकतायां तन्त्रत्वादित्युच्यते तदाप्याह—गृहीतेति । वह्न्यन्वयव्यतिरेकानुविधायिधूमव्यक्तिविशेषस्यैवेत्यर्थः । तर्के=मूलोक्ततर्के । धूमान्तरे=गृहीतान्वयव्यतिरेकधूमभिन्ने धूमे । तत्संशयेऽपि=वह्न्यसमवहिताजन्यत्वसंशयेऽपि । क्षतिविरहादिति । तथा च वह्निजन्वयव्यतिरेकानुविधायी धूमो यदि वह्निजन्यत्वाभाववान् स्यात्तदा वह्न्यसमवहिताजन्यत्वविशिष्टोत्पन्नत्वाभाववान् स्यादित्यस्यैव नव्यमतसिद्धतर्कतया धूमान्तरस्य पक्षत्वाभावेन तत्र वह्न्यसमवहिताजन्यत्वस्य सन्देहेऽपि निरुक्ततर्के तादृशसन्देहस्याऽप्रतिबन्धकतया निरुक्तगृहीतान्वयव्यतिरेकधूमपक्षकतर्कोत्पत्तौ बाधकाभावादित्याशयः ।

नन्वेवमपि मूलोक्ततर्कप्रतिबन्धकस्य वह्न्यसमवहिताजन्यत्वादिसंशयस्य निरुक्ततर्कभिन्नतर्केतरवह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानान्निवृत्तावपि यथोक्ततर्कमूलीभूतव्याप्तिग्रहप्रतिबन्धकव्यभिचारसंशयप्रतिबन्धार्थं तर्कान्तरानुसरणावश्यकत्वेऽनवस्था स्यात् । य-

न चैतावता वह्न्यसमवहितजन्यत्वादिसंशयस्य तर्कैतरप्रतिबन्धकवशान्निवृत्तावपि व्यभिचारसंशयनिवृत्त्यर्थमवश्यं तर्कान्तरापेक्षा, पक्षभिन्ने आपाद्याभावविरहेऽपि आपाद्योभावांशे भ्रमात्मकस्य पक्षभिन्ने व्यभिचारसंशयस्य सम्भवादिति वाच्यम् ; अनायत्त्या व्यभिचारसंशयं प्रत्यपि तत्तदन्वयव्यतिरेकानुविधायित्वज्ञानव्यक्तेर्विरोध्यविषयकत्वेऽपि प्रतिबन्धक-

यपि नव्यमते वह्न्यसमवहिताजन्यत्वविशिष्टोत्पन्नत्वस्यापाद्याभावस्य धूम एव प्रसिद्धतया तत्र चापादकाभावस्य वह्निजन्यत्वस्य निश्चितत्वेनापादके आपाद्याभाववद्वृत्तित्वरूपव्यभिचारसंशय एव न संभवति, तथापि पक्षीभूतधूमातिरिक्तरासभादौ तादृशोत्पन्नत्वरूपापाद्याभावभ्रमसंशयदशायां तत्रापादकस्यापि संशयान्निरुक्तोत्पन्नत्वरूपविशेषणसंशयाधीनस्य विशिष्टोत्पन्नत्ववद्वृत्तित्वरूपव्यभिचारसंशयस्यैवावश्यावर्जितस्यापादके सत्त्वं नासंभवीति तादृशव्यभिचारशङ्कानिवृत्त्यर्थं तर्कान्तरानुसरणेऽनवस्था स्यादित्याशङ्कते—**नचेति** । वाच्यमित्यन्वयि । **तर्केतरेति** । वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानरुपप्रतिबन्धकवशादित्यर्थः । निवृत्तावपि = अनुत्पादेऽपि । **तर्कान्तरापेक्षेति** । तथा चानवस्था तदवस्थेति भावः । **आपाद्याभावविरहेऽपीति** । इदन्तु नव्यमतानुसारेण बोध्यम् । संप्रदायमते तु उत्पन्नत्वमात्रस्यैवाऽपाद्याभावतया तस्य पक्षीभूतधूमातिरिक्तेऽपि प्रसिद्धिसंभवादिति ध्येयम् । पक्षभिन्ने = धूमभिन्नरासभादौ । व्यभिचारसंशयस्य=आपाद्याभावभ्रमविषयीभुते रासभादौ आपादकवृत्तित्वसंशयस्य ।

समाधत्ते—**अनायत्येति** । उपायान्तराभावादित्यादिः । **तत्तदिति** । तद्व्यक्तित्वेन प्रतिबन्धकत्वकल्पनार्थकम् , तेन न विनिगमनाविरह इति भावः । विरुद्धविषयकत्वेऽपि= ग्राह्याभावानवगाहित्वेऽपि, तादृशव्यभिचाराद्यभावानवगाहित्वेऽपीति यावत् । **प्रतिबन्धकत्वोपगमादिति** । मणिमन्त्रादिन्यायेनेत्यादिः । तथा च निरुक्ततर्कमूलीभूतव्याप्तिग्रहप्रतिबन्धकव्यभिचारसंशयस्याऽपि तर्कान्तरं विनैव निरुक्तवह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानादेवानुत्पादसंभवे नानवस्थेत्याशयः ।

केचित्तु निरुक्ततर्कमूलीभूतव्याप्तिग्रहप्रतिबन्धकव्यभिचारसंशयं प्रत्यपि यद्यन्वयव्यतिरेकानुविधायित्वज्ञानं प्रतिबन्धकं तदा संप्रदायविदामुपाध्यायप्रमृतीनां मते धूमेऽहेतुकत्वसंशयस्य व्याप्यसंशयविधया व्यभिचारसंशयप्रयोजकत्वेन तर्कविरोधित्वाभिधानमसंगतं स्यात् । अन्वयव्यतिरेकानुविधायित्वज्ञानेनैव तादृशव्यभिचारसंशयानुत्पादसंभवे अहेतुकत्वसंशयस्याऽकिञ्चित्करत्वादित्याक्षिप्य वन्ह्यन्वयव्यतिरेणानुविधायित्वाभावव्याप्यस्याऽहेतुकत्वस्य वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानोत्तरसंशये तादृशज्ञाने अप्रामाण्यसंशयस्तावदुत्पद्यते । तद्वत्ताज्ञानोत्तरं तदभावव्याप्यसंशयस्य तत्प्रकारकनिश्चयविशेष्यकाप्रामाण्यसंशयप्रयोजकत्वादिति अहेतुकत्वसंशयनिवृत्तिं विना व्यभिचारशङ्काऽनुत्पाद एव न संभवत्यतोऽन्वयव्यतिरेकानुविधायित्वज्ञानस्य तर्कविरोध्यहेतुकत्वसंशयप्रतिबन्धकत्वं व्यवस्थापितमिति त एव समाहितवन्तस्तदसत् , पक्षभिन्ने आपाद्याभावविरहेणेत्यादिना नव्यमत एव व्यभिचारसंशयं प्रति वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य प्रतिबन्धकताया व्यवस्थापिततया संप्रदायविदां मतेऽहेतुकत्वसंशयं विना तादृशव्यभिचारसंशयस्याऽनभ्युपगमात् ।

तदिदमुक्तं "तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघाता न भवतीति; न हि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमत उपादत्ते, तत्कारणं तन्नेत्याशङ्क्यते चे"ति।

एतेन व्याघातो विरोधः स च सहानवस्थाननियम इति

---

स्वोपगमात्। एवं क्रमेण वह्निजन्यत्वादिसंशयं प्रत्येव तस्य प्रतिबन्धकत्वसंभवेऽपि उपायान्तरस्योपायान्तराऽदूषकत्वान्न तर्कवैयर्थ्यमिति भावः।

स्वोक्ते प्राचां संवादमाह-*तदिदमुक्तमिति*। तदेवेत्याद्याशङ्क्यते चेत्यन्तं प्राचीनग्रन्थः। आशङ्क्यते=प्रवृत्तिपूर्वं शङ्काविषयो भवति। आशङ्क्यमाने=प्रवृत्तिपूर्वं सन्देहविषये सति। *स्वक्रियेति*। स्वक्रियायाः स्वप्रवृत्तेर्व्याघातो न भवतीत्यर्थः।

ननु धूमोऽवह्नेरेव भविष्यतीत्यादिसंशयेऽपि प्रवृत्तिर्नानुपयुक्तेत्यत आह—*न हीति*। नियमतः=धूमादिरूपेष्टसाधनतः निर्णयतः, उपादत्ते=प्रयत्नविषयं कुरुते। *तत्कारणमिति*। तदव्यवहितपूर्ववर्त्ति तन्नेत्यर्थः, धूमोऽवह्नेरेव भविष्यतीत्यादिसंशयस्यैव प्रतिबन्धकत्वात्।

*एतेनेति*। निरस्तमित्यनेनान्वयः। तत्रापि=तज्ज्ञानेऽपि स्वक्रियाया व्याघातज्ञानं प्रतिबन्धकमुक्तं; व्याघातश्च विरोधः, विरोधश्च स्वक्रियायास्तादृशसंशयेन सहानवस्थाननियमः, नियमश्च व्याप्तिरेवेति तज्ज्ञानेऽपि व्यभिचारशङ्का विरोधिनी, तन्निवृत्तिश्च तर्कान्तरादित्यनवस्थेत्यर्थः।

---

अहेतुकत्वशङ्कानिवृत्त्यर्थं तन्मतेऽन्वयव्यतिरेकानुविधायित्वज्ञानस्य प्रतिबन्धकताया एवाऽऽवश्यकत्वादिति ध्येयम्। नन्वेवं वह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानं वह्निजन्यत्वसंशयप्रतिबन्धकमपि स्यादित्याशङ्कते–**एवं क्रमेणेति**। तस्य=तादृशान्वयव्यतिरेकानुविधायित्वज्ञानस्य। **उपायान्तरस्येति**। पूर्वोक्तार्थकम्। **न तर्कवैयर्थ्यमिति**। तथा च तादृशान्वयव्यतिरेकानुविधायित्वज्ञानस्य वह्निजन्यत्वशङ्काप्रतिबन्धकत्वेऽपि न क्षतिः, तर्केणापि तादृशशङ्कानुत्पादसंभवादिति हृदयम्।

**स्वोक्त इति**। मूलकारोक्त इत्यर्थः। **प्रवृत्तिपूर्वमिति**। तार्किकपुरुषस्येत्यादिः। स्वक्रियेतीति स्वक्रियापदं प्रवृत्तिपरमेवेत्याह—**स्वप्रवृत्तेरिति**। धूमो वह्न्यसमवहितजन्यो न वेत्यादिसंशयेऽपि प्रवृत्तिः स्यात्, न स्यादित्यर्थपरं मूलमवतारयति—**नहीतीति**। **निर्णयत इति**। तथा च वह्नौ धूमादिसाधनतानिश्चयप्रयोजकीभूतवह्न्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य पूर्वं सत्त्वेन तत एव तादृशसंशयनिवृत्तौ न प्रवृत्तिव्याघात इत्याशयः। यद्यपि शङ्कासत्त्वमावश्यकं स्यात्तदा तादृशशङ्काया एव प्रतिबन्धकतया इष्टसाधनतानिश्चयानुत्पादात्प्रवृत्तिरेव न भवतीत्याशयेनाह–**धूमोऽवह्नेरेवेति**। तज्ज्ञानेऽपि=सहानवस्थाननियमज्ञानेऽपि। **सहानवस्थानेति**। तादृशसंशयाधिकरणावृत्तित्वनियम इत्यर्थः। तज्ज्ञानेऽपि=नियमात्मकव्याप्तिज्ञानेऽपि। तन्निवृत्तिश्च=व्यभिचारशङ्कानिवृत्तिश्च। **तर्का-**

तत्राप्यनवस्थेति निरस्तम्, स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात्।
अतएव "व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्। व्याघा-

---

*स्वक्रियाया इति*। स्वस्य क्रिया प्रवृत्तिर्यस्येति व्युत्पत्त्या स्वक्रियाप्रयोजकीभूतनियतान्वयव्यतिरेकानुविधायित्वबुद्धेरित्यर्थः। *व्याघातो यदीति*। व्याघातो यद्यस्ति तदा शङ्काप्यवश्यमस्तीत्यर्थः। स्वक्रियावृत्तिशङ्काप्रतियोगिकविरोधरूपस्य व्याघातस्य प्रतियोगिनीं शङ्कां विना स्थातुमशक्यत्वादित्यभिमानः। *न चेदिति*। न चेद्व्याघातस्तदा, ततः=प्रतिबन्धकाभावतः, तरां=सुतरां शङ्केत्यर्थः। *व्याघातावधिरिति*। तथा चेत्यादिः। व्याघातावधिः=व्याघातनिवर्त्या व्याघातप्रतिबध्याऽऽशङ्का, तर्कश्च शङ्कावधिः=शङ्कानिवर्तकः कुत इत्यर्थः। व्याघातसत्त्वे शङ्काया आवश्यकत्वे,

---

न्तरादिति। प्रकृततर्कभिन्नात्तर्कादित्यर्थः। स्वस्य=तार्किकपुरुषस्य। स्वक्रियेति। तथा च प्रवृत्तिप्रयोजकीभूतनियतान्वयव्यतिरेकानुविधायित्वज्ञानस्य तर्कपूर्वं सत्त्वात्तत एव शङ्कानुत्पादसम्भवे तादृशशङ्कया सहानवस्थाननियमस्यानभ्युपगमेन निरुक्तनियमप्रतिबन्धकव्यभिचारशङ्कानिवृत्त्यर्थं तर्कान्तरस्यावश्यकतैव नास्तीति कुतोऽनवस्थेति भावः।

'शङ्का चेदनुमास्त्येवे'त्यादिकुसुमाञ्जलिकारिकया उदयनाचार्येण क्वचित्तर्कप्रतिबन्धकीभूतां शङ्कां प्रति व्याघातस्य प्रतिबन्धकत्वमुक्त्वा अनवस्थापरिहारः कृतः। तदुपरि खण्डनकारेण तावदेवमाशङ्कितं यदि प्रवृत्तिप्रयोजकीभूतान्वयव्यतिरेकानुविधायित्वज्ञानं कुत्रचिच्छङ्काप्रतिबन्धकं स्यात्तदा प्रतिबन्धकस्य शङ्काधिकरणवर्त्तमानरूपस्य शङ्कानुत्पादेऽवस्थितिरेव न स्यात् प्रतिबन्धकस्य प्रतिबध्यप्रतियोगिकतया प्रतिबन्धकसत्त्वे प्रतिबध्यीभूतायास्तत्प्रतियोगिन्याः शङ्काया आवश्यकत्वादिति। शङ्कासत्त्वे कुतो व्याघातस्य शङ्काप्रतिबन्धकत्वमितिनिरुक्ताभिमानं मूलकृन्निराकरोति—व्याघातो यदीति। मूलं व्याचष्टे टीकायां—व्याघातवित्यादि। प्रवृत्तिप्रयोजकीभूतान्वयव्यतिरेकानुविधायित्वज्ञानं यद्यस्तीत्यर्थः। तादृशज्ञानसत्त्वे शङ्कासत्त्वस्यावश्यकत्वं द्रढोकरोति–स्वक्रियेति। स्वक्रिया=प्रवृत्तिप्रयोजकीभूतान्वयव्यतिरेकानुविधायित्वज्ञानं, तन्निष्ठो यः शङ्काप्रतियोगिको विरोधः=शङ्काधिकरणावृत्तित्वं, तद्रूपस्य=तद्विशिष्टस्य तादृशज्ञानस्येत्यर्थः। व्याघातस्य=तादृशान्वयव्यतिरेकानुविधायित्वज्ञानरूपप्रतिबन्धकस्य। प्रतियोगिनीमिति। शङ्काधिकरणवृत्तित्वाभावप्रतियोगिकोटौ शङ्कायाः प्रविष्टत्वादिति भावः। घटाभावस्य प्रतियोगिनं घटं विनाऽप्यवस्थितेरनुभवसिद्धत्वादित्यभिमान इत्युक्तम्। व्याघातः=अन्वयव्यतिरेकानुविधायित्वज्ञानरूपप्रतिबन्धकः। प्रतिबन्धकाभावतः=तादृशव्याघाताभावतः। व्याघातनिवर्त्या=व्याघातप्रतिबध्या। शङ्कानिवर्त्तकः=शङ्काप्रतिबन्धकः। भावमाह—व्याघातेति। पूर्वोक्तार्थकम्। अयमाशयः—शङ्काधिकरणावृत्तित्वविशिष्टं वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानं यदि निरुक्ततर्कपूर्वमवश्यं वर्त्तते तदा शङ्काया अपि सत्त्वमावश्यकं, प्रतियोगिनिरूपकस्य वस्तुनः प्रतियोगिनं विनाऽवस्थितेर्वक्तुमशक्यत्वात्, तथा

तावधिराशङ्का तर्कः शङ्कावधिः कुतः ? ॥" इत्यपास्तम् । न हि व्याघातः शङ्काश्रितः, किन्तु स्वक्रियैव शङ्काप्रतिबन्धिकेति, न वा विशेषदर्शनात् क्वचिच्छङ्कानिवृत्तिरेवं स्यात् ।

व्याघातस्य शङ्कानिवर्तकत्वासम्भवात् । व्याघातस्य शङ्कानिवर्तकत्वाभावे शङ्कया तर्कस्यैवानवतारेण तर्कस्यापि शङ्कानिवर्तकत्वाभावादिति भावः । *इत्यपास्तमिति* । खण्डनकारमतमपास्तम् । क्वचित्तथैव पाठः ।

शङ्काश्रितः=शङ्काप्रतियोगिकः, प्रतिबन्धक इति शेषः । *स्वक्रियैवेति* । स्वस्य क्रिया प्रवृत्तिर्यस्या इति व्युत्पत्त्या स्वक्रियाप्रयोजकीभूतनियतान्वयव्यतिरेकानुविधायित्वधीरेवेत्यर्थः । शङ्काप्रतियोगिकविरोधस्य प्रतिबन्धकत्वेऽपि न क्षतिरित्यभिप्रायेणाह—*न वेति* । विशेषदर्शनात्=विरोधिभूताद्दर्शनाद्‌ या शङ्कानिवृत्तिः साऽप्येवं न स्यात्, विरोधप्रतियोगिनीं शङ्कां विना तद्विरोधाश्रयदर्शनस्य स्थातुमशक्यत्वादित्यर्थः । यदि च विरो-

च शङ्कायाः सर्वथैव सत्त्वसंभवात्प्रतिबन्धकीभूतया शङ्कयैव तर्कानुत्पादेन कुतस्तर्कस्य वह्निजन्यत्वादिशङ्कानिवर्त्तकत्वमिति । तथैव = खण्डनकारमतमपास्तमित्येव । शङ्काप्रतियोगिकः = शङ्काधिकरणावृत्तित्वविशिष्टः । शङ्काधिकरणावृत्तित्वविशिष्टस्य प्रतिबन्धकत्वव्यवच्छेदार्थकं मूलकारोक्तमेवकारमन्तर्भाव्य व्याचष्टे—स्वक्रियेति । तथा च पूर्वोक्तव्युत्पत्त्या शङ्काधिकरणावृत्तित्वाविशेषितस्यैव स्वक्रियारूपान्वयव्यतिरेकानुविधायित्वज्ञानस्य शङ्काप्रतिबन्धकत्वे शङ्कायाः प्रतियोगिकोटयप्रविष्टतया तादृशज्ञानेनैव शङ्काऽनुत्पादसंभवात्, सत्याञ्च विरोधिभूतायां शङ्कायां निवृत्तौ तर्कावतारो भविष्यत्येवेति खण्डनकारमतमतितुच्छमित्याशयः ।

शङ्काधिकरणावृत्तित्वविशिष्टस्य यदि शङ्काप्रतिबन्धकत्वं तदा बाधनिश्चयादेः शङ्काप्रतिबन्धकत्वं न स्यात् प्रतियोगिभूतां शङ्कां विना तस्य स्थातुमशक्यत्वादतो यत्र कुत्रचित्प्रतियोगिसत्त्वमात्रमपेक्षितं न तु प्रतिबन्धकेन सहैव तस्यावस्थानमित्यभिप्रायकं 'न वेत्या'-दिमूलमवतारयति–शङ्काप्रतियोगिकेति । शङ्काधिकरणावृत्तितावत इत्यर्थः । न क्षतिरिति । न तादृशस्य प्रतिबन्धकत्वेऽपि शङ्कासत्त्वमावश्यकमित्याशयः । विरोधीति । तत्तच्छङ्कारूपप्रतिबध्याधिकरणावृत्तित्वविशिष्टबाधादिनिश्चयादित्यर्थः । या शङ्कानिवृत्तिः= यः शङ्कानुत्पादः । विरोधेति । शङ्काधिकरणावृत्तित्वप्रतियोगिनीमित्यर्थः । तद्विरोधेति । शङ्काधिकरणावृत्तित्वाश्रयबाधादिनिश्चयरूपदर्शनस्येत्यर्थः। स्थातुमशक्यत्वादिति । भवन्मते बाधादिनिश्चयादपि शङ्कानुत्पादो न स्यात् शङ्कायाः सत्त्वस्यावश्यकत्वादिति हृदयम् । यदि च भवतोच्यते बाधादिनिश्चयस्थले यदा कदाचिद् यत्र कुत्रचिद्वा देशे शङ्कासत्त्वमात्रमपेक्षितं,न तु प्रतिबन्धकसत्त्वेऽवश्यं तत्सत्त्वं संभवति, तदा वन्ह्यन्वयव्यतिरेकानुविधायित्वज्ञानस्य शङ्काधिकरणावृत्तित्वविशिष्टस्य शङ्काप्रतिबन्धकत्वेऽपि न काऽपि क्षतिः, कुत्रचिच्छङ्कासत्त्वेनैव तादृशज्ञानेन शङ्कानुत्पादसंभवे शङ्कया सह तादृशप्रतिबन्धकावस्थानस्य वक्तुमशक्यत्वादित्येवं भावमाह—यदि चेत्यादि ।

न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः, न तु स स्वत एव प्रयोजकः। अत एव तदाहितसंस्कारो न मानान्तरं, तर्कस्याप्रमात्वात्।

---

धप्रतियोगिनो यदा कदा चित् यत्र कुत्रचित् सत्वमात्रमपेक्षितं न तु तदा तत्र(तदुत्तरं) तत्सत्त्वमिति विभाव्यते तदा तुल्यं प्रकृतेऽपीति भावः। नन्वेवं व्याप्तिज्ञानं भूयोदर्शनादिति सिद्धान्तः कथं संगच्छत इत्यपेक्षायामाह-*न चेति*। वह्निधूमयोर्भूयः सहचारनिश्चयं विना धूमे वह्न्यसमवहितसामग्र्यजन्यत्वनिश्चयासम्भवात्। अयमेव धूमो वह्निपूर्वक एतदन्यस्तु न; एवमेतद्धूमद्वयमेव वह्निपूर्वकं नत्वेतदन्य इत्यादिशङ्कासम्भवादिति भावः। भूयोदर्शनादरः=कदाचित्कुत्रचित्तदुपयोगः। *न त्विति*। सः=भूयः सहचारग्रहः, स्वत एव=साक्षादेव। *प्रयोजक इति*। व्याप्तिग्रहप्रयोजक इत्यर्थः। भूयोदर्शनस्य संस्कारद्वारा व्याप्तिग्राहकत्वे तदाहितसंस्कारस्य मानान्तरत्वापत्तिः, यदसाधारणं सहकार्यासाद्य मनो वहिर्गोचरां प्रमां जनयति तदेव प्रमाणान्तरमिति पूर्वपक्षोक्तं दूषयति-*अतएवेति*। यत एव भूयोदर्शनजन्यसंस्कारस्तर्क एव प्रयोजको न तु व्याप्तिग्रहेऽत एवेत्यर्थः। *अप्रमात्वादिति*।

---

तर्केणैव यदि व्याप्तिग्रहः स्यात्तर्हि भूयो दर्शनाद् व्याप्तिग्रहो भवतीति प्राचीनसिद्धान्तव्याघातः स्यादतः भूयो दर्शनेन तर्कावतारस्ततो व्याप्तिग्रह इति परम्परया भूयोदर्शनस्य व्याप्तिग्रहहेतुत्वव्यवस्थापकं न चैतादृशेतिमूलं नन्वित्यादिना अवतार्य भूयोदर्शनस्य तर्कप्रयोजकत्वं प्रदर्शयति-वह्निधूमयोरित्यादि। भूयः=वारम्वारं। सहचारनिश्चयं विना=सामानाधिकरण्यप्रत्यक्षनिश्चयं विना। धूम इति। तथा च धूमे सत्यन्तदलनिश्चयं प्रति निरुक्तभूयोदर्शनस्य हेतुत्वे तर्कं प्रत्यपि तस्य हेतुत्वमिति भावः। न केवलं भूयोदर्शनस्य तादृशनिश्चयसंपादकत्वेनैव हेतुत्वमपि तु तर्कविरोधिशङ्काविघटकत्वेनापीत्याह—अयमेवेति। तथा च यथुक्तशङ्का स्यात् तदा वह्निसमवहितजन्यत्वनिश्चय एव न स्यादित्याशयः। यत्र तादृशशङ्कासंभवस्तत्रैव भूयोदर्शनादर इत्याह-कदाचिदिति। भूयो दर्शनस्य साक्षाद्व्याप्तिग्रहे प्रयोजकत्वन्तु नास्ति, अपि तु तर्कप्रयोजकत्वेनैव कदाचित्तस्य व्याप्तिग्रहप्रयोजकत्वमित्याह—साक्षादेवेत्यादि। भूयोदर्शनस्य = भूयः सहचारप्रत्यक्षस्य। व्याप्तिग्राहकत्वे = व्याप्तिग्रहजनकत्वे। तदाहितेति। भूयोदर्शनजन्यसंस्कारस्येत्यर्थः। यदसाधारणेति। यद्वाह्यार्थविशेष्यकयत्प्रकारकप्रत्यक्षप्रमितेर्मनोऽन्यासाधारणकारणं यद् भवति तत् सर्वं मानसान्यप्रमायाः करणं भवतीत्यर्थः। पूर्वपक्षोक्त=परामर्शपूर्वपक्षोक्तम्। न तु व्याप्तिग्रह इति। व्याप्तिग्रहे यदि भूयोदर्शनजन्यसंस्कारो हेतुः स्यात् तदा तस्य मानसान्यप्रमायाः करणत्वं स्यादित्याशयः। ननु भूयोदर्शनजन्यसंस्कारो यदि तर्कजनकः स्यात्तदापि संस्कारस्य प्रमाणान्तरत्वापत्तिरित्याह मूले-तर्कस्येति। अप्रमात्वादितीति। तथा च तर्कस्याऽप्रमात्वेन भूयोदर्शनजन्यसंस्कारस्य प्रमाकरणत्वं न-

तच्च प्रत्यक्षव्याप्तिज्ञाने हेतुस्तदभावेऽपि शब्दानुमानाभ्यां तद्ग्रहात्। ननु सहचारदर्शनव्यभिचारादर्शनवद्व्यभिचारशङ्काविरहानुकूलतर्कयोर्ज्ञानं व्यभिचारिसाधारणमिति न ततोऽपि व्याप्तिनिश्चय इति चेत्—न; स्वरूपसतोरेव तयोर्व्याप्तिग्राहकत्वात्।

---

इदमापाततः, तर्कस्याप्यंशतः प्रमात्वात्। वस्तुतस्तर्कस्य प्रमात्वेऽपि तं प्रति संस्कारो न जनकः किन्तु प्रयोजक एवेति न प्रमाणान्तरत्वमित्येव तत्त्वम्। *तच्चेति*। व्यभिचारसन्देहाभाववत्त्वञ्चेत्यर्थः। तदभावेऽपि=व्यभिचारसन्देहाभावाभावेऽपि व्यभिचारसन्देहेपीति यावत्। व्यभिचारसन्देहस्य योग्यतादिसन्देहरूपतया शब्दादिना अर्थनिर्णयऽविरोधित्वादिति भावः। भ्रान्तो देशयति—*नन्विति*। व्यभिचारादर्शनवदिति*। व्यभिचारनिर्णयाभाववदित्यर्थः। यथा व्यभिचारनिश्चयाभावसहचारदर्शनं न व्याप्तिग्राहकम्, अन्यथा यत्र व्यभिचारसंशयो वर्तते तत्र व्याप्तिग्रहापत्तेः, तत्रापि व्यभिचारनिश्चयाभावसहचारदर्शनयोः सत्त्वात्, तथा व्यभिचारसंशयाभावतर्कयोर्ज्ञानं न व्याप्तिग्राहकं, शङ्कासत्त्वदशायामपि व्यभिचारशङ्काविरहानुकूलतर्कयोर्ज्ञानसम्भवात् तत्र व्याप्तिग्रहापत्तेरिति। *व्यभिचारीति*। सन्दिग्धव्यभिचारीत्यर्थः। व्याप्तिग्राहकत्वात्=व्याप्तिग्रहे

---

संभवतीति हृदयम। टीकायामाक्षिपति—इदमापातत इति। अंशतः प्रमात्वादिति। तथा च यथाश्रुतमूलेन तादृशसंस्कारस्य प्रमाणान्तरत्वाभावो न घटत इति भावः। तर्कस्यांशतः प्रमात्वेऽपि स्वयं तादृशसंस्कारस्य प्रमात्वं खण्डयति—वस्तुत इति। तं प्रति=तर्कं प्रति। न जनक इत्यनेन तादृशासाधारणजनकत्वस्यैव प्रमाणान्तरत्वप्रयोजकत्वमभिहितम्। न प्रमाणान्तरत्वमिति। तादृशसंस्कारस्य तर्कजनकत्वाभावेनेत्यादिः।

'तच्चे'तिमूलघटकं तत्पदं तात्पर्यवशाद्व्याप्तिग्रहोपायोक्तं व्यभिचारसन्देहाभावपरमित्याह—व्यभिचारेति। प्रत्यक्षात्मकव्याप्तिज्ञान एव व्यभिचारसन्देहाभावो हेतुः, न तु शाब्दात्मकव्याप्तिज्ञान इत्याह—व्यभिचारसन्देहेति। व्यभिचारसन्देहसत्त्व इत्यर्थः। ननु व्यभिचारसन्देहः कथं न शाब्दात्मकव्याप्तिज्ञाने प्रतिबन्धक इत्यतो भावमाह—योग्यतादीति। तथाच शब्दादिना व्याप्तिनिश्चये व्यभिचारसन्देहस्य योग्यतासन्देहस्वरूपतया योग्यताज्ञानत्वेन तस्य जनकत्वमेव, न तु प्रतिबन्धकत्वमित्याशयः। व्यभिचारसन्देहाभावतर्कयोर्ज्ञानमेव व्याप्तिग्रहे जनकं न तु व्यभिचारसन्देहाभावतर्कौ जनकाविति भ्रमं निराकुर्वतो मूलकारस्य नन्वित्याद्याशङ्कां निराकरोति—यथेत्यादि। व्यभिचारनिश्चयाभावस्य व्याप्तिग्राहकत्वे दोषमाह—यत्र व्यभिचारेति। व्यभिचारसंशयाभावतर्कयोर्ज्ञानं यदि व्याप्तिग्राहकं तदा व्यभिचारशङ्कादशायामपि व्यभिचारशङ्काभावतर्कज्ञानसंभवाद्व्याप्तिज्ञानापत्तिः स्यादतो तादृशज्ञानं न व्याप्तिज्ञानजनकमित्याह—तथा व्यभिचारेति। मूले स्वरूपसतोरेवेति। अज्ञायमानयोरेव व्यभिचारसन्देहाभावतर्कयोर्व्याप्तिग्राहकत्वमिति भावः। व्यभिचारसन्देहाभावतर्कयोः साक्षाद्व्याप्तिग्रहजनकत्वाऽसंभवाद् व्याप्तिग्राहकत्वादिति मूलं व्याचष्टे टीकायां—व्याप्तिग्रहे प्रयोजकत्वादिति।

**सत्तर्काद् व्याप्तिप्रमा,**

प्रयोजकत्वात् । ननु तथापि व्यभिचारज्ञानविरहानुकूलतर्कयो र्व्यभिचारिण्यपि सत्त्वात्कथं प्रमाभ्रमविभाग इत्यत आह—*सत्तर्कादिति* ।

यद्यपि तर्कस्य सत्त्वं मूलशैथिल्यादिदोषरहितत्वं, तद्विशिष्टत्वमेव भ्रमत्वं, तच्च न प्रामाण्याप्रामाण्यप्रयोजकं, वस्तुगत्या व्याप्तिसत्त्वे तादृशदोषविषिष्टाद् धूमो यदि वह्निव्यभिचारी स्यात् पृथिवी न स्यादित्यादितर्कादपि प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचारात् । एवं विशेषदर्शने सत्यत्वासत्यत्वमपि न प्रामाण्यादिप्रयोजकं विषयस्याबाधितत्वेऽसत्यादपि विशेषदर्शनात् प्रमाभ्रमयोरुत्पादानुत्पादाभ्यां व्यभिचारात् ।

न च तर्कस्य सत्त्वं वस्तुगत्या व्याप्तिमद्विषयकत्वम् , आभासत्वञ्च-

**नन्विति** । तथापि = व्यभिचारज्ञानाभावानुकूलतर्कयो र्व्याप्तिग्राहकत्वेऽपि । **व्यभिचारिण्यपीति** । कदाचिद् भ्रान्तस्येत्यादिः । **सत्त्वादिति** । व्यभिचारज्ञानविरहानुकूलतर्कयोरितिपूर्वेणान्वयः । **कथं प्रमाभ्रमविभाग इति** । तथा च व्यभिचारिण्यपि हेतौ तादृशकारणसमवधानाद्व्याप्तिग्रहोत्पत्तौ कुत्र व्याप्तिग्रहस्य प्रमात्वं भ्रमत्वञ्चेति विभागो न स्यादिति भावः । शङ्कते—**यद्यपीति** । **मूलशैथिल्येति** । व्यभिचारादिदोषरहितत्वमित्यर्थः । आदिना पक्षे आपाद्यसत्त्वादिपरिग्रहः । **तद्विशिष्टेति** । व्यभिचारादिविशिष्टत्वमेवेत्यर्थः । एवकाराद्बाधादेर्दोषत्वव्यवच्छेदः । **भ्रमत्वमिति** । तर्कस्येतिपूर्वेणान्वयः । **तच्चेति** । तादृशदोषरहितत्वं तादृशदोषवत्त्वञ्चेत्यर्थः । **न प्रामाण्येति** । यथाक्रमं तादृशदोषराहित्यं प्रमात्वप्रयोजकं, तादृशदोषवत्त्वञ्चाऽप्रमात्वप्रयोजकं नेति पर्यवसितार्थः । तत्र हेतुमाह—**वस्तुगत्येति** । वास्तविकव्याप्तिसत्त्व इत्यर्थः । **तादृशेति** । व्यभिचारादिदोषविशिष्टादित्यर्थः । तर्कादितिपरेणान्वयः । वह्निव्यभिचारित्वस्य घटपटादौ सत्त्वेन तत्र पृथिवीत्वाभावरूपापाद्यविरहादुक्ततर्कस्य व्यभिचारादिदोषवत्त्वेन भ्रमत्वं, दोषवत्त्वञ्च तादृशदोषवदापादककत्वं बोध्यम् । तथा चोक्ततर्कस्य भ्रमत्वेऽपि ततः प्रमात्मकव्याप्तिज्ञानोत्पादाद्व्यभिचारः, अप्रमात्वव्द्व्याप्तिज्ञानानुत्पादाच्च व्यभिचार इति तादृशेदोषराहित्यमपि न व्याप्तिप्रमाप्रयोजकं, न वा तादृशदोषवत्त्वमपि व्याप्तिभ्रमोत्पादप्रयोजकमित्याशयः । **एवमिति** । विशेषदर्शने = विरोधिव्याप्यदर्शने । **सत्यत्वेति** । दोषराहित्यं दोषवत्त्वमपीत्यर्थः । **न प्रामाण्येति** । सत्यत्वं=प्रमात्मकपुरुषज्ञानप्रयोजकम्, असत्यत्वं=भ्रमात्मकपुरुषज्ञानप्रयोजकं नेत्यर्थः । कथन्तानिवृत्त्यर्थमाह—**विषयस्येति** । विशेष्यीभूतवस्तुन इत्यर्थः । अबाधितत्वे=पुरुषत्वाद्यभाववत्तयाऽनिश्चितत्वे । असत्यादपि= व्यभिचारादिदोषयुक्तादपि । विशेषदर्शनाद्=विरोधीभूतस्य व्याप्यदर्शनात् । **प्रमाभ्रमयोरित्यादि** । असत्याद्विशेषदर्शनात्प्रमात्मकपुरुषज्ञानस्योत्पादेन भ्रमात्मकपुरुषज्ञानस्यानुत्पादेन च व्यभिचारादित्यर्थः । तथा दोषयुक्तं विशेषदर्शनं न भ्रमात्मकपुरुषज्ञानप्रयोजकं, न वा प्रमात्मकपुरुषज्ञानाऽप्रयोजकमिति भावः ।

यद्यपि तर्कनिष्ठं सत्यत्वं वास्तविकव्याप्तिमदापादककत्वं, तन्निष्ठाभासत्वञ्च वास्तविकव्याप्त्यभाववदापादककत्वम् , विशेषदर्शननिष्ठसत्यत्वमपि वास्तविकपुरुषत्ववद्विषयकत्वं,

तदाभासात्तदप्रमा विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव ।

वस्तुगत्या व्याप्त्यभाववद्विषयकत्वम् , एवं विशेषदर्शनस्य सत्यत्वं वस्तुगत्या पुरुषत्ववद्विषयकत्वम् , वस्तुगत्या तदभाववद्विषयकत्वञ्चासत्यत्वमिति वाच्यम्; तस्यापि स्वतः सिद्धशङ्काविरहस्थले तर्कं विनैव व्याप्तिग्रहेण व्यभिचारात् तस्य प्रमाभ्रमप्रयोजकत्वासम्भवात् ।

तथापि सत्तर्कात्=सत्यव्याप्तिज्ञानात्, तदाभासात्=तदऽभावात् । तथा च व्याप्तिप्रमात्वावच्छिन्नं प्रति व्याप्तिप्रमात्वेन हेतुत्वम्, समानविशेष्यत्वं-प्रत्यासत्तिः । व्याप्तिभ्रमत्वावच्छिनं प्रति विशेष्यत्वसम्बन्धावच्छिन्नव्याप्तिप्रमाविरहत्वेन हेतुत्वम् । विशेषणताविशेषविशेष्यताभ्यां सामानाधिकरण्यं प्रत्यासत्तिः । सर्वत्रान्ततो भगवद्व्याप्तिप्रमैव पूर्वं सुलभेति भावः । विशेषदर्शनसत्यत्वासत्यत्वाभ्यां=सत्यविशेषणज्ञानतद्विरहाभ्यां पुरुषत्वप्रमातद्विरहाभ्यामिति यावत् । पुरुषज्ञानमिव=पुरुषत्वप्रमाभ्रम इव । तर्कस्य शङ्कामात्रनिवर्तकत्वात् , यत्र स्वतः सिद्धः शङ्काविरहस्तत्र तर्कं विनैव व्याप्तिग्रह इति नानवस्थेति

तन्निष्ठासत्यत्वञ्च वास्तविकपुरुषत्वाभाववद्विषयकत्वमित्युच्यते, तथापि व्यभिचारो दुर्वार एव, यादृशस्थले स्वभावादेव व्यभिचारादिशङ्काविरहस्तादृशस्थले तर्कं विनैव प्रमात्मकव्याप्तिग्रहस्य कदाचिद् भ्रमात्मकव्याप्तिग्रहस्योदयेन तर्करूपकारणाभावस्य तदानीं सत्त्वादित्येवं न चेत्यादिनाऽऽशङ्क्य प्रमाभ्रमप्रयोजकत्वाऽसंभवादित्यन्तेन समाधानं बोध्यम् । यद्यपीत्यादेरुत्तरं—तथापीति । सत्येति । प्रमात्मकव्याप्तिज्ञानादित्यर्थः । भावमाह—तथा चेति । व्याप्तिप्रमात्वेति । तथा च विशेष्यतासंबन्धेन व्याप्तिप्रमात्वावच्छिन्नं प्रति विशेष्यतासंन्धेन व्याप्तिप्रमात्वेन हेतुता । व्याप्तिप्रमोत्पादात्पूर्वमवश्यं व्याप्तिप्रमायाः सत्त्वमावश्यकमन्यथा व्याप्तिप्रमैव नोत्पद्यत इति भावः । व्याप्तिभ्रमेति । विशेष्यतासंबन्धेन व्याप्तिभ्रमत्वावच्छिन्नं प्रति विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकव्याप्तिप्रमाभावत्वेन स्वरूपसंबन्धेन कारणत्वमित्याशयः । सामानाधिकरण्येति । कार्यकारणयोरेकाधिकरणवृत्तित्वमित्यर्थः । प्रत्यासत्तिः=संबन्धः ।

नन्वेवं यदा तत्पुरुषीयव्याप्तिप्रमा पूर्वं नास्ति तदा व्याप्तिप्रमैव नोत्पद्यतामित्यत आह—सर्वत्रेति । तथा च व्याप्तिप्रमापूर्वमवश्यमेव भागवती व्याप्तिप्रमा वर्त्तत इति न कुत्रापि व्यभिचार इति भावः । विशेषदर्शनसत्यत्वाऽसत्यत्वं विशिष्य दर्शयति—पुरुषत्वप्रमेति । पुरुषत्वप्रमापुरुषत्वप्रमाभावाभ्यामित्यर्थः । तथा च विशेष्यतासंबन्धेन पुरुषत्वप्रमात्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन प्रमात्मकपुरुषत्वव्याप्यदर्शनं हेतुः । एवं विशेष्यतासंबन्धेन पुरुषत्वभ्रमत्वावच्छिन्नं प्रति विशेष्यतासंबन्धावच्छिन्नप्रतियोगिताकस्य पुरुषत्वव्याप्यप्रकारकप्रमाभावस्य स्वरूपसंबन्धेन हेतुतेत्यभिप्रायः । यत्रेत्यादि । यस्मिन् स्थल इत्यर्थः । स्वतःसिद्धशङ्काविरहः=तर्कविघटशङ्कायाः स्वभावादेवानुत्पादः । तत्र=तादृशस्थले । तर्कं विनैवेति । तर्कविघटकशङ्काविघटकमित्यादिः । व्याप्तिग्रहः=तर्कमू-

अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरापेक्षा, यत्र तु व्याप्तिस्मरणं हेतुस्तत्र न तर्कान्तरापेक्षेति नाऽनवस्था। अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतुव्याप्तिस्मरणं तदानीं व्याप्त्य-(नुभावकाभावात्) नुभवाभावात्, तन्मूलाऽनुभवमूला चाग्रेऽपि व्याप्तिस्मरणपरम्परेति।

---

स्वयमुक्तम्।

प्राञ्चस्तु तर्कस्य व्याप्तिग्राहकत्वमभ्युपेत्य प्रकारान्तरेणानवस्थां परिहरन्ति, तदेवाह-*अपरे त्विति*। *यत्र तु व्याप्तिस्मरणमिति*। व्याप्त्यनुभवं प्रत्येव तर्कस्य हेतुत्वादिति भावः। व्याप्तिस्मरणे तर्कापेक्षा नास्तीत्यत्र हेतुमाह—*अस्ति चेति*। भवति चेत्यर्थः। चो हेतौ। *व्याप्तिस्मरणमिति*। तर्कं विनैवेति शेषः। *व्याप्त्यनुभावकाभावादिति*। तर्काभावादित्यर्थः। यद्वा ननु जातमात्रस्य व्याप्तिज्ञानं स्मरणमेव न, किन्तु अनुभवरूपमित्यत आह—*तदानीमिति*।

ननु तथापि विनाऽनुभवं स्मरणायोगाज्जन्मान्तरीणो व्याप्त्यनुभवो हेतुर्वाच्यस्तत्र तर्को हेतु स्तत्र तर्के व्याप्त्यनुभवान्तरं हेतुरिति क्रमेणानवस्था तदवस्थैवेत्यत आह-*तन्मूलेति*। व्याप्तिस्मरणमूलको यः प्राग्भवीयव्याप्त्यनुभवस्तन्मूलिका अग्रे=भाविजन्मनि व्याप्तिस्मरणपरम्परेत्यर्थः।

---

लीभूतव्याप्तिग्रहः। स्वयमुक्तं=मूलकारेणोक्तम्।

प्राचीनमते तर्कस्य व्याप्तिग्राहकत्वमेव, तन्मते यदि तर्कमूलीभूताऽपि व्याप्तिः तर्कादेव भवति तदाऽनवस्था स्यादतस्तन्मते प्रकारान्तरेणानवस्थापरिहारायाऽपरेत्वित्यादिना मूलकृता प्रदर्शितं पन्थानं स्वयं विशिष्य दर्शयति—व्याप्त्यनुभवं प्रत्येवेति। एवकाराद् व्याप्तिस्मरणे तर्कस्य हेतुत्वव्यच्छेदः। चो हेताविति। यतो व्याप्त्यनुभवस्तर्के हेतु र्न तु व्याप्तिस्मरण अत एवेत्यर्थः। तथाच जातमात्रस्य स्तन्यपानादौ सुखसाधनतानुमितौ हेतुभूतव्याप्तिस्मरणे तर्को न हेतुः व्याप्त्यनुभवं प्रत्येव तर्कस्य हेतुत्वादिति नानवस्थेति भावः। जातमात्रस्य व्याप्तिज्ञानं स्मरणरूपमेवेत्यत्र प्रमाणं दर्शयितुमाह—यद्वेति। तदानीमितीति। तथा च जातमात्रस्य व्याप्तिज्ञानं नानुभवरूपं, तदानीं व्याप्त्यनुभवजनकतर्काभावादित्याशयः। यद्यपि जातमात्रस्य व्याप्तिस्मरणं प्रति जन्मान्तरीयव्याप्त्यनुभवः संस्कारद्वारा हेतुः, अनुभवं विना स्मरणानुपपत्तेः। एवञ्च तादृशव्याप्त्यनुभवं प्रत्यपि तर्को हेतुः, तादृशतर्कमूलीभूतव्याप्त्यनुभवेऽपि तर्कान्तरं हेतुरित्यनवस्था दुर्वारैव। तथापि तत्तज्जन्मनि स्तन्यपानादौ सुखसाधनतानुमितिजनकव्याप्तिस्मरणे तर्कस्याहेतुत्वात्कदाचित्कदाचित्तर्कविच्छेदेन नाऽनवस्थेत्यादिकं नन्वित्यादिनाऽऽशङ्क्य 'व्याप्तिस्मरणमूलको यः' इत्यादिना समाधत्ते-प्राग्भवीयेति। पूर्वजन्मोत्पन्नो व्याप्त्यनुभव इत्यर्थः। तन्मूलिका = तज्जन्या। भाविजन्मनि = भविष्यज्जन्मनि। भावमाह—

यत्त्वनादिसिद्धकार्यकारणभावविरोधादिमूलाः केचित्तर्का इति

तथा च जन्मान्तरीयव्याप्तिस्मरणमूलीभूतव्याप्त्यनुभवमूलीभूततर्के व्याप्त्यनुभवो न हेतुः, किन्तु व्याप्तिस्मरणमिति नानवस्था, कदाचिदन्तरान्तरा व्याप्तिस्मरणेन विच्छेदात् तर्कधारायाः अविरललग्नत्वाभावादिति प्राचामाशयः। अत्रेदमस्वरसबीजं–नहि कदाचिदन्तरा विच्छेद एवानवस्थापरिहारः, किन्तु आत्यन्तिकविच्छेद एवेति सकलसम्प्रदायसिद्धमिति।

तथाचेति। जन्मान्तरीयेति। तत्तज्जन्मनि व्याप्तिस्मरणकारणीभूतव्याप्त्यनुभवजनके तर्क इत्यर्थः। व्याप्त्यनुभवइत्यादि। तर्कमूलीभूताया व्याप्तेरनुभवो न कारणमित्यर्थः। व्याप्तिस्मरणमितीति। तथा च तादृशस्मरणे तर्कस्य कारणत्वमेव न संभवतीत्याशयः।

नानवस्थेत्यत्र हेतुमाह—कदाचिदिति। तत्तत्पुरुषीयतत्तदुत्पत्तिकालावच्छेदेन यदा व्याप्तिस्मरणं भवति तदा पूर्वं तर्काभावेनाऽनवस्थैव न संभवतीति हृदयम्। विच्छेदादिति। कदाचिदिति पूर्वेणान्वयः। तर्कधारायाः इति। व्याप्त्यनुभवमूलीभूतायाः इत्यादिः। अविरललग्नत्वेति। तथा च मध्ये मध्ये एकस्यैव पुंसो व्याप्तिस्मरणस्योदयात् तत्पूर्वञ्च तर्कापेक्षाया अनावश्यकत्वात्तर्कस्य धारावाहिकत्वाभावादेव नानवस्थेति तात्पर्यम्।

प्राचीनमतेऽस्वरसं दर्शयति—नहीति। कदाचित्=किञ्चित्कालावच्छेदेन। अन्तरा= तत्तज्जन्मनि। विच्छेद एवेति। तर्कस्येत्यादिः। आत्यन्तिकविच्छेदे=सर्वकालावच्छेदेन तर्काभावे। एवेति। एवकारात्किञ्चित्कालावच्छेदेन तर्काभावस्याऽनवस्थापरिहारहेतुत्वव्यवच्छेदः। तर्कप्रतिबन्धकशङ्कानुत्पादो यदि सर्वकालावच्छेदेन तर्काभावातिरिक्तकारणप्रतियोगिकाभावादेव भवति, तदैवाऽनवस्थापरिहारः स्यात्, न तु यत्किञ्चित्कालावच्छेदेन तर्कं विनाऽपि व्याप्तिज्ञानसंभवेऽनवस्थापरिहारः कदाचित्सम्प्रदायसिद्धः, तर्कस्याऽऽत्यन्तिकोच्छेदासंभवादित्याशयः।

मूले अनादिसिद्धेति। अनादित्वं स्वसजातीयानां ध्वंसाव्यापकप्रागभावप्रतियोगित्वं, तेन रूपेण सिद्धा निश्चिता ये कार्यकारणभावविरोधास्तन्मूलास्तर्कविघटकशङ्काविघटकत्वेन प्रयोजकीभूता इत्यर्थः। केचित्तर्का इति। वह्न्यादावनादिसिद्धधूमकारणत्वनिश्चयस्तत्र धूमकारणत्वाभावकोटिकशङ्काप्रतिबन्धकतया 'धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादि' त्यादितर्कोत्थापकत्वेन वह्निधूमव्याप्तिग्रहे प्रयोजकः। एवं 'शिंशपा यदि वृक्षान्यतादात्म्यवती स्यात्तदा वृक्षतादात्म्यवती न स्यादि'त्याकारकतर्कस्य प्रतिबन्धकशङ्काविघटकन्तु भेदाऽभेदयोरनादित्वेन विरोधज्ञानम्। तच्च तादृशशङ्कानुत्पादकतया वृक्षशिंशपयोस्तादात्म्येन व्याप्तिग्रहप्रयोजकं भवति। तथा च तादृशतर्के तर्कान्तरस्याऽप्रयोजकतया नानवस्थेति भावः। कार्यकारणभावादौ अनादिसिद्धत्वज्ञानमवश्यं प्रमाणजन्यं वाच्यम्। प्रमाणप्रश्ने यदि तद् अनुमानप्रमाणजन्यं, तदा तत्रापि व्यभिचारशङ्कानिवृत्त्यर्थं तर्कान्तरस्याऽऽवश्यकतेति नानवस्थापरिहारः संभवतीत्याशयेन दूषयति—

तन्न; तत्र प्रमाणानुयोगेऽनुमान एव पर्यवसानात् । न च व्याप्तिग्रहाऽन्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम्; अनुपपत्तेरप्यनुमानत्वात् ।

---

कार्यकारणभावविरोधादीनामनादिप्रसिद्धिविषयत्वनिश्चय एव कुत्रचित्तर्के संशयनिवर्तक इति केचिद् वदन्ति, तन्मतमाशङ्क्य निराकरोति—*यत्त्विति* । अनादिसिद्धेति कार्यकारणभावविरोधादीनां विशेषणम् । तथा चानादित्वेन=अनादिप्रसिद्धिविषयत्वेन, सिद्धः=निश्चितः कार्यकारणभावादयः, क्वचित्तर्के संशयनिवर्तिका इति नानवस्थेत्यर्थः । यथाश्रुते कार्यकारणभावे विरोधे चानादित्वस्य दुर्वचत्वात् । आदिना व्याप्तिपरिग्रहः । *तत्रेति* । कार्यकारणभावादीनामनादिप्रसिद्धिविषयत्व इत्यर्थः । प्रमाणानुयोगे=प्रमाणप्रश्ने । *अनुमान एवेति* । प्रत्यक्षस्य तत्रासंभवादित्यर्थः । तथा च तत्राप्यनुमाने तर्कापेक्षाऽऽवश्यकीत्यनवस्था तदवस्थैवेति भावः । व्याप्तिग्राहकतर्कमूलीभूतव्याप्तिग्रहो न तर्कान्तरादपितु व्याप्तिग्रहान्यथानुपपत्तिग्रहादेवेत्याह—*नचेति* । अनुमानत्वात्=व्याप्तिनिश्चयाधीनप्रवृत्तिकत्वात् ।

---

तन्नेति । तत्र=अनादिसिद्धत्वज्ञाने । प्रमाणानुयोगे=प्रमाणप्रश्ने । अनुमान एवेतीति । अनादिसिद्धत्वस्य कार्यकारणभावादौ विवादग्रस्तत्वादित्याशयः । न चेति । वाच्यमिति॰ परेणान्वयः । व्याप्तिग्रहान्यथानुपपत्त्या=व्याप्तिग्रहान्यथानुपपत्तिज्ञानेन । तर्कस्येत्यादि । तर्कमूलीभूतानादिसिद्धव्याप्तिकत्वज्ञानं भवतीति शेषः ।

अर्थापत्तिप्रमाणस्यापि नैयायिकमतेऽनुमानमध्येऽन्तर्गततया तत्रापि व्यभिचारशङ्कानिवृत्त्यर्थं यदि तर्कान्तरापेक्षा स्यात्तदा स्यादेवानवस्थेत्याशयेन समाधत्ते—अनुपपत्तेरप्येति । अनादिसिद्धविषयत्वस्याऽज्ञायमानस्य शङ्काविरोधित्वे प्रमाणाभावः, कथञ्चित्तस्य सप्रमाणकत्वेऽपि प्रमाणानुयोगइत्यादिमूलाऽसङ्गतिः स्यात् प्रमाणानां ज्ञानफलकत्वनियमादित्याशयेनाह टीकायाम्—अनादीति । तथा चाऽनादिसिद्धिविषयत्वनिश्चयस्यैव शङ्काप्रतिबन्धकत्वमिति भावः । समुदितार्थमाह—तथा चेति । अनादीति । अनादित्वप्रकारकज्ञानविशेष्यत्वेनेत्यर्थः । कुत्रचित्तर्क इति तु पूर्वमेव प्रपञ्चितमस्माभिः । नानवस्थेति । तर्कस्य तर्काजन्यत्वेनेत्यादिः । अनादित्वस्य विरोधे कार्यकारणभावे चानुगततया वक्तुमशक्यत्वादाह—यथा श्रुत इति । तादृशाविरोधादिनामित्यत्र आदिपदग्राह्यमाह—व्याप्तिपरिग्रह इति । स्वतःसिद्धव्यभिचारशङ्कादिविरहस्थलीयेत्यादिः । प्रत्यक्षस्य=प्रत्यक्षप्रमाणस्य । तत्राऽसम्भवादिति । अनादिसिद्धिविषयत्वस्य अनादित्वघटिततयाऽतीन्द्रियत्वादिति भावः । पीनत्वाऽन्यथानुपपत्तिग्रहाद् यथा ब्राह्मणादौ भोजनकल्पनं, तथा व्याप्तिग्रहान्यथानुपपत्तिग्रहादपि तर्कमूलीभूतव्याप्तिकल्पनं संभवति, न तु तर्कान्तरादेव तर्कमूलीभूतव्याप्तिग्रह इत्यपि मतं न समीचीनमित्याह—व्याप्तिनिश्चयाधीनेति । अनुपपत्तेरुपपादकाभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिनिश्चयाधीनापादकज्ञानजन्य-

अन्ये तु विपक्षबाधकतर्कादनौपाधिकत्वग्रह एव, तदधीनो व्याप्तिग्रह इति, तदपि न; तर्कस्याप्रमाणत्वात्। व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेन्न; अनवस्थाभयेन तर्कं विना व्याघाताद् यत्र शङ्काविरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्।

---

यथाश्रुतासंगतेः, परैरर्थापत्तेरनुमानत्वानभ्युपगमात्। तथा च तत्रापि तर्कापेक्षावश्यकीत्यनवस्था तदवस्थेति भावः।

तदेवं व्यभिचारादर्शनसहकृतसहचारज्ञानं व्याप्तिग्राहकं, तर्कः शंकानुत्पत्तौ प्रयोजक इति व्यवस्थाप्य तर्कादनौपाधिकत्वग्रहस्तदुभाभ्यां मिलित्वा व्याप्तिग्रह इत्येकदेशिमतमाशङ्क्य दूषयति–*अन्येत्विति*। *तदधीनेति*। तयोरधीन इत्यर्थः। अनौपाधिकत्वग्रहे व्याप्तिग्रहे च तर्कः स्वतन्त्रो हेतुः, प्रमाणसहकारी वा, नाद्य इत्याह–*तर्कस्येति*। तथा च प्रमाणस्य स्वतन्त्रतया ज्ञानजनकत्वनियमेन तर्कस्य प्रमाणत्वासम्भवाज्जनकत्वाभाव इत्यर्थः। द्वितीयमाशङ्कते–*व्यभिचारादीति*। आदिपदादुपाधिपरिग्रहः। व्याघातात्=तर्काभावातिरिक्तकारणान्तराभावात्। विरहः=अनुत्पादः। व्याप्तिग्रहे अनौपाधिकत्वग्रहे च।

---

प्रवृत्तिकत्वादित्यर्थः। परैः=मीमांसकादिभिः। अनुमानत्वानभ्युपगमादिति। मूले अनुपपत्तेरनुमानत्वाभिधानं यथाश्रुते न संगच्छते मीमांसकप्रभृतिभिरर्थापत्तेरनुमानातिरिक्तप्रमाणत्वस्य स्वीकरणीयत्वादिति हृदयम्। तत्रापि=अनुपपत्तिरूपव्याप्तिज्ञानेऽपि। अनवस्थेतीति। तथा च तादृशव्याप्तिज्ञानात्पूर्वं यदि व्यभिचारादिशङ्का स्यात्तदा स्यादेव तर्कान्तरेण तादृशशङ्कानिवृत्तिरित्यनवस्थेत्याशयः। मूले विपक्षेति। विपक्षे साध्याभाववति यो बाधः हेतोरभावः व्याप्तिरिति यावत्, तत्प्रयोजकात्तर्कादित्यर्थः। अनौपाधिकत्वग्रह इति। अनौपाधिकत्वग्रहः=उपाध्यभावग्रहः। एवेति। एवकारात्तर्केण शङ्कानिवृत्तिव्यवच्छेदः। टीकायाम् उभाभ्यामिति। तर्कानौपाधिकत्वग्रहाभ्यामित्यर्थः। तयोरधीनः=तर्कव्याप्तिग्रहयोरधीनः। तथा च तर्कं प्रति अनौपाधिकत्वज्ञानं प्रयोजकं, व्याप्तिज्ञाने च तर्कः अनौपाधिकत्वज्ञानञ्च हेतुः। स्वतन्त्रः=प्रमाणान्तराऽसहकारी सन्। नाद्येति। तर्कः स्वतन्त्रो हेतुरिति न युक्तमित्याहेत्यर्थः। स्वतन्त्रतया=स्वभिन्नप्रमाणान्तराऽसहकारितया। ज्ञानेति प्रमेत्यर्थकम्। प्रमाणत्वासंभवादिति। तर्कस्यानौपाधिकत्वज्ञानसहकृतस्यैव व्याप्तिग्रहजनकताया मूले अभिहितत्वादित्याशयः। जनकत्वाभावेति। व्याप्तिग्रह इत्यादिः। द्वितीयं=प्रमाणसहकारी सन् तर्को हेतुरिति पक्षम्। तथा च तर्कस्य प्रमाणाभावेऽपि प्रत्यक्षादिप्रमाणसहकारी स व्यभिचारशङ्कां विघटयन् व्याप्तिग्रहजनकः स्यादित्यपि न युक्तमिति भावः।

उपाधिपरिग्रहः=अयं हेतुरुपाधिमान् न वेति शङ्कानुत्पादोऽपि तर्केणैवेति तात्पर्यम्। व्याघातादिति। अयमाशयः—तर्को यदि व्याप्तिग्रहे अनौपाधिकत्वग्रहे च व्यभिचारोपाधिशङ्काविघटनद्वारा जनक इति भवता स्वीक्रियते, तदा यादृशस्थले तर्कस्याऽसत्त्वे-

यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्याऽभावग्रहः, अयोग्यानां तु साध्याव्यापकत्वसाधनव्यापकत्वसाधनादभावग्रह इत्यनौपाधिकत्वं सुग्रहमिति, तच्चुच्छम्; अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याभावात्।

ये चानुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहं वदन्ति,

(केचित्तु) अनौपाधिकत्वज्ञानं व्याप्तिधीजनकं, तन्मतमाशङ्क्य निराकरोत्ति—*यत्त्विति*। *साधनादिति*। अनुमानादित्यर्थः। *अनौपाधिकत्वं सुग्रहमिति*। तथा च तर्काहेतुकमेवानौपाधिकत्वज्ञानं व्याप्तिधीहेतुरिति भावः। *अनवस्थानादिति*। तदनुमानमूलीभूतज्ञानेऽप्यनौपाधिकत्वनिश्चयस्य हेतुत्वादिति भावः।

व्याप्तिग्रहे परम्परयापि कुत्रचिन्न तर्कोपयोग इति मीमांसकैकदेशिमतं निराचष्टे—*ये चेति*। व्यभिचारसंशयस्य तत्सामग्र्याश्चाप्रतिबन्धकत्वादिति शेषः। *अनुकूलेति*। व्यभिचारशङ्कानुत्पादानुकूलेत्यर्थः। सहचा-

ऽपि तर्काभावातिरिक्तकारणप्रतियोगिकाभावाच्छङ्कानुत्पादेन व्याप्तिग्रहोत्पादस्यावश्यकतया तर्करूपकारणाभावेन कार्यीभूतव्याप्तिग्रहस्य न जननात्तर्कस्य व्यभिचारितया व्याप्तिग्रहादौ प्रमाणसहकारित्वेनापि तस्य जनकत्वं न संभवतीति। विरहपदस्य शङ्काभावार्थकत्वे तस्य नित्यतया कारणप्रयोज्यत्वं न संभवतीत्याह—अनुत्पाद इति। कुत्र तर्कस्य व्यभिचारित्वमित्याशङ्कायामाह—व्याप्तिग्रह इति।

मूले योग्यानुपलब्ध्येति। अत्र हेतौ यदि उपाधिः स्यात्तर्हि उपलभ्येतेत्याकारकानुपलब्ध्येत्यर्थः। अयोग्यानामिति। अतीन्द्रियाणामुपाधीनामित्यर्थः। साध्याव्यापकेति। विवादाध्यासितोपाधित्वेनाभिमतोऽयं साध्याव्यापकत्वे सति साधनव्यापकः साध्याव्यापकत्वादिना प्रमीयमानत्वादित्यनुमानेनोपाध्यभावग्रहः। ततोऽयं हेतुरुपाध्यभाववान् साध्याव्यापकसाधनव्यापककालीनत्वादित्यादिना हेतावनुपाधित्कवग्रहः। एतदेवाह टीकायाम्—अनुमानेति। भावमाह—तथा चेति। तर्काहेतुकमेव = तर्काजन्यमेव। एवकारादनौपाधिकत्वज्ञानस्यानौपाधिकत्वज्ञानहेतुकत्वव्यवच्छेदः। तथा च निरुक्तानौपाधिकत्वज्ञानस्य व्याप्तिज्ञानजनकत्वे नानवस्थेति भावः। तदनुमानेति। तादृशसाध्याव्यापकत्वाद्यनुमानार्थकम्। तथा च साध्याव्यापकत्वस्य यद्यनुमानप्रमाणान्निश्चयस्तदा तादृशनिश्चयजनकव्याप्तिज्ञानेऽनौपाधिकत्वज्ञानं जनकं वाच्यमिति तत्र तत्रापीत्यादिनाऽनवस्थातादवस्थ्यमिति भावः।

अनुकूलतर्कस्य व्याप्तिग्रहे प्रयोजकत्वमपि नास्तीतिमतं मूलकारोक्तं विवृणोति—व्यभिचारसंशयस्येति। तथा च व्यभिचारसंशयसत्त्वे तादृशसंशयसामग्रीसत्त्वे वा यदि व्याप्तिग्रहोत्पादः स्यात्तदा तादृशसंशयनिवृत्त्यर्थं तर्कानुसरणं निष्फलमित्याशयः। तर्के व्याप्तिज्ञानानुकूलत्वस्योभयमतासिद्धतया तस्य व्यभिचारशङ्कानुत्पादानुकूलत्वमाह—व्यभिचारेति। सहचारेति। साध्यसाधनानां सामानाधिकरण्यादिप्रत्यक्षादिमात्रेणेत्यर्थः। मात्रपदाद् व्यभिचारशङ्काद्यनुत्पादप्रयोजकतर्कस्य व्याप्तिग्रहहेतुत्वव्यवच्छेदः।

तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रमुच्छिद्येत। अनुमानमात्रोच्छेदकत्वादेव पक्षेतरो नोपाधिरिति चेत्; भ्रान्तोऽसि, नहि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे, साध्यव्यापकत्वेन तद्व्यतिरेकात्, पक्षे साध्यव्यावर्तकतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य

---

रादीत्यादिना सम्बन्धिनः साध्यादेः परिग्रहः। व्याप्तिग्रहं=सर्वत्र व्याप्तिनिश्चयम्। साध्यव्यापकत्वग्रहे=साध्यव्यापकत्वानश्चये। *अनुमानमात्रमिति*। सन्दिग्धसाध्यपक्षकानुमानमात्रमुच्छिद्येतेत्यर्थः। यथाश्रुते निर्णीतसाध्यके व्यभिचारनिश्चयसत्त्वेन पक्षेतरत्वस्य साध्यव्यापकत्वनिश्चयासंभवादनुमानमात्रोच्छेदाभावात्।

अस्माकं तु पक्षे साध्यस्य संशयसत्त्वे साध्ये पक्षेतरत्वव्यभिचारसंशयसत्त्वादनुकूलतर्कं विना न साध्यव्यापकत्वनिश्चयसंभव इति भावः। *अनुमानमात्रेति*। तादृशानुमानमात्रोच्छेदकत्वज्ञानलक्षणप्रतिकूलतर्कादित्यर्थः। नोपाधिः=न स्वव्यभिचारेण साध्यव्यभिचारोन्नायकः। *उपाधित्वेनेति*। व्यभिचारोन्नायकत्वेनेत्यर्थः। साध्यव्यापकत्वेन = तन्निश्चयेन, व्यापकव्यतिरेके = व्यापकव्यतिरेकज्ञाने। व्याप्यव्यतिरेकस्य = व्याप्यव्य-

---

सम्बधिन इति। सहचारेत्यादिः। साध्यव्यापकत्वस्य पक्षेतरत्वादौ सन्देहे उपाधेरपि हेतौ सन्दिग्धतया व्याप्तिग्रहोत्पादे बाधकाभावात्साध्यव्यापकत्वग्रहइत्यत्र ग्रहपदं निश्चयपरतया व्याचष्टे—साध्यव्यापकत्वेति। यत्र पक्षे साध्यनिश्चयो वर्त्तते तत्र पक्षेतरत्वे साध्यव्यापकत्वनिश्चयो न भवति साध्ये पक्षेतरत्वव्यभिचारनिश्चयात्। अतः पक्षेतरत्वस्योपाधित्वं सन्दिग्धसाध्यकपक्षे एव संभवति, तत्रैव पक्षेतरत्वादौ साध्यव्यापकत्वनिश्चयसंभवादिति पक्षेतरत्वस्योपाधित्वे सकलानुमानोच्छेदो न संभवतीत्याशयेनानुमानमात्रमुच्छिद्येतेत्यत्रोच्छेदपदं सन्दिग्धसाध्यपक्षकानुमानामात्रोच्छेदपरतया व्याचष्टे—सन्दिग्धेति। यथाश्रुते=अनुमानमात्रोच्छेदार्थकत्वे। व्यभिचारेति। पक्षेतरत्वाभाववत्पक्षादौ साध्यस्य वृत्तित्वनिश्चयसत्त्वेन निश्चितसाध्यवति पक्षे पक्षेतरत्वाभावसत्त्वेन वेत्यर्थः। अनुमानमात्रेति। निश्चितसाध्यपक्षकसन्दिग्धसाध्यपक्षकानुमानयोरुच्छेदाभाव इत्यर्थः।

अस्माकन्त्विति। अनुकूलतर्कस्य व्याप्तिग्राहकत्ववादिनान्त्वित्यर्थः। यदा तु पक्षे साध्यसंशयो वर्त्तते तदा पक्षेतरत्वाभाववद्वृत्तित्वं साध्ये सन्दिग्धमेव, तादृशसन्देहनिवृत्तिश्चानुकूलतर्कादेव भवति, ततः साध्यव्यापकत्वनिश्चय इत्याह—पक्ष इत्यादि। पक्षेतरत्वं यदि उपाधिः स्यात्तर्हि सन्दिग्धसाध्यपक्षकानुमानमात्रोच्छेदकत्वज्ञानविषयीभूतं स्यादित्याकारकप्रतिकूलतर्कादित्यर्थः। न सव्यभिचारेण = नोपाध्यभाववद्वृत्तित्वेन। साध्यव्यभिचारोन्नायकः = साध्याभाववद्वृत्तित्वानुमापकः। हेताविति शेषः। तथा च यत्र स्वाभाववद्वृत्तित्वसंबन्धेनोपाधिमत्त्वं तत्रैव साध्याभाववद्वृत्तित्वमितिव्याप्तिबलाद्धेतौ साध्यव्यभिचारानुमानं स्यात्तदा तत्रापि पक्षेतरत्वमुपाधिरित्युपाधेर्दूषकत्वं न संभवतीति हृदयम्।

व्यभिचारवृति। साध्याभाववद्वृत्तित्वानुमापकत्वेनेत्यर्थः। तन्निश्चयेन=साध्यव्यापकत्वनिश्चयेन। मूले तद्व्यतिरेकादिति। व्यापकस्य पक्षेतरत्वस्य व्यतिरेकादभावज्ञानादित्यर्थः। टीकायां व्याप्यंति। व्याप्यस्य साध्यस्य अभावज्ञानस्येत्यर्थः।

वज्रलेपाच्च । अपि च करवह्निसंयोगः शक्त्यतिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वान्न साधकं, तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम ? तस्माद् विपक्षबाधकतर्काभावान्न तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानखण्डे तर्कनिरूपणम् ॥

---

तिरेकज्ञानस्य ।

ननु तादृशानुमानमात्रोच्छेदकत्वज्ञानमेव तत्र साध्यव्यापकत्वज्ञानविरोधीत्यस्वरसादाह—*अपि चेति* । *शक्त्यतिरिक्तेति* । न चास्मन्मते साध्याप्रसिद्धिः, पररीत्यैव परं प्रत्यभिधानात् । स्वमते तु शक्त्यतिरिक्तत्ववह्निर्भावेन साध्यं बोध्यम् । न साधकम्=न लिङ्गम्, व्याप्तस्य=व्याप्तत्वेन निश्चितस्य, पक्षधर्मत्वे=पक्षधर्मत्वनिर्णये । *न तत्रेति* । व्यभिचारसंशयसामग्रीसत्त्वेन न तत्र व्याप्तिनिश्चय इत्यर्थः ।

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्येऽनुमानाख्यद्वितीयखण्डरहस्ये तर्करहस्यं समाप्तम् ।

---

यथाश्रुते वस्तुसत्त्वस्य सन्दिग्धतया ज्ञानपर्यन्तानुसरणम् । मूले वज्रलेपादिति । तथा च व्यभिचारानुमापकतयोपाधेर्न दूषकत्वमपि तु साध्यव्यापकस्योपाध्यभावज्ञानेन पक्षे व्याप्यस्य साध्यस्याभावज्ञाननिबन्धनमेव तस्य दूषकत्वं, तदानीं पक्षे साध्यज्ञानासंभवादित्याशयः । टीकायां तादृशेति । सन्दिग्धसाध्यपक्षकानुमानमात्रोच्छेदकत्वज्ञानमेवेत्यर्थः । एवकारात्तर्कस्य विरोधित्वव्यवच्छेदः । तत्र = पक्षेतरत्वे । साध्येति । संशयनिश्चयसाधारणसाध्यव्यापकत्वज्ञानं प्रति प्रतिबन्धकमित्यर्थः । मूले करवह्नीति । हस्तवह्निसंयोग इत्यर्थः । शक्त्येति । शक्तिभिन्नातीन्द्रियधर्मसमवायीत्यर्थः । जनकत्वादित्यनेनादृष्टस्य दृष्टान्तत्वं सूचितम् । न साधकं=नानुमापकम् । पक्षधर्मत्वे=पक्षवृत्तित्वे ।

उपसंहरति—तस्मादिति । तथा च भवन्मते सहचारग्रहस्य सत्त्वात्तत्र व्याप्तिग्रहोदयेन हेतोरनुमापकत्वं स्यादतस्तर्काभावादेव तत्र न व्याप्तिग्रह इत्येवं वक्तव्यमिति भावः । ननु नैयायिकमते शक्तेरप्रसिद्धतया साध्याप्रसिद्धिः स्यादित्याशङ्क्य समाधत्ते टीकायां—परीत्यैवेति । शक्तिस्वीकर्तॄणां मतमवलम्ब्यैवेत्यर्थः । परं प्रति=तादृशशक्तिवादिनं प्रति । स्वमते तु=नैयायिकमते तु । शक्त्येति । तथा च तन्मते अतीन्द्रियधर्मसमवायित्वमात्रं साध्यं पर्यवसितमिति भावः । न लिङ्गमिति । भवितुमर्हतीति शेषः । अनिश्चितस्यानुमित्युत्पादाऽप्रयोजकत्वादाह—निश्चितस्येति । एवमग्रेऽपि निर्णयपदोपादानं बोध्यम् । हेतुपूरणेन व्याप्तिनिश्चयाभावं समर्थयति—व्यभिचारेति । न तत्र=न तादृश हेतावित्यास्तां विस्तरः ।

इति-श्री वामाचरणभट्टाचार्यकृततर्कमाथुरीकृतविवृतिः समाप्ता ।

# कुमारसम्भव-महाकाव्यम्

## नूतन पुंसवनी टीका सहितम् ।

यह काव्य सर्वत्र परीक्षाओं में निर्द्धारित है, इस काव्य की पुंसवनी टीका के टीकाकार–गवर्नमेंट संस्कृत कालेज बनारस के साहित्यशास्त्राध्यापक पण्डित श्रीगङ्गाधरशास्त्री भारद्वाज जी हैं। आज तक इतनी विस्तृत सरल व्याख्या कहीं न छपी थी। इस टीका में विशेषता यह है कि प्रत्येक श्लोक का १ अवतरण सहित दण्डान्वय प्रदर्शन, २ परीक्षोपयोगिनी व्याख्या, ३ विग्रह, व्याकरण, कोश, अलङ्कार, छन्द, प्रमाणप्रदर्शन, मल्लिनाथादि प्रदर्शित दोषोद्धार व्युत्पत्ति, ४ संस्कृत में भावार्थ ५ भाषा के सङ्क्षिप्त पदों के द्वारा श्लोकाभिप्राय प्रदर्शन ६ हिन्दी में सरल भावार्थ ७ प्रत्येक सर्ग की कथा का संक्षेप में संग्रह ८ विशिष्टभूमिका इत्यादि लोकोत्तरता देखने ही से ज्ञात हो सकती है। २)

# अभिज्ञानशकुन्तलनाटकम्

## 'रुचिर' 'किशोरकेलि' संस्कृत हिन्दीटीका द्वयोपेतम् ।

उपर्युक्त दोनों टीकायें संसारभरमें सर्वोत्तम सिद्ध हो चुकी हैं ३)

# मुद्राराक्षसनाटकम्

## 'भावबोधिनी--आशुबोधिनी' संस्कृत हिन्दीटीका द्वयोपेतं, परिष्कृत द्वितीयसंस्करणम् ।

इस अभिनव द्वितीय संस्करण में ग्रन्थ की सारी कठिनता दूर करदी गई है। देखते ही आप प्रसन्न हो जांयगे ३)

# वेणीसंहारनाटकम्

## 'प्रबोधिनी'–'प्रकाश' संस्कृत हिन्दीटीकाद्वयोपेतम् ।

इस ग्रन्थके टीकाकारों ने सभी नवीन व प्राचीन प्रकाशित टीकाओंका गुण-दोष विवेचन करके नाटकीय व्याख्या के ढङ्ग पर श्लोकान्वय, विग्रह, पर्याय, सुन्दर अर्थ, भावार्थ' अलङ्कार तथा कोषादि प्रमाण में शब्दान्तर देकर समन्वय करते हुए प्रबोधिनी और प्रकाश ( संस्कृत–हिन्दी) टीकाओं से, श्लोक, प्राकृत तथा गद्य को इस तरह समझाया है कि, सुकोमल मति विद्यार्थी स्वयं भी इस से ज्ञान प्राप्त कर सक्ते हैं। १।।)

# स्वप्नवासवदत्त नाटकम्

## अन्य संस्करणों से इस संस्करण की विशेषतायें–

इस संस्करण के "प्रबोधिनी" नामक संस्कृत व्याख्या में अन्वय, विग्रह, पर्याय, सुन्दर अर्थ, भावार्थ, कोश, अलङ्कार, छन्द, नाट्य–लक्षण आदि विषय और साथ ही साथ "प्रकाश" नामक प्राञ्जल भाषा टीका भी रख दी गयी है। संस्कृत तथा हिन्दी दोनों ही में कथासार भी लिख दिया गया है, १।।)

---

प्राप्तिस्थानम्—चौखम्बा-संस्कृत-पुस्तकालय, बनारस सिटी।

# न्यायशास्त्र-परीक्षोपयोगि ग्रन्थाः—

१ न्यायदर्शनम् । वात्स्यायनभाष्ययुतं । सटिप्पण-'खद्योत'-'भाष्यचन्द्र' टीकाभ्यांच विभूषितं। म. म. डा० गंगानाथझा विद्यासागरेण सम्पादितं १०)
२ न्यायबिन्दुः । बौद्धाचार्य श्रीधर्मकीर्त्ति प्रणीतः सटीक २)
३ जाग०पक्षता।न्या. आ. शिवदत्तमिश्रकृत गंगाव्याख्या टिप्पणी सहित १।।)
४ जाग० अवच्छेदकत्वनिरुक्तिः । ,, ,, ,, ,, १॥)
५ जाग० व्यधिकरणम् । ,, ,, ,, ,, ३)
६ गादा० सामान्यनिरुक्तिः । ,, ,, ,, ,, ३॥)
७ जाग० क्रोडपत्राणि । सम्पूर्णं १-४ खण्ड ६)
८ गादा० क्रोडपत्राणि । १-४ खण्ड ६) जा० क्रोडपत्र५-८ खण्ड ६)
९ गादाधरी—अनुमानचिन्तामणिव्याख्या शिरोमणिकृत दीधितिः संपूर्ण २१)
१० न्यायदर्शनम् । वात्स्यायनभाष्य सहितम् २)
११ न्यायदर्शनम् । विश्वनाथवृत्ति-चतुःसूत्रीतात्पर्यविवृति समेत २)
१२ न्यायवार्त्तिकं-तात्पर्यटीका । श्रीवाचस्पतिमिश्रकृता ६)
१३ व्युत्पत्तिवादः । "प्रकाश" टीका सहितः । ४)
१४ गादा०सामान्यनिरुक्तिः-गूढार्थतत्त्वालोकः । श्रीवच्चाझा कृतः १।।)
१५ व्युत्पत्तिवादः । परीक्षोपयोगि 'शास्त्रार्थकला' टीका सहितः २)
१६ शक्तिवादः । मञ्जूषा-विवृति-विनोदिनी व्याख्यात्रयोपेतः २॥)
१७ शक्तिवादः। हरिनाथी टीका सहितः ३)
१८ आत्मतत्त्वविवेकः । सटिप्पण—'दीधिति—विवृत्ति'—'कल्पलता' टीका द्वयोपेतः १-५ खण्ड ७॥)
१९ आत्मतत्त्वविवेकः । नारायणी व्याख्यासहितः संपूर्णः ७॥)
२० न्यायमञ्जरी । श्रीजयन्तभट्टकृता । सटिप्पण संपूर्णा ६)
२१ न्यायलीलावती । भागीरथठक्कुर कृत 'विवृत्त्या' वर्धमानोपाध्याय-कृत 'प्रकाशेन' शङ्करमिश्रकृत 'कण्ठाभरणेन' च विभूषिता १३॥)
२२ न्यायसिद्धान्तमञ्जरी । 'बृहत्तर्कप्रकाश' व्याख्या सहिता १॥)
२३ वादवारिधिः । श्रीगदाधरभट्टाचार्य विरचितः १-३ खण्ड ४॥)
२४ शब्दशक्तिप्रकाशिका । सटिप्पण-'कृष्णकान्त'-'रामभद्र'टीकाद्वयोपेतं ५)
२५ उभयाभावादिवारकपरिष्कारः । म० म० श्रीबालकृष्णमिश्र कृत 'प्रकाश' टीका युतः ।।।)
२६ मुक्तिवादः । चन्द्रिकाख्य विवृत्त्या समलङ्कृतः ॥)
२७ कारिकावली-मुक्तावली । 'मयूख' टीका समेत संपूर्ण १॥)

---

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।
१०००।०,०००

THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

134.

( Nyāya Section, No. 20 )



# VIS'AYATĀVĀDA

OF

S'RĪ GADĀDHARABHAṬṬĀCHĀRYA

Edited by

Nyāyāchārya Pt. Dhundhirāja S'āstri



॥ श्रीः ॥

# विषयतावादः ।

महामहोपाध्यायगदाधरभट्टाचार्यकृतः ।

न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सम्पादितः ।



PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office.*

Benares City. मू० ।)

1940.

श्रीगणेशायनमः ॥

अथ गदाधरभट्टाचार्यकृतः

# विषयतावादः ।

बुद्धिर्नाम कश्चिदा(१)त्मविशेषगुणः । तद्व्यवस्थितिः,(२) घटमहं जानामीत्याकारकाऽऽपामरसाधारणानुभवबलादेव । सा च(३) सविषयिका(४), (५)उक्तधामग्राहकप्रतीत्या घटादिविषयकत्वेनैव तदवगाहनात्(६) । घटादिनिष्ठं तद्विषयत्वञ्च तत्प्रतियोगिकः सम्बन्धविशेषः । स च प्रतियोगित्वादिवत् स्वरूपादनतिरिक्त एव, क्लृप्तेन स्वरूपेणैवोपपत्तौ अतिरिक्तकल्पनाया अनवकाशात् । न च तादृशसम्बन्धस्य ज्ञानस्वरूपता विषयस्वरूपता वा स्वीक्रियते इत्यत्र विनिगमनाविरहादुभयस्यैव सम्बन्धता कल्प्या, इति तदपेक्षया लाघवात् सम्बन्धत्वेनातिरिक्तैकविषयताकल्पनमेवोचितमिति वाच्यम् । (७)विषयताया विषयस्वरूपत्वे विषयेण समं तस्या आधाराधेयभावानुपपत्तेः,(८) ज्ञानस्वरूपाया एव तस्या उपगमात् । अभेदेऽपि आधाराधेयभावोपगमे घटो ज्ञानविषयतावानितिवत् घटो घटवानित्यादिप्रतीत्यापत्तेः । न च विषयतात्वावच्छिन्ननिरूपिताधिकरणतैव घटादावुपेयते न घटत्वावच्छिन्नाधिकरणता इति नातिप्रसङ्ग इति वाच्यम् । तदवच्छिन्ननिरूपितत्वस्य तदाश्रयानिरूपितत्वविलक्षणस्य दुर्वचत्वात्(९) ।

अस्तुवा विनिगमनाविरहादुभयमेव(१०) विषयत्वं, तथापि तादृशोभयस्य क्लृप्तत्वात्, अतिरिक्तविषयतायास्तत्र(११)ज्ञानादिसम्बन्धतायाश्च कल्पनाऽपेक्षया तदुभयस्य ज्ञानादिसम्बन्धत्वकल्पने गौरवानवकाश इति सिद्धान्तानुयायिनः ।

नव्यास्तु–विषयत्वं पदार्थान्तरमेव, न तु स्वरूपसम्बन्धविशेषः ।

---

( १ ) गुणत्वव्याप्यवैजात्याश्रयः ( २ ) विजातीयबुद्धिसिद्धिः । (३) बुद्धिः ।

( ४ ) विषयतानिरूपिका ॥ ( ५ ) विषयतायां प्रमाणमाह उक्तेत्यादि ॥ बुद्धिसाधकप्रतीतिरेव प्रमाणमिति भावः । ( ६ ) ज्ञानविषयत्वात् ।

( ७ ) विनिगमनाविरहं निराकरोति विषयताया इति ।

( ८ ) अभेदस्य वृत्त्यनियामकत्वेन घटो ज्ञानविषयतावानितिप्रतीत्यनुपपत्तेरित्यर्थः । ( ९ ) तथाच घटो घटवानिति प्रतीत्यापत्तेर्दुर्वारत्वमिति भावः ।

( १० ) ज्ञानविषयोभयस्वरूपमेव । ( ११ ) अतिरिक्तविषयतायाम् ।

तथाहि--ज्ञानविषयताया ज्ञानात्मकत्वे ज्ञानाधिकरणकालस्यापि ज्ञानविषयत्वापत्तिः, कालनिष्ठतत्सम्बन्धस्यापि तत्स्वरूपानतिरिक्तत्वात्(१)। एवं स्वाभावेन समं प्रतियोग्यनुयोगिभावरूपज्ञानसम्बन्धस्यापि स्वस्वरूपानतिरिक्ततया घटादिज्ञानस्य घटादिविषयकत्ववत् स्वाभावविषयकत्वस्यापत्तिः(२)। कालादौ ज्ञानादिसम्बन्धस्या(३)तिरिक्तत्वे च विनिगमनाविरहात् विषयनिष्ठतत्सम्बन्ध(४)स्याप्यतिरिक्तत्वसिद्धिर्निष्प्रत्यूहैव। एवं विषयताया ज्ञानस्वरूपत्वे घटपटावित्यादिसमूहालम्बनात्मकैकज्ञानीयघटपटादिरूपनानाविषयनिष्ठविषयतानामैक्यतया तादृशज्ञानानां घटत्वपटत्वाद्यवच्छिन्नपटघटादिनिष्ठविषयताकतया भ्रमत्वापत्तिः, तदवृत्तिधर्मावच्छिन्नतन्निष्ठविषयताशालिबुद्धेरेव भ्रमत्वात्(५)। तादृशज्ञानानन्तरं घटत्वेन पटं जानामीत्याकारकानुव्यवसायापत्तिश्च घटत्वावच्छिन्नपटनिष्ठविषयताकज्ञानस्यैव तादृशानुव्यवसायविषयत्वात्। न च तादृशसमूहालम्बनीयघटपटादिनिष्ठविषयताया ऐक्येऽपि सा विषयता घटत्वाद्यवच्छिन्नविषयतात्वेन घट एव वर्त्तते पटत्वाद्यवच्छिन्नविषयतात्वेन पट एव वर्त्तते, अतो न तादृशधियो भ्रमत्वापत्तिः, तदवृत्तिर्यो धर्मस्तदवच्छिन्नविषयतात्वेन तद्वृत्तिर्या विषयता तत्प्रतियोगिन एव ज्ञानस्य भ्रमत्वात्(६), न वा तादृशसमूहालम्बनानन्तरमुक्तानुव्यवसायप्रसङ्गः, घटत्वाद्यवच्छिन्नविषयतात्वेन पटादिवृत्तिविषयताप्रतियोगिन एव ज्ञानस्य तद्विषयत्वादिति वाच्यम्। यतः घटत्वाद्यवच्छिन्नविषयतात्वेन पटादिवृत्तित्वं हि तद्रूपावच्छिन्ननिरूपितपटादिनिष्ठाधिकरणताकत्वं, तादृशी चाधिकरणता यदि शुद्धविषयतात्वावच्छिन्ननिरूपिताधिकरणतातोऽनतिरिक्ता तदा तादृशज्ञानीयपटादिनिष्ठविषयतायामपि तादृशाधिकरणताकत्वमक्षतमेव, अति-

---

(१) घटानुयोगिकघटज्ञानप्रतियोगिकविषयत्वस्य कालानुयोगिकघटज्ञानप्रतियोगिककालिकसम्बन्धस्य च घटज्ञानस्वरूपतयैक्यात् घटज्ञानविषयतावान् काल इति प्रतीत्यापत्तिरिति भावः।

(२) घटज्ञानप्रतियोगिकविषयत्वस्य घटज्ञानप्रतियोगिकानुयोगित्वस्य च घटज्ञानस्वरूपतया ऐक्यात् घटज्ञानविषयतावान् घटज्ञानाभाव इति प्रतीत्यापत्तिरिति भावः। (३) कालिकानुयोगित्वादेः। (४) विषयत्वस्य।

(५) वस्तुविशिष्टविषयताकज्ञानत्वं भ्रमत्वम्, वैशिष्ट्यञ्च स्ववृत्तित्वस्वावृत्तिधर्मावच्छिन्नत्वोभयसम्बन्धेन।

(६) वस्तुविशिष्टवृत्तितावद्विषयताकज्ञानत्वं भ्रमत्वम्। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वावृत्तिधर्मावच्छिन्नविषयतात्वावच्छिन्नत्वोभयसम्बन्धेन।

रिक्ता चेत्, तर्हि किमपराद्धमतिरिक्तविषयतया(१) इति ।

विषयतायाः विषयस्वरूपत्वे च घटत्वप्रकारकप्रमानिरूपितायाः पटत्वप्रकारकभ्रमनिरूपितायाश्च घटनिष्ठविषयताया ऐक्यप्रसङ्गेन घटत्वप्रकारकप्रमाया अपि भ्रमत्वापत्तिः ।

एवं घटवद्भूतलं घटभूतलसंयोगा इति ज्ञानयोरविशेषप्रसङ्गश्च, विषयाणां तदात्मकविषयतानाञ्च अविलक्षणत्वात् । (२)न च प्रथमज्ञाने सम्बन्धावधया भासमानस्य संयोगस्य सम्बन्धोऽपि (३)अधिको भासते न तु समूहालम्बनरूपे चरमज्ञाने, इत्यत एव(४) उभयोर्वैलक्षण्यमित्युपाध्यायमतं सम्यक् । संयोगादिप्रतियोगिकसम्बन्धमादायाऽपि समूहालम्बनसम्भवात्(५) । न च संयोगसंसर्गकविशिष्टबुद्धौ संयोगः स्वरूपत एव भासते न तु संयोगत्वेन, सखण्डपदार्थस्यापि सम्बन्धविधया स्वरूपतो भानाभ्युपगमात्, उक्तसमूहालम्बने(६) च संयोगत्वेन संयोगो भासते इति संयोगत्वरूपाधिकविषयभानाभानाभ्यामेव तयोर्विशेष इति वाच्यम् । एवमपि घटवद्भूतलं संयोगश्च घटभूतलसंयोगा इति ज्ञानयोर्विशेषानिर्वाहात् । घटवद्भूतलमिति ज्ञानस्य घटप्रकारकत्वमेव घटविशेष्यकोक्तसमूहालम्बनात् विशेष इति चेत् । घटप्रकारकत्वं हि घटनिष्ठप्रकारताप्रतियोगित्वं, घटविशेष्यकत्वञ्च घटनिष्ठविशेष्यताप्रतियोगित्वं, तत्र च ज्ञानीयप्रकारताविशेष्यते यदि प्रकारविशेष्याभ्यामनतिरिक्ते तदा उक्तविशिष्टबुद्धेरपि घटविशेष्यकत्वम् उक्तसमूहालम्बनस्यापि घटप्रकारकत्वं दुर्वारमेव, घटात्मकयोस्तन्निष्ठप्रकारताविशेष्यतयोर्भवन्मतेऽभिन्नत्वात् । यदि च ते अतिरिक्ते तदा सिद्धं नः समीहितं प्रकारताविशेष्यतयोर्विषयतात्मकत्वात् ।

यत्तु भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वं तादृशवैशिष्ट्यानुयोगित्वं च विशेष्यत्वं न विषयतारूपमिति(७) ।

तदसत् । उक्तसमूहालम्बनस्यापि घटप्रतियोगिकवैशिष्ट्यविषयक-

---

(१) घटत्वावच्छिन्नविषयतात्वावच्छिन्नवृत्तित्वविषयतात्वावच्छिन्नवृत्तित्वयोरैक्ये उक्तदोषतादवस्थ्यम्, भिन्नत्वे च विषयताया एव भिन्नत्वमस्तु इति भावः ।

(२) नचेत्यस्य सम्यगित्यनेन सम्बन्धः । (३) प्रतियोगित्वानुयोगित्वरूपः ।

(४) संयोगप्रतियोगिकसम्बन्धभानाभानाभ्यामेव ।

(५) तथाच घटवद्भूतलं घटभूतलसंयोगप्रतियोगित्वानुयोगित्वानीति ज्ञानयोरविशेषप्रसङ्ग इति भावः । (६) घटभूतलसंयोगा इति ज्ञाने ।

(७) प्रतियोगित्वानुयोगित्वरूपप्रकारताविशेष्ययोरतिरिक्तत्वे सिद्धेऽपि न विषयतायामतिरिक्तत्वसिद्धिरित्याशयः ।

कतया घटप्रकारकत्वापत्तः, संयोगादिरूपव्यधिकरणसम्बन्धेन द्रव्यत्वादिभ्रमस्य द्रव्यत्वादिप्रकारकत्वानुपपत्तेः, भूतले घट इत्यादिज्ञानस्य भूतलाद्यनुयोगिकसंयोगादिविषयकतया भूतलादिविशेष्यकत्वापत्तेः, गुणादौ संयोगादिसम्बन्धेन घटादिभ्रमस्य गुणादिविशेष्यकत्वानुपपत्तेश्च ।

अथ वास्तवताद्दशवैशिष्ट्यप्रतियोगित्वानुयोगित्वे न प्रकारताविशेष्यत्वे येन उक्तदोषाणामवसरः स्यात्, अपि तु वैशिष्ट्यप्रतियोगितया तदनुयोगितया च भासमानत्वमेव प्रकारत्वं विशेष्यत्वञ्च इति चेन्न ।

प्रतियोगितयेत्यादौ तृतीयार्थस्य दुर्वचत्वात्, भासमानत्वस्य ज्ञानविषयतात्मकतया प्रकारताविशेष्यतयोर्विषयतात्वसिद्धेश्च ।

यत्तु विषयत्वं न केवलज्ञानस्वरूपं नापि केवलविषयस्वरूपमपि तु ज्ञानविषयोभयस्वरूपमतो न प्रागुक्तदोषाणामवसरः, तथाहि घटपटावित्यादिसमूहालम्बनीयघटादिनिष्ठतज्ज्ञानघटाद्युभयात्मकघटत्वाद्यवच्छिन्नविषयतायाः पटादिनिष्ठतज्ज्ञानपटाद्युभयात्मकपटत्वाद्यवच्छिन्नविषयतानात्मकतया न ताद्दशज्ञानस्य भ्रमत्वापत्तिः, न वा उपदर्शितविशिष्टधीसमूहालम्बनयोरविशेषप्रसङ्गः, ताद्दशसमूहालम्बनस्य तथाविधविशिष्टबुद्धिनिरूपिततज्ज्ञानघटोभयात्मकप्रकारताऽनिरूपकत्वेन विषयतावैलक्षण्यस्य सत्त्वात् इति ।

तदप्यसत् । घटपटावित्येताद्दशसमूहालम्बनात्मकज्ञानस्य तज्ज्ञानपटोभयात्मकपटत्वावच्छिन्नपटनिष्ठविषयताकत्वेन घटत्वावच्छिन्नघटनिष्ठतज्ज्ञानघटोभयात्मकविषयताकत्वेन च घटनिष्ठा या पटत्वावच्छिन्ना तज्ज्ञानरूपा विषयता तन्निरूपकत्वेन भ्रमत्वापत्तेर्दुर्वारत्वात् ।

अथ तद्धर्मावच्छिन्नविषयतात्वं तज्ज्ञानतत्तद्विषययोर्व्यासज्यवृत्ति उपेयते, एवञ्च तद्धर्म्मावच्छिन्नविषयतात्वेन तद्धर्म्मानधिकरणवृत्तिर्या विषयता तत्प्रतियोगित्वमेव भ्रमत्वम्, उपदर्शितसमूहालम्बने च पटत्वाद्यवच्छिन्नविषयतात्वस्य तज्ज्ञानपटाद्युभयपर्य्याप्ततया तेन रूपेण तदुभयात्मकविषयता न घटादिवृत्तिः, घटादेस्तद्रूपाश्रयपटाद्यात्मकविषयत्वासम्बन्धित्वात्, स्वाश्रययावद्व्यक्तिसम्बन्धिन एव व्यासज्यवृत्तिधर्मपुरस्कारेण तदाश्रयवत्त्वात्, इति न तस्य भ्रमत्वापत्तिः इति चेत् ।

पटत्वाद्यवच्छिन्नविषयतात्वं स्वरूपादतिरिक्तं न वा ? आद्ये किमपराद्धं तद्रूपावच्छिन्नातिरिक्तविषयतया, अन्त्ये च तस्य व्यासज्यवृत्तित्वानुपपत्तिः तत्तत्स्वरूपस्य प्रत्येकविश्रान्तत्वात् ।

एवं तद्रूपेण(१) घटादिवृत्तित्वं विषयतात्वेन घटादिवृत्तित्वादति-रिक्तं न वा ? आद्ये किमपराद्धमतिरिक्तविषयतया । अन्त्ये च तद्रूपेण घटादिवृत्तित्वं तादृशज्ञानीयस्वात्मकविषयताया अक्षतमेव ।

एवं जातिमान् घट इत्यादौ घटत्वाद्येकविषयवृत्तेरेकज्ञानीयविषय-ताया जातित्वाद्यवच्छिन्नत्वतदनवच्छिन्नत्वाभ्यां द्वैविध्यमनुपपन्नं, ज्ञान-स्यविषयस्य च द्वैविध्यविरहात् तथाच जातिमानित्याद्याकारकैकविधघ-टत्वादिविषयताशालिज्ञानात् तादृशज्ञानस्य विलक्षणविषयताशालित्वा-नुपपत्त्या विलक्षणाकारकतानुपपत्तिः, तस्मात् विषयत्वमतिरिक्तमेव ।

अथ विषयतावत् विषयेऽनुयोगिताऽऽख्यस्तत्सम्बन्धो ज्ञाने प्रतियो-गिताऽऽख्यस्तत्सम्बन्धश्च तुल्ययुक्त्याऽतिरिक्त एव उपगन्तव्यः । स्व-रूपानतिरिक्तत्वे(२) ज्ञानविषयनिष्ठयोस्तत्सम्बन्धयोरविलक्षणतापत्त्या ज्ञानस्येव विषयस्यापि सविषयकत्वं, विषयवत् ज्ञानस्यापि तद्विष-यत्वमापद्येत । एवं विषयताया ज्ञानघटादिनिष्ठेन सम्बन्धेन समं कालाभावादिनिष्ठसम्बन्धस्यापि(३) अनतिरिक्तत्वेन वैलक्षण्यानुप-पत्त्या कालाऽभावादीनामपि घटादिविषयकत्वापत्तिः, घटज्ञानादिवि-षयकत्वापत्तिश्च । एवं तुल्ययुक्त्या तादृशसम्बन्धस्यापि सम्बन्धः तत्सम्बन्धादिरपि अतिरिक्तः स्वीकरणीय इत्यनवस्थितसम्बन्धधारा-कल्पनप्रसङ्गः । एवं विषयतासम्बन्धेऽपि ज्ञानस्य तदीयतानियामको निरूप्यत्वाऽऽख्यसम्बन्धविशेषः तुल्ययुक्त्याऽतिरिक्तः स्वीकरणीयः एवं तत्सम्बन्धादिरपि इति तत्रापि सम्बन्धधाराऽनवस्थापत्तिः इति चेत् ।

का क्षतिः, न हि प्रामाणिकानवस्थाया दूषणावहत्वम् ।

विषयतावत् विषयित्वरूपज्ञानानुयोगिकविषयसम्बन्धोऽपि अति-रिक्त एव, न तु विषयताप्रतियोगित्वमेव विषयित्वम् , विषयित्वमेवा-तिरिक्तं तत्प्रतियोगित्वमेव विषयत्वमित्यस्यापि वक्तुं शक्यतया द्वयोरे-वातिरिक्ततासिद्धेरिति ।

विषयता च विषयभेदात् भिद्यते अन्यथा घटपटावित्यादिसमू-हालम्बनीयघटपटादिनिष्ठविषयताया ऐक्ये पूर्वोक्तयुक्त्या तादृश-ज्ञानस्य भ्रमत्वापत्तेः(४) घटाद्येकैकविषयकज्ञानीयैकैकवृत्तिविषय-तातः समूहालम्बने नानाविषयवृत्त्यतिरिक्तैकविषयताकल्पनप्रसङ्गेन

---

(१) घटत्वावच्छिन्नविषयतात्वेन । (२) विषयतानतिरिक्तत्वे ।
(३) विषयताप्रतियोगिककालिकानुयोगित्वादिरूपस्य ।
(४) तदवृत्तिधर्म्मावच्छिन्नतन्निष्ठविषयताशालिज्ञानस्य भ्रमत्वात् ।

गौरवाच्च, अस्मन्नये समूहालम्बने क्लृप्तप्रत्येकज्ञानीयविषयतानामेवोपगमात् ज्ञानभेदेन विषयताभेदे मानाभावात् ।

एतेन—घट इत्यादिविशिष्टबुद्धेर्विशेष्यविशेषणभावापन्नेषु घटघटत्वादिषु एकैव विषयता, न तु विशेष्यनिष्ठा विशेषणनिष्ठा च विषयता भिन्ना—इति मतं हेयमेव, विशेष्यनिष्ठविशेष्यतात्मकविषयतया समं विशेषणनिष्ठप्रकारतात्मकविषयताया अभेदस्यासम्भवदुक्तिकत्वात् तथासति(१) तादृशबुद्धौ घटप्रकारकत्वघटत्वविशेष्यकत्वयोरापत्तेः । न च प्रकारताविशेष्यतयोविषयतारूपतायामेवेय मनुपपत्तिः, सैव(२) न, अपि तु पदार्थान्तरे एव ते,(३) तयोर्विषयतात्वे मानाभावादिति वाच्यम् । विषयेऽतिरिक्तविषयतानां तत्र च विषयतात्वस्य कल्पनामपेक्ष्य विषयवृत्तित्वेन क्लृप्तानां प्रकारताविशेष्यतानां विषयतात्वकल्पनस्यैव न्याय्यत्वात् ।

यत्तु—निर्विकल्पकीया प्रकारताविशेष्यताभिन्नत्वेनोभयमतसिद्धा या विषयता विशिष्टज्ञानस्यापि सैव विषये सम्बन्धः, तत एव च विशिष्टबुद्धेरपि सविषयकत्वनिर्वाहोऽस्तु किं प्रकारतादीनां विषयतात्वोपगमेन, प्रकारतादीनां विषयतानात्मकत्वेऽपि तद्वैलक्षण्यस्य ज्ञानवैलक्षण्यसम्पादकत्वे(४) न कश्चिद्विरोध—इत्यपि हेयमेव । प्रकारताविशेष्यतयोर्विषयतात्वानुपगमे व्याप्यपक्षविशेष्यकपरामर्शयो(५)र्व्याप्यविषयतानिरूपितपक्षविषयताशालित्वेनानुगमय्याऽनुमितिहेतुत्वासम्भवात् कारणताबाहुल्यापत्तेः निर्विकल्पकीयविषयतायाः परस्परं निरूप्यनिरूपकभावविरहात् । एवं संसर्गज्ञानस्यानुपनायकतामते उपनीतभानं प्रति उपनायकज्ञानस्य तत्प्रकारकत्वेन तद्विशेष्यकत्वेन च हेतुताद्वयप्रसङ्गः, मन्मते तु प्रकारताविशेष्यते संसर्गताभिन्नविषयतात्वेनानुगमय्य एकहेतुताकल्पनसम्भवात् । एवं निर्विकल्पकीयविषयतायाः, विशिष्टबुद्धावुपगमे घटत्वादिनिर्विकल्पकादिव जातित्वादिना घटत्वादिज्ञानादपि स्वरूपतो घटत्वादिप्रकारिकायाः घट इत्याद्याकारकविशिष्टबुद्धेरापत्तिः । न च स्वरूपतस्तद्विशिष्टबुद्धौ तद्विशेष्यकतज्ज्ञानत्वेन हेतुत्वात् नायं दोष इति वाच्यम् । तथासति जातिर्घटश्चेत्यादिज्ञानात् घट इत्यादिविशिष्टबुद्ध्यनुपपत्तेरिति ॥

---

(१) अभिन्नत्वे । (२) विषयतारूपतैव । (३) प्रकारताविशेष्यते ।
(४) विशिष्टबुद्धेर्निर्विकल्पकवैलक्षण्यप्रयोजकत्वे ।
(५) वह्निव्याप्यधूमः पर्वते, वह्निव्याप्यधूमवान् पर्वत इति ज्ञानयोः ।

यत्तु— विशिष्टबुद्धिविषयता विशेष्यमात्रे न तु विशेषणेऽपि मानाभावात् । न च विनिगमनाविरहः, घट इत्यादिज्ञानानन्तरं घटं जानामीत्याद्यनुव्यवसायेन घटरूपविशेष्येण समं ज्ञानस्य सम्बन्धावगाहनात् घटादिरूपविशेष्ये ज्ञानस्य विषयतात्मकसम्बन्धस्यावश्योपेयत्वात् । घटत्वं जानामीत्याद्यनुव्यवसायस्तु तत्रासिद्ध एव, तस्य घटत्वत्वविशिष्टवैशिष्ट्यावगाहित्वेन घटत्वत्वप्रकारकव्यवसायानन्तरमेव तत्सम्भवात्(१), घट इत्यादिव्यवसायस्य च स्वरूपत एव घटत्वादिप्रकारकतया घटत्वत्वाद्यप्रकारकत्वात् । ज्ञानांशे स्वरूपतो घटत्वादिविशेषणकोऽनुव्यवसायोऽपि न तत्र सम्भवति, ससम्बन्धिकपदार्थप्रत्यक्षस्य किञ्चिद्विशिष्टसम्बन्धिवैशिष्ट्यावगाहित्वनियमात् । न चायं घट इत्यादिव्यवसायानन्तरं घटत्वेनेमं जानामीत्याद्याकारकानुव्यवसायेन घटत्वादिरूपविशेषणेनापि समं ज्ञानस्य सम्बन्धावगाहनात् (२)तत्रापि विशिष्टधीविषताभ्युपगम आवश्यक इति वाच्यम् । यतस्तत्र ज्ञानान्वयिवैशिष्ट्यं न तृतीयार्थः, अपि तु द्वितीयार्थविषयतान्वयिघटत्वादिप्रकारकत्वम् । न च विषयतानिष्ठं घटत्वादिप्रकारकत्वं घटत्वादिनिष्ठप्रकारतानिरूपकत्वं तदभ्युपगमे च विशेषणीभूतघटत्वादेर्विशिष्टधीविषयतासिद्धिर्निष्प्रत्यूहैव, प्रकारताया विषयताविशेषात्मकत्वादिति वाच्यम् । यतो विषयतानिष्ठं घटत्वादिप्रकारकत्वं न घटत्वादिनिष्ठप्रकारताख्यविषयतानिरूपकत्वमपि तु घटत्वाद्यवच्छिन्नत्वम्, अवच्छिन्नत्वञ्च प्रतियोगित्वकारणत्वाधिकरणत्वादाविव विषयतादावपि घटत्वादेः सम्बन्धविशेष एव, स च अतिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् ।

इयांस्तु विशेषः—प्रतियोगित्वादावन्यूनानतिप्रसक्तत्वमवच्छेद्यावच्छेदकभावे तन्त्रं, न तु विषयतास्थले, व्यधिकरणधर्मस्यापि विषयतावच्छेदकत्वात् । विशेषणनिष्ठप्रकारतानिरूपितत्वमेव वा विषयतानिष्ठं तत्प्रकारकत्वम् । अस्तु वा विशेषणे विषयतानिरूपितः प्रकारताख्यधर्मविशेषः, तथापि तस्य विषयतात्वे ज्ञानप्रतियोगिकत्वे च मानाभाव—इत्यतिरिक्तविषयतावादिनां प्राचीनैकदेशिनां मतं, तदपि अनुपादेयमेव । विशेषणस्य विशिष्टज्ञानाविषयत्वे तद्धर्मविशिष्टज्ञानानन्तरं तद्धर्मविशिष्टज्ञानानुपपत्तेः, विशिष्टबुद्धौ विशेषणविषयकज्ञानस्य हेतुत्वात, भवन्मते तद्विशिष्टज्ञानस्य तद्विषयकत्वाभावेन तदहेतुत्वात् ।

---

(१) विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वात् । (२) विशेषणेऽपि ।

एवं विशिष्टज्ञानात् विशेषणविषयकोपनीतभानस्याप्यनुपपत्तिः, तदुपनीतभाने तद्विषयकज्ञानस्यैव हेतुत्वात् । एतादृशयुक्त्या विशेषणस्य विशिष्टधीविषयताया आवश्यकत्वे च उक्तलाघवात् तन्निष्ठप्रकारताया एव विषयतात्वसिद्धिरित्यवधेयम् ।

अथ तद्विशिष्टबुद्धौ तदुपनीतभाने च स्ववृत्तित्वस्वप्रकारकत्वान्यतरसम्बन्धेन तद्विशिष्टा या विषयता तच्छालिज्ञानत्वेनैव हेतुता वाच्या(१), इत्थञ्च विशेषणस्य विशिष्टज्ञानाविषयत्वेऽपि तद्विशिष्टज्ञानात् तद्विशिष्टज्ञानान्तरस्य तदुपनीतभानस्य च नानुपपत्तिः । न चोपदर्शितकारणतावच्छेदककोटावन्यतरसम्बन्धेन तद्वैशिष्ट्यस्य विषयतायां निवेशे अन्यतरत्वघटकभेदयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यमिति वाच्यम् । यतस्तादृशान्यतरस्य अन्यतरत्वेन न सम्बन्धता, अपि तु स्वरूपत एव । न चैवमप्यननुगमात् कारणताधिक्यं व्यभिचारश्चेति वाच्यम् । सम्बन्धाननुगमेऽपि तावन्निष्ठसम्बन्धताया ऐक्योपगमेन तद्दोषानवकाशात् । अत एव सम्बन्धाननुगमो न दोषायेति प्राचां प्रवादोऽपि । न चैवमपि स्ववृत्तित्वस्वप्रकारकत्वान्यतरसम्बन्धेन तद्विशिष्टविषयतामपेक्ष्य स्ववृत्तित्वसम्बन्धेन तद्विशिष्टविषयताया लाघवेन तद्विशिष्टबुद्ध्यादिजनकतावच्छेदकत्वसिद्धेर्निष्प्रत्यूहतया विशेषणस्यापि विशिष्टधीविषयत्वं दुर्वारमिति वाच्यम् । प्रकारतायां विषयतात्वोपगमे घटत्वादिरूपेण घटादिविषयकस्मरणादौ तथाविधज्ञानस्य घटत्वादिप्रकारतानिरूपितघटादिनिष्ठविशेष्यताशालिज्ञानत्वेन घटादिनिष्ठविशेष्यतानिरूपितघटत्वादिप्रकारताशालिज्ञानत्वेन वा हेतुत्वे गौरवात्, अस्मन्मते च नैतादृशविनिगमनाविरहावकाशः, विशेष्यतानिरूपितप्रकारताया, ज्ञानप्रतियोगिकत्वाभावेन परम्परासम्बन्धेनैव(२) तस्या जनकतावच्छेदकत्वस्योपगन्तव्यतया तदपेक्षया प्रकारतानिरूपितविशेष्यतायाः प्रतियोगितासम्बन्धेन जनकतावच्छेदकत्वे लाघवस्यैव विनिगमकत्वात् ।

मैवम्, उक्तविशेषणज्ञानादिकारणतावच्छेदकलाघवेन प्रकारतायां विषयतात्वस्य ज्ञानप्रतियोगिकत्वस्य च सिद्धावेव दर्शितस्मरणादिहेतुतायां विनिगमनाविरहावतारेण गौरवावतारात्, तादृशगौरवस्य फलमुखत्वेनादोषत्वात्, यत्सिद्धिमुपजीव्य गौरवावतारस्तत्सिद्धौ तस्य

(१) निर्विकल्पकात् विशिष्टबुद्ध्युपपत्त्यर्थं प्रथमसम्बन्धनिवेशः ।

(२) स्वनिरूपकविशेष्यताप्रतियोगित्वसम्बन्धेन ।

च्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्यापि घटभेदस्वरूपत्वाभ्युपगमाच्च ।

न चैवं साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्ष्यतां, किं साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वस्य प्रतियोगिताविशेषणत्वेनेति वाच्यम् । कालिकसम्बन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य विशेषणताविशेषेण साध्यत्वे आत्मत्वादिहेतावव्याप्त्यापत्तेः । कालिकसम्बन्धावच्छिन्नसाध्याभावस्य विशेषणताविशेषसम्बन्धेन योऽभावस्तस्यापि साध्यरूपतया कालिकसम्बन्धवद्विशेषणताविशेषोऽपि साध्यीयप्रतियोगितावच्छेदकसम्बन्धस्तेन सम्बन्धेनात्मत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्याभाववत्यात्मनि हेतोरात्मत्वस्य वृत्तेः । प्रतियोगितावच्छेदकवत्प्रतियोग्यपि अन्योन्याभावाभावस्तेन तादात्म्यसम्बन्धेन साध्यतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वस्य नाप्रसिद्धिः । इत्थंचात्यन्ताभावत्वनिरूपितत्वेनापि साध्यसामान्यीयप्रतियोगिता विशेषणीया । अन्यथा घटान्योन्याभाववान्घटत्वत्वादित्यादावव्याप्त्यापत्तेः, तादात्म्यसम्बन्धस्यापि

---

घटाभावाभावस्य घटस्वरूपत्वमित्यर्थः, एवं घटभेदात्यन्ताभावाभावस्य घटभेदस्वरूपत्वमेव नतु घटत्वात्यन्ताभावरूपत्वमिति यावत् ।

आत्मत्वप्रकारकेति । आत्मत्वप्रकारकप्रमानिरूपिता या विशेष्यता तादृशविशेष्यतानिष्ठा या कालिकसम्बन्धावच्छिन्ना प्रतियोगिता तन्निरूपको योऽभावस्तस्य स्वरूपेण साध्यता । आत्मत्वस्य वृत्तेरिति । तद्विशेषणे तु प्रकृते नाव्याप्तिः कुतः कालिकसम्बन्धावच्छिन्नात्मत्वप्रकारकप्रमाविशेष्यतानिष्ठप्रतियोगिताकाभावात्मकं यत्साध्यं तादृशसाध्यस्य यः स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः तस्यैव साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावतया तद्वृत्तिकालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावात्मकसाध्यनिरूपिता कालिसम्बन्धावच्छिन्नैव प्रतियोगिता तदवच्छेदककालिकसम्बन्धेन आत्मत्वप्रकारकप्रमाविशेष्यत्वात्मकसाध्याभावाधिकरणे जन्ये हेतोरात्मत्वस्यावृत्तेः । तेन तादात्म्यसम्बन्धेन साध्यतायामिति । प्रमेयस्तादात्म्येन घटभेदवान् घटभेदनिष्ठतद्व्यक्तित्वादिति पक्षसाध्यहेतुविन्यासः, । तथा च साध्यतावच्छेदकतादात्म्यसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्ना या घटभेदरूपसाध्यनिष्ठा प्रतियोगिता तन्निरूपकोऽभावो घटभेदभेदरूपः घटभेदभेदरूपसाध्यभावे च घटभेदरूपसाध्यनिरूपितप्रतियोगित्वविरहात् कुतः घटभेदस्य घटभेदभेदाभावरूपत्वाभावादत आह । प्रतियोगितावच्छेदकवत्प्रतियो-

निरुक्तसाध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकत्वात् । यद्वा साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीयनिरुक्तप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्षणीयम् । वृत्त्यन्तमन्यतराविशेषणम् । एवं च घटान्योन्याभाववान् पटत्वादित्यादौ साध्याभावस्य घटत्वादेः साध्यप्रतियोगित्वविरहेऽपि न क्षतिः । तादृशान्यतरस्य प्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वात् । न च तथापि कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यके सद्धेतावव्याप्तिरिति वाच्यम् । निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या निरुक्तसंसर्गकनिर-

---

ग्यपि अन्योन्याभावाभाव इति । तथा च नाप्रसिद्धिरिति भावः । प्रतियोगितावच्छेदकत्वादिति । घटभेदाभावरूपसाध्याभावो घटरूपस्तद्वृत्तिर्या साध्यसामान्यघटभेदनिरूपिता प्रतियोगिता तत्र प्रतियोगितावच्छेदकसम्बन्धस्तादात्म्यन्तेन सम्बन्धेन घटभेदाभावाधिकरणे घटत्वे घटत्वत्वस्य वृत्तित्वेनाव्याप्तिः स्यात् तन्निरूपितत्वेनापि विशेषणत्वे तु नाव्याप्तिः कुतः तादात्म्यस्यैव भेदप्रतियोगितावच्छेदकसम्बन्धरूपत्वं अत्यन्ताभावत्वनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वन्तु न तस्य तत्र सम्बन्धघटकतया समवायादीनामेव प्रवेशात् । एवञ्च समवायेन साध्याभावरूपघटत्वाधिकरणे घटे घटत्वत्वस्यावृत्तेर्नाव्याप्तिरिति बोध्यम् । इत्थञ्चेति । अन्योन्याभावाभावस्य प्रतियोगिरूपत्वस्वीकारे चेत्यर्थः । यदि तु प्रतियोगितावच्छेदकरूपएवासौ स्यात् तदा तु नात्राव्याप्त्यापत्तिः । घटत्वरूपे घटभेदाभावे या घटभेदाभावाभावनिरूपिता प्रतियोगिता तस्याः समवायस्यैव प्रतियोगिताच्छेदकसम्बन्धत्वात् । तत्र सत्त्वादिति । घटत्वे सत्त्वादित्यर्थः । तत्र घटत्वे समवायेनैव प्रतियोतावच्छेदकत्वम् । एवञ्चेत्यादि । पूर्वोक्तरीत्या नाव्याप्तिरिति बोध्यम् । अव्याप्तिरिति । वाच्यमिति । मूलावच्छेदेन कपिसंयोगाभावाधिकरणे वृक्षे एतद्वृक्षत्वरूपहेतोर्विद्यमानत्वेनाव्याप्तिरिति भावः । साध्याभावत्वावच्छिन्नेतिविशेषणानुपादाने 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायाच्छुद्धसत्त्वाधिकरणत्वेन गुणादीनां विशिष्टसत्ताधिकरणत्वमपि गुणो गुणकर्मान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादौ साध्यतावच्छेदकस्वरूपसम्बन्धावच्छिन्ना तादृशसत्ताऽभावनिष्ठा या प्रतियोगिता तादृशप्रतियोगितानिरूपको यः साध्याभावः स च तादृशसत्ताभावाभावरूपस्तद्वृत्तिर्या साध्यसामान्यनिरूपिता प्रतियोगिता सा च सत्ताभावनिरूपिता स च साध्याभावः सत्तारूप इति सत्तानिष्ठा प्रतियोगितावच्छेदकसम्बन्धश्च समवायस्तेन सम्बन्धेन तादृशसत्तारूपसाध्याभावाधिकरणे गुणादौ गुणत्वस्य वृत्तेरव्याप्तिः स्यात् । तद्विशेषणोपादाने तु साध्याभावत्वरूपगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्ना या निरूपकता तादृशनिरूपकतानिरूपिता याऽधिकरणता सा गुणादौ नास्ति विशेषणविशेष्योभयाधिकरणे एव विशिष्टाधिकरणत्वस्य सर्वसम्मतत्वात् गुणान्यत्वस्य च गुणेऽसत्त्वा-

वच्छिन्नाधिकरणता तदाश्रयावृत्तित्वस्य विवक्षितत्वात् । गुणकर्मान्यत्वविशिष्टसत्त्वाभाववान्गुणत्वादित्यादौ सत्त्वात्मकसाध्याभावाधिकरणत्वस्य गुणादिवृत्तित्वेऽपि साध्याभावत्वविशिष्टनिरूपिताधिकरणत्वस्य गुणाद्यवृत्तित्वान्नाव्याप्तिः । न चैवं कपिसंयोगाभाववान्सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवास्य दोषस्य वक्ष्यमाणत्वात् । न च तथापि कपिसंयोगिभिन्नं गुणत्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिः, अन्योन्याभावस्य व्याप्यवृत्तितानियमवादिनये तस्य केवलान्वय्यनन्तर्गतत्वादिति वाच्यम् । अन्योन्याभावस्य व्याप्यवृत्तितानियमवादिनये अन्योन्याभावान्तरात्यन्ताभावस्य प्रतियोगितावच्छेदकस्वरूपत्वेऽपि अव्याप्यवृत्तिमदन्योन्याभावाभावस्य व्याप्यवृत्तिस्वरूपस्यातिरिक्तस्याभ्युपगमात् । तच्चाग्रे स्फुटीभविष्यति ।

ननु तथापि समवायादिना गगनादिहेतुके इदं वन्हिमद्गगनादित्यादावतिव्याप्तिः । वन्ह्यभाववति हेतुतावच्छेदकसमवायादिसम्बन्धेन गगनादेरवृत्तेः । न च तल्लक्ष्यमेव हेतुतावच्छेदकसम्बन्धेन पक्षधर्मत्वाभावाच्चासद्धेतुत्वव्यवहार इति वाच्यम् । तत्रापि व्याप्तिभ्रमेणैवानुमितेरनुभवसिद्धत्वादन्यथा धूमवान्वन्हेरित्यादेरपि लक्ष्यत्वस्य सुवचत्वात् । एवं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावप्यव्याप्त्यापत्तिः । विशिष्टसत्त्वस्य केवलान्वयित्वात् ।

---

त् । विशिष्टसत्ताधिकरणता च द्रव्ये तत्र च गुणत्वस्यावृत्तेर्लक्षणसमन्वयः । अमुमर्थं वक्ति गुणकर्मान्यत्वविशिष्टेत्यादिना । निरवच्छिन्नसाध्याभावेति । साध्याभावश्चात्र संयोगरूपः । कपिसंयोगिभिन्नमिति । कपिसंयोगवद्भेदः साध्यः साध्याभावश्च प्रतियोगितावच्छेदकसंयोगरूपः यथा घटवद्भेदाभावो घटस्वरूपः । ननु अन्योन्याभावस्य अव्याप्यवृत्तिस्वरूपत्वेन अग्रावच्छेदेन कपिसंयोगवति वृक्षेऽपि मूलावच्छेदेन कपिसंयोगवद्वृक्षभेदस्य सत्त्वेन केवलान्वयिन्यन्तर्भाव इत्याशङ्क्याह । अन्योन्याभावस्येत्यादि । देशकालानवच्छिन्नवृत्तिताकत्वं व्याप्यवृत्तित्वम् । अन्योन्याभावान्तरात्यन्ताभावस्येति । साध्याभावस्येति यावत् । अव्याप्यवृत्तिः संयोगस्तद्वान् वृक्षस्तत्प्रतियोगिकान्योन्याभावो घटादौ तदभावश्च वृक्षे तत्र गुणत्वस्यावृत्तेर्नाव्याप्तिरित्यर्थः । अतिरिक्तस्येति । प्रतियोगितावच्छेदकसंयोगातिरिक्तस्येत्यर्थः । न च तल्लक्ष्यमिति । एवं च व्याप्तिसत्त्वं पक्ष-

वत्सत्ताऽनतिरेकितया द्रव्यत्वाभाववत्यपि गुणादौ तस्य वृत्तेः । गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतेस्सर्वसिद्धत्वात् । सत्तावान् द्रव्यत्वादित्यादावव्याप्तिश्च । सत्ताभाववति सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरप्रसिद्धेरिति चेन्न । हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणताप्रतियोगिकहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन निरुक्तसाध्याभावत्वविशिष्टनिरूपितनिरुक्तसंसर्गकनिरवच्छिन्नाधिकरणताश्रयवृत्तित्वसामान्याभावस्य विवक्षितत्वात् । वृत्तिश्च न हेतुतावच्छेदकसम्बन्धेन विवक्षणीया । अस्ति च सत्तावान् द्रव्यत्वादित्यादौ सत्ताभावाधिकरणतावद्वृत्तित्वस्य हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धेन सामान्याभावो द्रव्यत्वादौ, हेतुतावच्छेदकसमवा-

---

वृत्तित्वद्वयमेव सद्धेतुत्वप्रयोजकम्, नत्वन्यतरमात्रम्, अन्यथा धूमवत्पर्वतादिवृत्तित्वस्य वह्नौ सत्त्वात्सद्धेतुत्वव्यवहारः स्यात् । धूमव्याप्तेर्वह्नावसत्त्वादेव न तद्व्यवहारः वह्निमद्गगनादित्यादौ च मूलोक्तरीत्या व्याप्तिसत्त्वेऽपि पक्षे तमसि समवायेन गगनस्यावृत्तेः पक्षवृत्तित्वाभावान्न तद्व्यवहारः । वृत्तेरप्रसिद्धेरिति । पर्वतो वह्निमानित्यादौ तु वह्न्यभावाधिकरणह्रदादिनिरूपितवृत्तित्वस्य, शैवालादौ प्रसिद्धेर्न तत्राप्रसिद्धिदोषः । सामान्याभावस्य विवक्षितत्वादिति । हेतुतावच्छेदकावच्छिन्नहेत्व(१)धिकरणतानिरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयता तादृशाधेयताप्रतियोगिकस्वरूपसम्बन्धा(२)वच्छिन्ना साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्ननिरूपकतानिरूपितनिरवच्छिन्नाधिकरणताश्रयनिरूपितवृत्तितानिष्ठा या प्रतियोगिता तादृशप्रतियोगिताकाभाववत्त्वं व्याप्तिः । यथा घटप्रतियोगिकसंयोगेन घटस्यैव सत्त्वं न तु पटस्य तत्सम्बन्धावच्छिन्नतदभावस्य केवलान्वयित्वात्, तथा द्रव्यत्वत्वावच्छिन्नद्रव्यत्वनिष्ठानिरूपकतानिरूपिता याऽधिकरणता तन्निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना द्रव्यत्वनिष्ठाधेयता तादृशाधेयताप्रतियोगिकस्वरूपसम्बन्धेन सत्ताभावाधिकरणतावद्वृत्तसामान्यं, तन्निरूपिता या स्वरूपसम्बन्धावच्छिन्ना वाच्यत्वनिष्ठा वृत्तिता तस्याः कुत्रापि सत्त्वं नास्ति इति तदभावस्य द्रव्यत्वे सत्त्वाल्लक्षणसमन्वयः । धूमवान् वन्हेरित्यादौ च नातिव्याप्तिः, कथम् हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयता सा वह्निनिष्ठा तादृशाधेयताप्रतियोगिकस्वरूपसम्बन्धेनैव धूमाभावाधिकरणतावत् य-

---

(१) हेतुनिष्ठनिरूपकतानिरूपिता याऽधिकरणतेत्यर्थः ।
(२) स्वरूपसम्बन्धेत्यस्य वृत्तितानिष्ठप्रतियोगितायामन्वयः ।

यसम्बन्धावच्छिन्नाधेयतानिरूपितविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियो-गिताकसत्ताभावाधिकरणतावद्वृत्तित्वाभावस्य व्यधिकरणसम्बन्धावच्छि-न्नाभावतया संयोगसम्बन्धावच्छिन्नगुणाभावादेरिव केवलान्वयित्वात् । द्रव्यं सत्त्वादित्यादौ च द्रव्यत्वाभावाधिकरणगुणादिवृत्तित्वस्यैव समवायसम्ब-न्धावच्छिन्नाधेयतानिरूपितविशेषणतासम्बन्धेन सत्तायां सत्वान्नातिव्याप्तिः । द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तेर्वारणाय प्रतियोगिकान्तमाधेयताविशेषणम् ।

वस्तुतस्त्वेतल्लक्षणकर्तृनये विशिष्टसत्त्वं विशिष्टनिरूपिताधारतास-म्बन्धेनैव द्रव्यत्वव्याप्यं न तु समवायसम्बन्धेन, तथा च प्रतियोगिका-न्तमाधेयताविशेषणमनुपादेयमेव । तदुपादाने हेतुतावच्छेदकभेदेन का-र्यकारणभावभेदापत्तेः । हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वे सतीत्यने-

---

दयोगोलकं तन्निरूपिता या वृत्तिता तस्या वह्नौ सत्त्वेन तदभावस्य तत्रासत्त्वात् । पर्वतो वह्निमान्धूमादित्यादौ च धूमत्वावच्छिन्नधूमनिष्ठनिरूपकतानिरूपिता याऽधिकरणता-पर्वतनिष्ठा तादृशाधिकरणतानिरूपिता या संयोगसम्बन्धावच्छिन्ना धूमनिष्ठाऽधेयता-तादृशाधेयताप्रतियोगिकस्वरूपसम्बन्धेन वह्न्यभावाधिकरणतावद्ह्रदादिनिरूपिता या मीनशैवालादिनिष्ठा संयोगसम्बन्धावच्छिन्ना वृत्तिता तस्याः कुत्रापि सत्त्वं नास्तीति तद-भावस्य धूमे सत्वाल्लक्षणसमन्वयः । प्रतियोगिकान्तमाधेयताविशेषणमिति । उक्तलक्षणे हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरूपितेत्यादिविशेषणमित्यर्थः । तद्विशेषणानु-पादाने तु हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्ना या सत्तानिष्ठाधेयता तादृशाधेयता प्रतियोगिकस्वरूपसम्बन्धेनैव या द्रव्यत्वाभावाधिकरणता गुणादिनिष्ठा तदाश्रयो गुणादिः तन्निरूपिता या सत्तानिष्ठा वृत्तिता तस्या विशिष्टसत्तायां सत्त्वादव्याप्तिः स्यात् विशिष्टशुद्धयोरनतिरेकादिति भावः । तदुपादाने तु विशिष्टसत्तारूपहेतु-निष्ठनिरूपकतानिरूपिता याऽधिकरणता द्रव्यनिष्ठा तन्निरूपिता या सम-वायसम्बन्धावच्छिन्नाधेयता विशिष्टसत्तानिष्ठा तत्प्रतियोगिकस्वरूपसम्बन्धेन द्रव्यत्वा-भावाधिकरणता गुणादिनिष्ठा तदाश्रयो गुणादिः तन्निरूपिता या समवायसम्बन्धावच्छि-न्ना सत्तानिष्ठवृत्तिता तस्याः कुत्रापि सत्त्वं नास्तीति तदभावस्य विशिष्टसत्तायां सत्त्वा-न्नाव्याप्तिरित्यर्थः । ननु समवायादिसम्बन्धेनेति । गुणकर्मान्यत्वविशिष्टसत्तानिरूपिता-धारत्वसम्बन्ध एव हेतुतावच्छेदकः तादृशहेतुतावच्छेदकसम्बन्धेन या आधेयता विशि-ष्टसत्तानिष्ठा तत्प्रतियोगिकस्वरूपसम्बन्धेन द्रव्यत्वाभावाधिकरणताश्रयो गुणादिः तन्निरूपि-ता या समवायसम्बन्धावच्छिन्ना वृत्तिता शुद्धसत्तानिष्ठा तस्याः कुत्रापि सत्त्वं नास्तीति त-दभावस्य विशिष्टसत्तायां सत्वाल्लक्षणसमन्वयः । सम्बन्धित्वे सतीत्यपि विशेषणादिति ।

नापि विशेषणाद्वह्निमान्गगनादित्यादौ नातिव्याप्तिः । ननु तथाप्युभयत्वमुभयत्रैव पर्याप्तं नत्वेकत्रेति सिद्धान्तादरे घटत्ववान् घटपटोभयत्वादित्यादौ पर्याप्त्यात्मकसम्बन्धेनोभयत्वहेतुकेऽतिव्याप्तिः, घटत्वाभाववति हेतुतावच्छेदकसम्बन्धेन हेतोरवृत्तेः घटो न घटपटोभयमिति प्रतीतेरिति चेन्न । तादृशसिद्धान्तादरे हेतुतावच्छेदकसम्बन्धेन साध्यसमानाधिकरणत्वे सतीत्यनेनैव विशेषणीयत्वात् । अत एवोक्तं निविशतां वा वृत्तिमत्त्वं साध्यसमानाधिकरणत्वं वेति केवलान्वयिग्रन्थे दीधितिकृता ।

केचित्तु निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या विशेषणताविशेषसम्बन्धेन यथोक्तसम्बन्धेन वा निरवच्छिन्नाधिकरणता तदाश्रयव्यक्त्यवर्तमानं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसामान्यं तद्धर्मवत्त्वं विवक्षितम् । धूमवान्वह्नेरित्यादौ पर्वतादिनिष्ठवह्न्यधिकरणत्वव्यक्तेर्धूमाभावाधिकरणावृत्तित्वेऽपि अयोगोलकनिष्ठवन्ह्यधिकरणताव्यक्तेरतथात्वान्नातिव्याप्तिरित्याहुः ।

---

हेतुतावच्छेदकसमवायेन गगनहेतोः सम्बन्धित्वाभावात् तस्य तेन सम्बन्धेन कुत्रापि अवृत्तेर्नातिव्याप्तिरिति भावः । विशेषणं च साध्याभाववदवृत्तित्ववतो बोध्यम् । विशेषणीयत्वादिति । घटत्वरूपसाध्याधिकरणे घटे हेतुतावच्छेदकपर्याप्तिसम्बन्धेन घटपटोभयत्वरूपहेतोरवृत्तेः साध्यसामानाधिकरण्याभावान्नातिव्याप्तिरिति भावः। निविशतां वेति । वह्निमान् गगनादित्यादावतिव्याप्तिवारणाय वृत्तिमत्त्वं हेतोर्विशेषणम् गगनस्य समवायेन वृत्तिमत्त्वाभावान्नातिव्याप्तिरित्यनुपदमेवोक्तम् । केचित्त्वित्यादि । अत्यन्ताभावान्योन्याभावयोरभावस्यातिरिक्तत्वमते आद्यः सम्बन्धः । तस्यानतिरिक्तत्वमते तु साध्यतावच्छेदकसम्बन्धाच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगतावच्छेदकसम्बन्धेनेति विवेकः । तथा च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्ना या साध्याभावत्वावच्छिन्ना निरूपकता तादृशानिरूपकतानिरूपिता या निरवच्छिन्नाधिकरणता तदाश्रयावृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नधिकरणता तद्धर्मवत्त्वं व्याप्तिरिति लक्षणम् । अतथात्वादिति । अवृत्तित्वाभावात् वृत्तित्वादेवेति यावत् । वह्निनिरूपिता पर्वतवृत्तिरधिकरणता अयोगोलकादौ हेतुभूतवह्निनिरूपिताधिकरणता च वह्नित्वधर्मावच्छिन्नैवेति अयोगोलकनिष्ठवह्निनिरूपिताधिकरणताव्यक्तेः पर्वतादिनिष्ठवह्न्यधिकरणताव्यक्तेश्चैक्याद्वृत्तित्वमेवेति नातिव्याप्तिः । यद्धर्मावच्छिन्नेतिविशेषणदानस्येदमेव फलम् । अन्यथा उभयो-

अन्ये तु हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्न-स्वाधिकरणताश्रयवृत्ति यन्निरवच्छिन्नाधिकरणत्वं तदवृत्ति निरुक्तसाध्या-भावत्वविशिष्टनिरूपितयथोक्तसम्बन्धावच्छिन्नाधिकरणतात्वकत्वमिति विशे-षणविशेष्यभावव्यत्यासे तात्पर्यम्, स्वपदं हेतुपरम्। इत्थं च कपिसंयोगि-

रधिकरणताव्यक्त्योः स्वतो भेदस्यसत्त्वादवृत्तित्वं पर्वतनिष्ठवह्नित्वावच्छिन्नाधिकरणता-या इति तादृशवह्नित्ववत्त्वं वह्नित्वमेवेति तच्च हेतौ वर्तत इति अतिव्याप्तिः स्यात्। पर्वतो वह्निमान्धूमादित्यादौ तु निरवच्छिन्ना या वह्नयभावनिरूपिताऽधिकरणता तदाश्रयह्रदाद्यवृत्तिर्भवति संयोगसम्बन्धावच्छिन्नधूमत्वधर्मावच्छिन्नाधिकरणता धूमत्वव-त्त्वं धूमत्वमेव तच्च धूमे इति लक्षणसमन्वयः। तात्पर्यमिति। हेतुतावच्छे-दकसम्बन्धावच्छिन्ना हेतुतावच्छेदकावच्छिन्ना या स्वाधिकरणता (१)तादृशहे-त्वधिकरणताश्रयवृत्ति यन्निरवच्छिन्नाधिकरणत्वं त(२)दवृत्ति यत्साध्यतावच्छे-दकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रातियोगिताकाभावत्वावच्छिन्नसाध्याभाववृ-त्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणता ता-दृशाधिकरणतावृत्ति अधिकरणता(३)त्वं तत्कत्वं व्याप्तिः। यथा वह्निमान् धूमा-दित्यादौ हेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नधूमत्वावच्छिन्नधूमनिरूपकतानिरूपिता या पर्वतनिष्ठाधिकरणता तादृशधूमाधिकरणताश्रयपर्वतवृत्ति यन्निरवच्छिन्नाधिकर(४)णत्वं तदवृत्ति संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नवह्निनिष्ठा या प्रतियोगिता तादृशप्रतियोगि-तानिरूपकवह्नयभावत्वावच्छिन्ना या वन्ह्यभाववृत्ति वह्नयभावाभावनिरूपिता प्रतियोगि-ता तदवच्छेदकस्वरूपसम्बन्धावच्छिन्ना या निरूपकता तादृशनिरूपकतानिरूपिता याऽधि-करणता ह्रदनिष्ठा तादृशाधिकरणतावृत्ति यदधिकरणता(५)त्वं तन्निरूपकत्वस्य धूमेसत्त्वा-त्समन्वयः। कपिसंयोगाभाववान्सत्त्वादित्यादौ च समवायसम्बन्धावच्छिन्ना या सत्तात्वाव-च्छिन्नसत्तानिरूपिताधिकरणता तादृशाधिकरणताश्रयगुणादिवृत्ति यन्निरवच्छिन्नाधिकर-णत्वं तदवृत्ति स्वरूपसम्बन्धावच्छिन्ना कपिसंयोगाभावत्वावच्छिन्ना या प्रतियोगिता त-न्निरूपको यः साध्याभाव(६)स्तद्वृत्तिर्या कपिसंयोगाभावनिरूपितप्रतियोगिता तदवच्छे-दकसमवायसम्बन्धावच्छिन्ना या निरूपकता तादृशनिरूपकतानिरूपिता याऽधिकरणता अ-ग्रावच्छेदेन वृक्षनिष्ठाधिकरणता तादृशाधिकरणतावृत्ति अधिकरणतात्वं तन्निरूपकत्वं सत्त्वे इति समन्वयः। यथा घटनिरूपितभूतलनिष्ठाधिकरणत्वे पटनिरूपिताधिकरणतात्वस्य अ-वृत्तित्वं तद्वत्प्रकृतेप्यूह्यम्। धूमवान् वह्नेरित्यादौ तु नातिव्याप्तिः। संयोगसम्बन्धावच्छि-

(१) हेत्वधिकरणतेत्यर्थः।

(२) तत्पदेनाधिकरणत्वस्यग्रहः। तदवृत्तीत्यस्य अधिकरणतात्वेऽन्वयः।

(३) साध्याभावाधिकरणतात्वमितियावत्। (४) धूमनिरूपिताधिकरणत्वम्।

(५) साध्याभावाधिकरणतात्वम्। (६) कपिसंयोगाभावाभावः।

भिन्नं गुणत्वादित्यादावपि नाव्याप्तिरित्याहुरिति संक्षेपः।

लक्षणान्तरमाह—

साध्यवद्भिन्नेति। साध्यवद्भिन्नो यस्साध्याभाववान् तदवृत्तित्वमित्यर्थः। कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकेऽव्याप्तिवारणाय साध्यवद्भिन्नेति साध्याभाववतो विशेषणमिति प्राञ्चः।

तदसत्। साध्याभाववदित्यस्य व्यर्थत्वापत्तेः, साध्यवद्भिन्नावृत्तित्वमित्यस्यैव सम्यक्त्वात्।

नव्यास्तु साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमिति सप्तमीतत्पुरुषोत्तरं मतुप्प्रत्ययः। तथा च साध्यवद्भिन्नवृत्तिर्यः साध्याभावस्तद्वदवृत्तित्वमित्यर्थः। एवं च साध्यवद्भिन्नवृत्तीत्यनुक्तौ संयोगी द्रव्यत्वादित्याद्यावव्याप्तिः। संयोगाभाववति द्रव्ये द्रव्यत्वस्य वृत्तेः। तदु-

---

न्नवह्न्यधिकरणता अयोगोलकनिष्ठा तदाश्रयोऽयोगोलकं तद्वृत्तिर्या निरवच्छिन्नाधिकरणता तद्वृत्ति यद्धूमाभावाधिकरणतात्वं तन्निरूपकत्वस्यैव वह्नौ सत्त्वात्।

साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतात्ववृत्तियों हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतानिरूपितावच्छेदकतावद्धर्मनिष्ठावच्छेदकतानिरूपितनिरूपकतानिरूपिताधिकरणतावन्निरूपितवृत्तितावद्यन्निरवच्छिन्नाधिकरणत्वं तादृशाधिकरणतानिरूपितवृत्तित्वाभावस्तादृशाभावीया या वृत्तित्वनिष्ठा प्रतियोगिता तादृशप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्ननिरवच्छिन्नाधिकरणत्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिता याऽधिकरणनिष्ठावच्छेदकता तन्निरूपिता याऽधिकरणतानिष्ठावच्छेदकता तन्निरूपिता या निरूपकत्वनिष्ठावच्छेदकता तन्निरूपिता या अवच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपिता या आधेयत्वसम्बन्धावच्छिन्ना धर्मनिष्ठावच्छेदकता तन्निरूपिता या अवच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपिता याऽवच्छेदकता तादृशावच्छेदकतावती या हेतुता तद्वत्त्वं व्याप्तिरिति लक्षणम्।

इति प्रथमलक्षणव्याख्या समाप्ता।

---

संयोगाभाववति द्रव्ये इति। मूलावच्छेदेन संयोगाभाववति वृक्षे इति फलितम्। तद्वदवृत्तित्वान्नाव्याप्तिरिति। यदि तु अधिकरणभेदेनाभावो न भिद्येत तर्हि गुणादिनिष्ठसंयोगाभावो मूलावच्छेदेन कपिसंयोगाभावश्च न भिद्येत, तथा च गुणादिनिष्ठसंयोगाभावोऽपि वृक्षे तत्र द्रव्यत्वस्य वृत्तेरव्याप्तिः स्यात्। अधिकरणभेदेनाभावभेदस्वीकारे

पादाने च संयोगवद्भिन्नवृत्तिः संयोगाभावो गुणादिवृत्तिसंयोगाभाव एव अधिकरणभेदेनाभावभेदात् , तद्वद्वृत्तित्वाभावान्नाव्याप्तिः । नच तथापि साध्यवद्भिन्नावृत्तित्वमित्येवास्तु किं साध्याभाववदित्यनेनेति वाच्यम् । यथोक्तलक्षणे तस्याप्रवेशेन वैयर्थ्याभावात् । तस्यापि लक्षणान्तरत्वात् । न च तथापि साध्यवद्भिन्नवृत्तिर्यस्तद्वदवृत्तित्वमेवास्तु किं साध्याभावपदेनेति वाच्यम् तादृशद्रव्यत्वादिमद्वृत्तित्वादसम्भवापत्तेः । साध्याभावेत्यत्र साध्यपदमप्यत एव, द्रव्यत्वादेरपि द्रव्यत्वाभावाभावत्वाद्भावरूपाभावस्य चाधिकरणभेदेन भेदाभावात् ।

ननु तथापि घटाकाशसंयोगघटत्वान्यतराभाववान् गगनत्वादित्यत्र

---

तु गुणादिवृत्तिसंयोगाभावो हि गुणे एव न तु द्रव्ये इति गुणादिनिष्ठसंयोगाभाववति गुणादौ द्रव्यत्वहेतोरवृत्तेरव्याप्तिर्नास्तीति भावः ।

तथापीति । अधिकरणभेदेनाभावभेदस्वीकारेऽपि । किं साध्याभाववदित्यनेनेति । पर्वतो वह्निमानित्यादौ वह्निमत्पर्वतादिभिन्नजलह्रदादिनिरूपितवृत्तित्वाभावस्य धूमे सत्त्वाल्लक्षणसमन्वयः । धूमवान् वन्हेरित्यादौ च धूमवत्पर्वतादिभिन्नायोगोलकनिरूपितवृत्तित्वस्यैव वन्हौ सत्त्वान्नातिव्याप्तिरिति भावः । तस्येति । साध्यवद्भिन्नावृत्तित्वस्य । तथापीति । यथोक्तलक्षणे तस्य प्रवेशस्वीकारेऽपि । असम्भवापत्तेरिति । वह्निमद्भिन्नजलह्रदादेर्वृत्तिर्यो द्रव्यत्वादिस्तद्वान्यः पर्वतस्तन्निरूपितवृत्तित्वस्यैव धूमादौसत्त्वादेव सद्धेतुस्थले लक्षणस्य प्राप्तिरेव नास्तीत्यर्थः । साध्याभावपदोपादाने तु नासम्भवः, कुतः, वह्निमत्पर्वतभिन्नह्रदादिवृत्तिर्यः साध्याभावो वह्न्यभावस्तद्वान् ह्रद एव तन्निरूपितवृत्तित्वाभावस्य धूमे सत्त्वाल्लक्षणसमन्वयात् । एतदर्थमेवेति । असम्भववारणार्थमेवेत्यर्थः । असम्भवमुपपादयति, द्रव्यत्वादेरपीत्यादीना । साध्यपदं विहाय अभावपदमात्रोपादाने तु साध्यवत्पर्वतादिभिन्नह्रदादिवृत्तिर्योऽभावो द्रव्यत्वाभावाभावपदबोध्यद्रव्यत्वरूपस्तद्वान् पर्वतोऽपि तन्निरूपितवृत्तित्वस्यैव धूमे सत्त्वादसम्भवः स्यात् । साध्यपदोपादाने तु ह्रदादिवृत्तिर्यः साध्याभावो वह्न्यभावस्तद्वान् ह्रद एव तन्निरूपित वृत्तित्वाभावस्य धूमे सत्वान्नासम्भवशङ्का । ननु भावरूपाभावस्याधिकरणभेदेन भेदाभ्युपगमे प्रकृते नासम्भवः कथम् द्रव्यत्वरूपद्रव्यत्वाभावाभावस्याधिकरणं ह्रद एव न तु पर्वतादि तत्र च ह्रदे धूमस्यावृत्तेः सत्त्वादित्याशङ्क्याह । भावरूपाभावस्येति । भेदाभावादिति । एवं च तादृशपदबोध्यद्रव्यत्वस्याधिकरणं यथा ह्रदादिस्तथा पर्वतादिरपि तन्निरूपितवृत्तित्वस्यैव धूमादौ सत्त्वादसम्भव इति भावः ॥ तथापि इति । भेदाभावस्वीकारेऽपि ।

ननु घटाधिकरणदेशावच्छेदेन घटसंयोगस्य गगने सत्त्वं तथा च तत्र घटाकाशसंयोग-

घटानधिकरणदेशावच्छेदेन घटाकाशसंयोगाभावस्य गगने सत्त्वात्सद्धेतुत्वादव्याप्तिः। साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य घटाकाशसंयोगघटत्वान्यतरस्वरूपस्य गगनेऽपि सत्त्वात्तत्र च हेतोर्वृत्तेः। न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववत्त्वं विवक्षितमिति वाच्यम्। साध्याभावपदवैयर्थ्यापत्तेः। साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैवसम्यक्त्वादिति चेन्न। अभावाभावस्यातिरिक्तत्वमतेनैतल्लक्षणकरणात्। तथा चाधिकरणभेदेनाभावभेदात्साध्यवद्भिन्ने घटे वर्तमानस्य साध्याभावस्य प्रतियोगिव्यधिकरणस्य प्रतियोगिमति गगनेऽसत्त्वादव्याप्तेरभावात्। न चैवं साध्याभावेत्यत्र साध्यपदवैयर्थ्यं, अभावाभावस्यातिरिक्तत्वेन द्रव्यत्वादेरभावत्वाभावात्साध्यवद्भिन्नवृत्तिघटाभावादेस्तु हेतुमत्यसत्त्वादधिकरणभेदेनाभावभेदादिति वाच्यम्। यत्र प्रतियोगिसमानाधिकरणत्वप्रतियोगिव्य-

---

घटत्वान्यतराभावरूपसाध्यस्यासत्त्वेनासद्धेतुत्वं स्यादित्याशङ्क्याह। घटानधिकरणेत्यादि। घटे इति। घटाकाशसंयोगघटत्वान्यतराभावरूपसाध्यवत् पटादि तद्भिन्ने घटे। विवक्षितमिति। यथा विशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणता विशिष्टसत्तावति द्रव्ये एव न तु शुद्धसत्तावति गुणादौ, तथा साध्यवद्भिन्नघटादिनिरूपितवृत्तितावतो घटाकाशसंयोगरूपस्य साध्यभावस्य घटे एव सत्त्वं न तु गगनेऽपीति नाव्याप्तिरिति भावः। अभावाभावस्यातिरिक्तत्वमतेनेति। एवञ्च घटत्वघटाकाशसंयोगान्यतराभावाभावो हि न घटाकाशसंयोगरूपोऽपितु तादृशसंयोगाधिकरणे तादृशसंयोगान्यतराभावरूपप्रतियोग्यनधिकरणे घटादौ वर्त्तमानोऽतिरिक्तस्तत्र च गगनत्वस्य हेतोरवृत्तेर्नाव्याप्तिरित्यर्थः। तथाचेति। अभावाभावस्यातिरिक्तत्वस्वीकारे चेत्यर्थः॥ साध्याभावस्येति। घटाकाशसंयोगघटत्वान्यतराभावाभावस्य घटकाशसंयोगातिरिक्तस्य। प्रतियोगिमतीति। घटानधिकरणदेशावच्छेदेन घटाकाशसंयोगघटत्वान्यतराभावरूपप्रतियोगिमति इत्यर्थः। घटानधिकरणदेशावच्छेदेन तादृशान्यतराभावो गगने वर्तते। गगने असत्त्वादिति। तस्य घटे एव सत्त्वं घटे च गगनत्वहेतोरसत्त्वाल्लक्षणसमन्वय इत्यर्थः। यदि तु अधिकरणभेदेनाभावो न भिद्येत तर्हि घटे विद्यमानस्य साध्याभावस्य घटाधिकरणदेशावच्छेदेन गगने विद्यमानस्य साध्याभावस्य चैक्यात्तदधिकरणं यथा घटस्तथा गगनमपीति गगने च गगनत्वस्य वृत्तेरव्याप्तिः स्यादिति ध्येयम्।

हेतुमत्यसत्त्वादिति। ह्रदवृत्तिघटत्वाभावो ह्रदे एव न तु धूमवति पर्वते यदि तु अधिकरणभेदेऽपि अभावभेदो नस्यात्तदातु ह्रदवृत्तिघटत्वाभावाधिकरणं यथा ह्रदस्तथा पर्वतोऽपि पर्वतेऽपि घटत्वाभावस्य सत्त्वात्। तादृशाभावस्य चैक्यात् तत्र च पर्वते धूम-

धिकरणत्वलक्षणविरुद्धधर्माध्यासस्तत्रैवाधिकरणभेदेनाभावभेदाभ्युपगमो न तु सर्वत्र । तथा च साध्यवद्भिन्नवृत्तिघटाभावादेर्हेतुमत्यपि सत्त्वादसम्भववारणाय साध्यपदोपादानात् ।

यद्वा घटत्वघटाकाशसंयोगान्यतराभावाभावोऽतिरिक्त एव घटाकाशसंयोगघटत्वादीनामननुगततया तथात्वस्य वक्तुमशक्यत्वात् । घटत्वद्रव्यत्वाद्यभावाभावस्तु नातिरिक्तः, घटत्वद्रव्यत्वादीनामप्यनुगतत्वात् । तथा च द्रव्यत्वादिकमादायासम्भववारणायैव साध्यपदमित्यन्यत्र विस्तरः ॥

साध्यवत्प्रतियोगिकान्योन्याभावेति । हेतौ साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणवृत्तित्वाभाव इत्यर्थः । अन्योन्याभावश्च प्रतियोग्यवृत्तित्वेन विशेषणीयः, तेन साध्यवतो व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तावपि नासम्भवः । नन्वेवमपि नानाधिकरणसाध्यके वन्हिमान्धूमादित्यादौ साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तेरव्याप्तिर्दुर्वारा । प्रतियोग्यवृत्तित्वम-

---

स्य सत्त्वादव्याप्तिः स्यात्; अधिकरणभेदेनाभावभेदाभ्युपगमे तु ह्रदवृत्तिघटत्वाभावाधिकरणं ह्रद एव तत्र च धूमस्यासत्त्वान्नाव्याप्तिरिति भावः । अध्यास इति । ज्ञानमित्यर्थः ॥ कपिसंयोगाभावे अव्याप्यवृत्तिरूपे एव अधिकरणभेदेनाभावभेदाभ्युपगमोऽस्ति । साध्यपदोपादानमिति । तादृशघटाभावादेरधिकरणभेदेन भेदानभ्युपगमेन तादृशाभावस्य हेतुमति अपि सत्त्वेन तत्र च धूमहेतोर्वृत्तित्वादव्याप्तिः स्यात् । साध्यपदोपादाने तु ह्रदादिवृत्तिवह्न्यभावाधिकरणं ह्रदस्तत्र धूमस्यावृत्तेर्नाव्याप्तिरित्यर्थः ॥ अननुगततयेति । घटाकाशसंयोगस्य घटत्वस्य च अन्यतरत्वेन प्रवेशः अन्यतरत्वस्य च तदभिन्नरूपत्वान्न तस्यानुगमकः कश्चिदस्तीति भावः ।

इति द्वितीयलक्षणव्याख्या ।

---

हेतोर्वृत्तावपि नासम्भव इति । तादृशविशेषणानुपादाने तु वह्निमद्घटोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य वह्निमति पर्वते सत्त्वेन तत्र च हेतोर्धूमस्यवृत्तित्वेनासम्भव एव स्यात्, तदुपादाने तु तादृशव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावस्तु प्रतियोगिन्यपि घटे पर्वते च वर्तत इति न तादृशान्योन्याभावोऽत्र विवक्ष्यते अपि तु वह्निमान्नेत्याकारक एव स च न प्रतियोगिनि पर्वते वर्तते किन्तु तद्भिन्ने ह्रदादावेव तत्र च धूमस्यावृत्तेर्नासम्भव इति ध्येयम् । नाना महानसचत्वरपर्वतगोष्ठादीनि अधिकरणानि यस्य साध्यस्य सनानाधिकरणकसाध्यकः ॥ तत्तद्व्यक्तित्वेति । महानसीयव्यक्तित्वेत्यर्थः । पञ्च-

पहाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावविवक्षणे तु पञ्चमेन सह पौनरुक्त्यमिति चेन्न। वक्ष्यमाणकेवलान्वय्यव्याप्तिवदस्याप्यत्र दोषत्वात्। न च तथापि साध्यवत्प्रतियोगिकान्योन्याभावमात्रस्यैवैतल्लक्षणघटकत्वे वक्ष्यमाणकेवलान्वय्यव्याप्तिरत्रासङ्गता केवलान्वयिसाध्यकेऽपि साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नान्योन्याभावस्य प्रसिद्धत्वादिति वाच्यम्। तत्राऽपि तादृशान्योन्याभावस्य प्रसिद्धत्वेऽपि तद्वति हेतोर्वृत्तेरेवाऽव्याप्तेर्दुर्वारत्वात्।

यद्वा साध्यवत्प्रतियोगिकान्योन्याभावपदेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाव एव विवक्षितः। न चैवं पञ्चमाभेदः, तत्र साध्यवत्त्वावच्छिन्नप्रतियोगिकान्योन्याभाववत्त्वेन प्रवेशः। अत्र तु तादृशाधिकरणत्वेनेति अधिकरणत्वप्रवेशाप्रवेशाभ्यामेव भेदात्। अखण्डाभावघटकतया च नाधिकरणत्वांशस्यात्र वैयर्थ्यमिति न कोऽपि दोष इति दिक्।

सकलेति। साकल्यं साध्याभाववतो विशेषणम्। तथा च यावन्ति साध्याभावाधिकरणानि तन्निष्ठाभावप्रतियोगित्वं हेतोर्व्याप्तिरित्यर्थः। धूमाद्यभाववद्ह्रदादिनिष्ठाभावप्रतियोगित्वाद्वह्न्यादेरतिव्याप्तिरिति यावदिति साध्याभाववतो विशेषणम्। साध्याभावविशेषणत्वे तत्तद्ह्रदावृत्तित्वादिरूपेण यो वह्न्यभावस्तस्यापि सकलसाध्याभावमध्यप्रवेशात्तावदधिकरणाप्रसिद्ध्याऽ

---

मेन सह पौनरुक्त्यमिति। वह्निमत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणत्वस्य पर्वतादीनामभावात्तादृशान्योन्याभावाधिकरणत्वस्य ह्रदादावेव सत्त्वात्तत्र च धूमस्यावृत्तित्वेनाव्याप्तिस्तु निरस्तैव॥ तत्तद्व्यक्तित्वावच्छिन्नान्योन्याभावस्येति। वाच्यत्ववद्घटत्वव्यक्तित्वावच्छिप्रतियोगिताकभेदस्य पटादौ प्रसिद्धेरित्यर्थः। अखण्डाभावघटकतया च नाधिकरणत्वांशस्य वैयर्थ्यमिति। (१)अखण्डपदं न खण्डमखण्डमिति यौगिकं न; अपि तु पारिभाषिकम्। न चाधिकरणत्वप्रवेशे फलाभावात् पौनरुक्त्यमिति वाच्यम्। अनेकैव व्याप्तिरितिसिद्धान्तात् काचित् तत्प्रवेशयुक्तापि अस्त्येवेति तात्पर्यम्।

इति तृतीयलक्षणव्याख्या।

---

(१) अयम्भावः साध्यवदन्यावृत्तित्वमितिलक्षणे अन्योन्याभावनिष्ठावच्छेदकता अधिकरणनिष्ठावच्छेदकतानिरूपिता एतल्लक्षणे तु आधेयतानिष्ठावच्छेदकतानिरूपिता सा च अधिकरणतानिष्ठावच्छेदकतानिरूपिता इदमेवानयोर्वैलक्षण्यम्।

सम्भवापत्तेः । न च द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभाववति गुणादौ सत्तादेर्वि-शिष्टाभावादिसत्त्वादतिव्याप्तिरिति वाच्यम् । तादृशाभावप्रतियोगितावच्छे-दकहेतुतावच्छेदकवत्त्वस्यैव विवक्षितत्वात् । प्रतियोगिता च हेतुतावच्छे-दकसम्बन्धेन विवक्षणीया । तेन द्रव्यत्वाद्यभाववति गुणादौ सत्त्वादेः सं-योगादिसम्बन्धावच्छिन्नाभावसत्त्वेऽपि नातिव्याप्तिः । साध्याभावश्च साध्य-तावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बो-ध्यः । अन्यथा पर्वतादेरपि वह्न्यादेर्विशिष्टाभावादिमत्त्वेन समवायादिस-म्बन्धावच्छिन्नवह्न्यादिसामान्याभाववत्त्वेन च यावदन्तर्गततया तन्निष्ठाभा-वप्रतियोगित्वाभावाद्धूमस्यासम्भवात् । न च कपिसंयोग्येतद्वृक्षत्वादि-त्यादौ वृक्षस्यापि तादृशसाध्याभाववत्त्वेन यावदन्तर्गततया तन्निष्ठाभाव-प्रतियोगित्वाभावादेतद्वृक्षत्वस्याव्याप्तिरिति वाच्यम् । किंचिदनवच्छि-न्नायास्साध्याभावाधिकरणताया इह विवक्षितत्वात् । इत्थं च किंचिदनव-च्छिन्नायाः कपिसंयोगाभावाधिकरणताया गुणादावेव सत्त्वात्तत्र हेतोरप्य-भावसत्त्वान्नाव्याप्तिः । न च कपिसंयोगाभाववान्सत्त्वादित्यादौ साध्याभा-वस्य कपिसंयोगादेर्निरवच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवास्य दोषस्य वक्ष्यमाणत्वात् । न च पृथिवी कपिसंयोगादित्यादौ पृथिवीत्वाभाववति यावत्येव कपिसंयोगा-

---

सत्त्वादेर्विशिष्टसत्ताभावेति । अयम्भावः, द्रव्यत्वाभावधिकरणगुणादेः शुद्धसत्ताधि रणत्वेऽपि विशिष्टसत्तानाधिकरणत्वेन तस्यामभवीयप्रतियोगित्वस्य सत्त्वे शुद्धसत्तायामपि सत्त्वादतिव्याप्तिः स्यात्तद्वारणाय तादृशविवक्षायान्तु विशिष्टसत्तात्वस्य तादृशाभावप्रतियो गितावच्छेदकत्वेऽपि हेतुतावच्छेदकीभूतशुद्धसत्तात्वस्य तादृशप्रतियोगितावच्छेदकत्वाभावेन नातिव्याप्तिरिति बोध्यम् । गुणादावेव सत्त्वादिति । अत्रेदम्वक्तव्यम् , ये तु अधिकरण-भेदेनाभावभेदे गौरवान्नतद्भेदेनाभावो भिन्न इति मन्यन्ते तेषां मते वृक्षे अवच्छेदकभेदेन संयोगस्य संयोगाभावस्य च समानाधिकरण्यसम्भवेन विरोधाभावेऽपि गुणादौ निर-वच्छिन्नत्वेन विद्यमानस्य संयोगाभावस्य सावच्छिन्नत्वेन वृक्षे विद्यमानस्य तस्यैक्याद्गु-णादावपि संयोगाभावस्य सावच्छिन्नत्वमेव प्राप्तम्, ऐक्यपक्षे प्रत्युत वृक्षेऽपि साध्याभावा-धिकरणताया निरवच्छिन्नत्वमेवस्यादिति तन्मते कथमेष ग्रन्थो योजनीय इति चेत्तेषाम-यमाशयः । तथाहि व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोरपि अव्याप्यवृत्तित्वं स्वीकार्यम् । अव्या-

भावसत्त्वादतिव्याप्तिरिति वाच्यम् । तन्निष्ठपदेन तत्र निरवच्छिन्नवृत्तिमत्त्वस्य विवक्षितत्वात् । इत्थं च पृथिवीत्वाभावाधिकरणे जलादौ यावदन्तर्गते निरवच्छिन्नवृत्तिमानभावो न कपिसंयोगाभावः किं तु घटत्वाद्यभाव एव तत्प्रतियोगित्वस्य हेतावसत्त्वान्नातिव्याप्तिः । न चैवमन्योन्याभावस्य व्याप्यवृत्तितानियमनये द्रव्यत्वाभाववान् संयोगवद्भिन्नत्वादित्यादेरपि सद्धेतुतयाऽव्याप्तिः संयोगवद्भिन्नत्वाभावस्य संयोगरूपस्य निरवच्छिन्नवृत्तेरप्रसिद्धेरिति वाच्यम् । अन्योन्याभावस्य व्याप्यवृत्तितानियमनयेऽन्योन्याभावस्याभावो न प्रतियोगितावच्छेदकरूपः किन्त्वतिरिक्तो व्याप्यवृत्तिरन्यथा मूलावच्छेदेन कपिसंयोगिभेदाभावभानानुपपत्तेरिति संयोगवद्भिन्नत्वाभावस्यापि निरवच्छिन्नवृत्तिमत्त्वात् ।

वस्तुतस्तु सकलपदमत्राशेषपरं नत्वनेकपरम् एतद्घटत्वाभाववान्पटत्वादित्याद्येकव्यक्तिविपक्षके साध्याभावाधिकरणस्य यावत्त्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः । तथा च किंचिदनवच्छिन्नाया निरुक्तसाध्याभावाधिकरणताया व्यापकीभूतो योऽभावः हेतुतावच्छेदकसम्बन्धावच्छिन्नतत्प्रतियोगिता-

---

प्यवृत्तिपदार्थस्य च नासामानाधिकरण्यम् । यथावच्छेदकभेदेन संयोगस्य तदभावस्य च वृक्षवृत्तित्वम् । गुणादिवृत्तित्वेन संयोगाभावस्य व्याप्यवृत्तित्वं वृक्षवृत्तित्वेन चाव्याप्यवृत्तित्वम् एवं च गुणादिवृत्तिकपिसंयोगाभावाधिकरणताया अभावैक्यवादिनयेऽपि व्याप्यवृत्तित्वस्य सुवचत्वाद्ग्रन्थः सुयोजनीय एव अवच्छेदकभेदेनैवाभावभेदस्वीकारादिति भावः ।

हेतावसत्त्वादिति । घटत्वे एव सत्त्वादित्यर्थः । अन्योन्याभावस्याव्याप्यवृत्तित्वनये तु न अस्य सद्धेतुत्वम् । संयोगवद्भिन्नत्वस्य उत्पत्तिकालावच्छेदेन द्रव्येऽपि सत्त्वेन तत्र च द्रव्यत्वाभावस्य दुर्घटत्वात् । अन्यथेति । अनतिरिक्तत्वे प्रतियोगितावच्छेदकरूपत्वे । अत्रेदं ध्येयम् , यद्भेदस्य योऽव्याप्यवृत्तित्वं स्वीकरोति तदभावस्यातिरिक्तत्वमपि स्वीकरोति, यथा कपिसंयोगिभेदस्य व्याप्यवृत्तित्वं तदभावस्यातिरिक्तत्वम् । अतिरिक्तत्वे तु शाखायां वृक्षे न कपिसंयोगिभेद इति प्रतीतेर्यथा प्रामाण्यं तथा मूले वृक्षे न कपिसंयोगिभेद इति प्रतीतेश्च प्रामाण्यम् । यदि कपिसंयोगिभेदाभावस्य कपिसंयोगरूपत्वं तदा तस्य मूलावच्छेद्यत्वासम्भवेन मूले वृक्षे न कपिसंयोगिभेद इति प्रतीतेरप्रामाण्यं स्यादिति ।

अशेषपरमिति । व्यापकत्वपरमित्यर्थः । एकव्यक्तिविपक्षे इति । अत्र निश्चितैतद्घटत्वाभावाभावरूपसाध्याभावः एतद्घटत्वव्यक्तिरूप एव तस्याधिकरणन्तु एकव्यक्तिरे-

वच्छेदकहेतुतावच्छेदकवत्त्वं लक्षणार्थः । न च सत्तादिसामान्याभावस्या-
पि प्रमेयत्वादिना निरुक्तसाध्याभावाधिकरणताव्यापकत्वाद्द्रव्यं सत्त्वादि-
त्यादावतिव्याप्तिः । तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्याप-
कत्वमित्युक्तौ तु निर्धूमत्ववान् निर्वह्नित्वादित्यादावव्याप्तिः । निर्वह्नित्वा-

वेति साध्याभावाधिकरणमत्रानेकमप्रसिद्धमित्यर्थः । लक्षणार्थ इति । साध्यतावच्छे-
दकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्ना या निरवच्छिन्नसाध्याभावाधिकरणता
तस्या व्यापकीभूतो योऽभावस्तन्निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्ना प्रति-
योगिता तदवच्छेदकं यद्धेतुतावच्छेदकं तद्वत्त्वमित्यर्थः । वह्निमान् धूमादित्यादौ वन्ह्य-
भावाधिकरणता ह्रदादिनिष्ठा तद्व्यापकीभूताभावश्च धूमाभावस्तत्प्रतियोगिता च धूमे तद-
वच्छेदकत्वं च धूमत्वे हेतुतावच्छेदकत्वं च तत्रैव तद्वत्त्वं धूमस्येति समन्वयः । एतद्-
घटत्वाभाववान् पटत्वादित्यादौ चैतद्घटत्वाभावाभावबोध्यैतद्घटत्वस्याधिकरणता एतद्-
घटनिष्ठा तद्व्यापकीभूताभावः पटत्वाभावस्तत्प्रतियोगिता च पटत्वे तदवच्छेदकत्वं च
पटत्वत्वे हेतुतावच्छेदकत्वमपि तत्रैव तद्वत्त्वं पटत्वे इति समन्वयः । तादृशाधि-
करणताव्यापकत्वं चाभावे तादृशाधिकरणतावन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदक-
धर्मवत्त्वमेव यथा वह्न्यभावाधिकरणतावद्ह्रदादिनिष्ठात्यन्ताभावश्च घटाभावो न तु
धूमाभावाभावस्तत्प्रतियोगितावच्छेदकधर्मश्च घटत्वं अनवच्छेदकधर्मश्च धूमाभावत्वं
तद्वत्त्वं धूमाभावस्येति तस्य व्यापकत्वम् । धूमवान् वह्नेरित्यादौ तु अयोगोलकनिष्ठ-
धूमाभावाधिकरणतावदयोगोलकनिष्ठात्यन्ताभावो न वह्न्यभावः किन्तु वह्न्यभावा-
भावस्तत्प्रयोगितावच्छेदकधर्म एव वह्न्यभावत्वं न तु तदनवच्छेदकधर्मवत्त्वं वह्न्य-
भावस्येति तस्य न साध्याभावाधिकरणताव्यापकत्वमिति न तादृशाभावीयप्रतियोगि-
तावच्छेदकहेतुतावच्छेदकवत्त्वं वह्नेरिति नातिव्याप्तिः । निरुक्तसाध्याभावाधिकरण-
ताव्यापकत्वादिति । द्रव्यत्वाभावाधिकरणतागुणादिनिष्ठा तस्या व्यापकीभूतो योऽभावः
सत्त्वादिसामान्याभावः कुतः तादृशाधिकरणतावद्गुणादिनिष्ठात्यन्ताभावश्च न प्रमेया-
भावः किन्तुअभावान्तरमेव तत्प्रतियोगितानवच्छेदकप्रमेयत्वात्मकधर्मवत्त्वस्य सत्तादिसा-
मान्याभावे विद्यमानत्वात्तस्य व्यापकत्वं तादृशाभावनिरूपिता च समवायसम्बन्धावच्छि-
न्ना प्रतियोगिता सत्तानिष्ठा तदवच्छेदकं यद्धेतुतावच्छेदकं सत्तात्त्वं तद्वत्त्वं सत्ताया इति
अतिव्याप्तिः स्यादित्यर्थः । व्यापकत्वमित्युक्ताविति । प्रकृते नातिव्याप्तिरिति शेषः ।
द्रव्यत्वाभावाधिकरणतावद्गुणादिनिष्ठो यो भेदस्स च सत्ताभाववान्नेत्याकारको भेदस्तत्प्र
तियोगितावच्छेदकत्वमेव सत्ताऽभावे तदनवच्छेदकत्वविरहादतो न सत्ताभावस्य त-
द्व्यापकत्वमिति न तत्रातिव्याप्तिः । निर्धूमत्ववानिति । धूमाभावः साध्यः वह्न्यभावो हे-
तुः । निर्धूमत्वाभावाधिकरणतावदिति । धूमाधिकरणतावत्पर्वतनिष्ठो यो महानसीयवह्नि-
मान्नेत्याकारकभेदस्तत्प्रतियोगिता च महानसनिष्ठा तदवच्छेदकत्वमेव महानसीयवह्नि-

## साध्यवदन्यावृत्तित्वं वा ।

भावानां वह्निव्यक्तीनां सर्वासामेव चालनीयन्यायेन निर्धूमत्वाभावाधिकरणतावन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । तादृशाधिकरणताव्यापकतावच्छेदकं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात् । व्यापकतावच्छेदकत्वं तु तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वं नतु तद्वन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानच्छेदकत्वं तद्वति निरवच्छिन्नवृत्तिमान्योऽभावस्तत्प्रतियोगितानवच्छेदकत्वं वा प्रकृते व्यापकतायां प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्नवृत्तित्वस्य वा प्रवेशे प्रयोजनविरहात् । तेन पृथिवी कपिसंयोगादित्यादौ नातिव्याप्तिः । कपिसंयोगाभावत्वस्य निरुक्तव्यापकतानवच्छेदकत्वादित्येव परमार्थः ।

साध्यवदन्येति । अत्रापि प्रथमलक्षणोक्तरीत्या हेतौ साध्यवदन्यवृ-

---

व्यक्ताविति तादृशाधिकरणताव्यापकत्वं न निर्वन्हित्वाभावस्येति अव्याप्तिः स्यादित्यर्थः । विवक्षितत्वादिति । पर्वतनिष्ठधूमाधिकरणताव्यापकतावच्छेदकं च हेतुतावच्छेदकस्वरूपसम्बन्धावच्छिन्नवन्ह्यभावत्वधर्मावच्छिन्नवन्ह्यभावनिष्ठप्रतियोगितानिरूपकवन्ह्यभावाभावत्वं तद्धर्मवत्त्वं वन्ह्यभावस्य हेतोरिति समन्वयः । तादृशाभावाधिकरणतावत्पर्वतनिष्ठात्यन्ताभावश्च घटाद्यभावो न तु वन्ह्यभावाभावाभावः पर्वते वन्ह्यभावस्य असत्त्वात् तत्प्रतियोगितावच्छेदकत्वं घटत्वे अनवच्छेदकत्वं वन्ह्यभावाभावत्वस्येति तस्य व्यापकतावच्छेदकत्वं सिद्धम् । तेनेति । एतादृशव्यापकतावच्छेदकत्वस्वीकारेण । व्यापकतावच्छेदकत्वविरहादिति । पृथिवीत्वाभाववज्जलादिनिष्ठात्यन्ताभावश्च एकदेशावच्छेदेन कपिसंयोगाभावाभावस्तत्प्रतियोगितावच्छेदकत्वमेव कपिसंयोगाभावत्वस्येति साध्याभावाधिकरणताव्यापकतावच्छेदकत्वं नास्तीति भावः । यदि तु प्रतियोगिव्यधिकरणेत्यादिरूपं तद्गृह्यते तर्हि साध्याभावाधिकरणतावज्जलादिनिष्ठो यः प्रतियोगिव्यधिकरणाभावो न कपिसंयोगाभावो नापि कपिसंयोगाभावाभावः किन्तु घटाद्यभावस्तत् प्रतियोगितावच्छेदकत्वं घटत्वे अनवच्छेदकत्वं कपिसंयोगाभावत्वे तथा पृथ्वीत्वाभाववति जलादौ निरवच्छिन्नवृत्तिमान् योऽभावो घटाद्यभावो न तु कपिसंयोगाभावस्तस्य सावच्छिन्नवृत्तित्वात् नापि कपिसंयोगाभावाभावः तादृशाभावप्रतियोगितावच्छेदकत्वं घटत्वे अनवच्छेदकत्वं कपिसंयोगाभावत्वे इति अतिव्याप्तिः स्यादिति बोध्यम् ।

इति चतुर्थलक्षणव्याख्या ।

---

प्रथमलक्षणोक्तरीत्येति । साध्याभावनिष्ठेत्यादिरूपेणैव वृत्तित्वाभावस्य निवेशो

केवलान्वयिन्यभावात् । इति चिंतामणिः ॥

---

त्तित्वस्याभाव इत्यर्थः । तादृशवृत्तित्वाभावश्च तादृशवृत्तित्वसामान्याभावो बोध्यः । तेन धूमवान्वह्नेरित्यादौ धूमवदन्यजलह्रदादिवृत्तित्वाभावस्य धूमवदन्यवृत्तित्वजलत्वोभयाभावस्य च हेतौ सत्त्वेऽपि नातिव्याप्तिः । साध्यवदन्यत्वं चान्योन्याभावत्वनिरूपितसाध्यवत्त्वावच्छिन्नप्रतियोगिताकाभाववत्त्वं, तेन वह्निमान् धूमादित्यादौ तत्तद्वह्निमदन्यस्मिन् धूमादेर्वृत्तावपि नाव्याप्तिर्न वा वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य स्वावच्छिन्नभिन्नभेदरूपस्याधिकरणे पर्वतादौ धूमस्य वृत्तावप्यव्याप्तिः । तस्यास्साध्यवत्त्वावच्छिन्नप्रतियोगिताया अत्यन्ताभावत्वनिरूपितत्वेनान्योन्याभावत्वनिरूपितत्वविरहात् । अन्योन्याभावत्वनिरूपितत्वं च तादात्म्यसम्बन्धावच्छिन्नत्वमेव । साध्यवत्त्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यम् । तेन वह्निमान्धूमादित्यादौ वह्निमत्त्वावच्छिन्नप्रतियोगिताकस्य समवायेन वह्निमतोऽन्योन्याभावस्याधिकरणे पर्वतादौ धूमादेर्वृत्तावपि नाव्याप्तिः । सर्वमन्यत्प्रथमलक्षणोक्तदिशाऽवसेयम् । यथा च अस्य न तृतीयलक्षणाभेदस्तथोक्तं तत्रैवेति समासः ।

सर्वाण्येव लक्षणानि केवलान्वय्यव्याप्त्या दूषयति ।

केवलान्वयिन्यभावादिति । पञ्चानामेव लक्षणानामिदं वाच्यं ज्ञेयत्वा-

---

न तु साध्याभावत्यादिरूपेणेति पूर्वमुक्तमत्रानुसन्धेयमिति भावः । तत्तद्वन्हिमदन्यस्मिन्निति । पर्वतीयवह्निमत्पर्वतभिन्नमहानसादावित्यर्थः । सर्वेषां वन्हिमतां साध्यवदन्तर्गतत्वेन तादात्म्यसम्बन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकाभाववत्त्वस्या सत्त्वान्नाव्याप्तिरित्यर्थः । स्वावच्छिन्नभिन्नभेदरूपस्येत्यस्यायमाशयः, यथा घटावच्छिन्नभिन्नभेदस्य घटानतिरिक्तत्वं तथा वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावावच्छिन्नभिन्नभेदस्य वह्निमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावानतिरिक्तत्वम् । तथा च तदभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकतया तदधिकरणं पर्वतादिकं तन्निरूपितवृत्तित्वस्यैव धूमे सत्त्वेनाव्याप्तिः । तादात्म्यसम्बन्धावच्छिन्नत्वपर्यवसितस्य अन्योन्याभावत्वनिरूपितत्वस्योपादाने च अत्यन्ताभावीयप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वस्यासत्त्वेन तादृशाभावस्य संग्रहासम्भवेन नाव्याप्तिरिति भावः । समवायेन वन्हिमत इति । वह्न्यवयवस्येत्यर्थः । धूमादेर्वृत्तावपि नाव्याप्तिरिति । साध्यतावच्छेदकसंयोगसम्बन्धेन साध्यवत्त्वं पर्वतादेरेव न तु वह्न्यवयवस्य तेन सम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदश्च वह्निमान्नेत्याकारकस्तदधिकरणं न पर्वतादि किन्तु ह्रदादि तत्र धूमस्यावृत्तेर्नाव्याप्तिरित्यर्थः । तत्रैवोक्तमिति । अधिकरणत्वप्रवेशाप्रवेशाभ्यामनयोर्भेदोपपादनमुक्त-

दित्यादिव्याप्यवृत्तिकेवलान्वयिसाध्यके द्वितीयादिलक्षणचतुष्टयस्य तु कपिसंयोगाभाववान्सत्त्वादित्याद्यव्याप्यवृत्तिकेवलान्वयिसाध्यकेऽपि चाभावादित्यर्थः। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावस्य साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य चाप्रसिद्धत्वात्, कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याभाववत्त्वस्याप्रसिद्धत्वाच्चेति भावः। तृतीयलक्षणस्य केवलान्वयिसाध्यकासत्त्वं च तद्व्याख्यानावसर एव प्रपञ्चितम्। एतच्चोपलक्षणं, द्वितीये कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः। अधिकरणभेदेनाभावभेदे मानाभावेन कपिसंयोगवद्भिन्नवृत्तिकपिसंयोगाभावो द्रव्यवृत्तिकपिसंयोगाभाव एव तद्वद्वृत्तित्वादेतद्वृक्षत्वस्य। नच साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वं वक्तव्यम्। एवं च वृक्षस्य विशिष्टाधिकरणत्वाभावान्नाव्याप्तिरिति वाच्यम्। साध्याभावपदवैयर्थ्यापत्तेः। साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वात् सद्धेतौ हेत्वधिकरणे विशिष्टाधिकरणत्वाभावादेव असम्भवाभावात्। तृतीये साध्यवत्प्रतियोगिकान्योन्याभावमात्रस्य घटकत्वे चालनीयन्यायेनान्योन्याभावमादाय नानाधिकरणकसाध्यके वह्निमान्धूमादित्यादावव्याप्तिश्चेत्यपि बोध्यम्॥ इति व्याप्तिपञ्चकरहस्यम्।

## माथुरी पञ्चलक्षणी समाप्ता।

---

मित्यर्थः॥ व्याप्यवृत्तीति। देशकालानवच्छिन्नवृत्तितावत्त्वं तत्त्वम्, केवलान्वयित्वं च अभावाप्रतियोगित्वं वस्तुमात्रवृत्तित्वमिति यावत्। अव्याप्यवृत्तीति। तत्त्वं च देशकालावच्छिन्नवृत्तितावत्त्वम्। तत्त्वं च वस्तुविशिष्टत्वम् वैशिष्ट्यं च स्वतादात्म्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वोभयसम्बन्धेन स्वतादात्म्योपादानात् द्रव्यत्वे गुणत्वात्मकवस्तुविशिष्टत्वसत्त्वेऽपि न द्रव्यत्वस्याव्याप्यवृत्तित्वम् गुणत्वतादात्म्यविरहात् स्वस्मिन् स्वतादात्म्यस्य सत्त्वेन सर्वस्याव्याप्यवृत्तित्वप्रसङ्गवारणाय द्वितीयम्। सद्धेताविति। व्याप्तिमत्त्वं सद्धेतुत्वम्, व्यभिचारिभिन्नत्वं वा, हेतुतावच्छेदकावच्छिन्नाधिकरणताव्यापकसाध्यतावच्छेदकावच्छिन्नाधिकरणताकत्वं वा, परामर्शीयमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वं हेतुत्वम्।

उमानाथविरचिता माथुरीपञ्चलक्षणीव्याख्या समाप्तिमगमत्।

विश्वनाथार्पणमस्तु।

# अथ माथुरी सिंहव्याघ्रलक्षणम् ।

## नापि साध्यासामानाधिकरण्यानधिकरणत्वम् ।

नापीति ॥ अत्र साध्यस्यासामानाधिकरण्यं न साध्याधिकरणवृत्तित्वाभावः, द्रव्यं सत्त्वादित्यादावतिव्याप्त्यापत्तेः द्रव्यत्वाधिकरणवृत्तित्वाभावानधिकरणत्वात् सत्ताया, नापि साध्यवद्भिन्नवृत्तित्वं, द्वितीयेन पौनरुक्त्यापत्तेः । किं तु साध्याधिकरणत्वाभाववद्वृत्तित्वं तदनाधिकरणत्वं च तद्वद्भिन्नत्वम्, अधिकरणत्वप्रवेशे प्रयोजनविरहात् । तथा च साध्याधिकरणत्वाभाववद्वृत्तिभिन्नत्वं हेतोरव्यभिचरितत्वमिति फलितम् । अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिवारणायाधिकरणत्वप्रवेशः । अव्याप्यवृत्तेरधिकरणता तु नाव्याप्यवृत्तिः । साध्याधिकरणत्वं च साध्यतावच्छेदकावच्छिन्नं साध्यतावच्छेदकसम्बन्धावच्छिन्नं च ग्राह्यम् । अन्यथा गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ सत्ताया एव साध्यत्वेन साध्याधिकरणत्वाभा-

---

## अथ माथुरीसिंहव्याघ्रलक्षणव्याख्या ।

द्रव्यं सत्वादित्यादावतिव्याप्त्यापत्तेरिति । गुणवृत्तिसत्ताया द्रव्यवृत्तिसत्ताऽनतिरिक्ततया साध्यतावच्छेदकीभूतद्रव्यत्वाधिकरणनिरूपितवृत्तित्वस्य सत्तायां सत्त्वेन तदभावस्य न तत्र सत्त्वं किन्तु गुणत्वादावेव तादृशाभावस्य चाधिकरणं गुणत्वादिकमेव तदनधिकरणत्वस्य सत्तायां सत्त्वादतिव्याप्तिः धूमवान्वह्नेरित्यत्र तु अयोगोलकीयवह्नौ साध्यीभूतधूमाधिकरणपर्वतादिनिरूपितवृत्तित्वाभावस्य सत्त्वात् तादृशाभावानाधिकरणत्वस्य अयोगोलकीयवह्नौ असत्वेन अतिव्याप्त्यभावात् प्रसिद्धस्थलपरित्यागः । द्वितीयेनेति । साध्यवैय्यधिकरण्यानधिकरणत्वमितिद्वितीयलक्षणेनेत्यर्थः । तत्रापि साध्यवैयधिकरण्येत्यस्य साध्यवद्भिन्नवृत्तित्वार्थकत्वादिति भावः । किन्त्विति । तथाच साध्यीभूतद्रव्यत्वाधिकरणत्वाभाववद्गुणादिनिरूपितिवृत्तित्वस्यैव सत्तायां सत्त्वेन तदनधिकरणत्वस्य तत्र अभावात् अतिव्याप्तिवारणम् वह्निमान् धूमादित्यादिसद्धेतौ साध्याधिकरणत्वाभाववज्जलादिनिरूपितवृत्तित्वानधिकरणत्वस्य धूमे सत्वेन लक्षणसमन्वयो वोध्यः । अव्याप्यवृत्तिसाध्यकसद्धेताविति । कपिसंयोगी एतद्वृक्षत्वादित्यादावित्यर्थः कपिसंयोगस्य अव्याप्यवृत्तितया वृक्षे मूलावच्छेदेन तदभावस्य सत्त्वेन तन्निरूपितवृत्तित्वस्य एतद्वृक्षत्वे सत्त्वादव्याप्तिवारणायाधिकरणत्वप्रवेशः । न चाधिकरणत्वप्रवेशेऽपि मूलावच्छेदेन कपिसंयोगाधिकरणत्वाभावस्य वृक्षे सत्त्वादव्याप्तिस्तदवस्थैवेत्यत आह । अव्याप्यवृत्तेरिति । तथाच कपिसंयोगस्य अव्याप्यवृत्तित्वेऽपि तदधिकरणताया अव्याप्यवृत्तित्वाभावेन न मूलावच्छेदेन तादृशाधिकरणत्वाभावस्य वृक्षे सत्त्वं किन्तु गुणादावेव तत्र च एतद्वृक्षत्वस्याभावान्नाव्याप्तिरिति भावः । सत्ताया एव साध्यत्वेनेति ।

वत्सामान्याद्येव तदवृत्तित्वाज्जातेरतिव्याप्तिः स्यात्, स्याच्च समवायेन-वन्ह्यादौ साध्ये संयोगेन धूमादिहेतावतिव्याप्तिः। वन्ह्यधिकरणत्वाभाववज्जलह्रदाद्येव तदवृत्तित्वाद्धूमादेः। इत्थं च साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्नसाध्याधिकरणत्वाभाववद्गुणादि तद्वृत्तित्वाज्जातेः साध्यतावच्छेदकसमवायसन्बम्धावच्छिन्नवन्ह्यधिकरणत्वाभाववत्पर्वताद्यपि धूमस्य तद्वृत्तित्वाच्च नातिव्याप्तिः। वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन बोध्या, तेन तादृशवन्ह्यधिकरणत्वाभाववति धूमावयवे समवायेन धूमस्य वृत्तावपि न क्षतिः। न चैवं सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः सत्ताधिकरणत्वाभाववति सामान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरेवाप्रसिद्धेरिति

---

विशिष्टशुद्धयोरनतिरिक्तत्वादिति भावः। अत्र यद्यपि घटवृत्तित्वविशिष्टवाच्यत्ववान् घटत्वादित्यत्र विशिष्टशुद्धयोरनतिरिक्ततया वाच्यत्वस्यैव साध्यत्वेन तदधिकरणत्वाभावस्याप्रसिद्धतया अव्याप्तिरेव सम्भवति तथापि यत्किंचिद्धर्मावच्छिन्नसाध्यनिष्ठाधेयतानिरूपिताधिकरणत्वाभाववन्निरूपितवृत्तित्ववद्भिन्नत्वस्य विवक्षणेन घटवृत्तित्वविशिष्टवाच्यत्वत्वरूपधर्ममादाय तादृशस्थले लक्षणसमन्वयसम्भवेन दोषासम्भवात् विशिष्टसत्तावान् जातेरित्यत्र तु सत्तात्वरूपयत्किंचिद्धर्मावच्छिन्नाधेयताघटितलक्षणस्य समन्वयसम्भवात् अतिव्याप्तिरिति। न च तादृशाभाववत्सामान्यनिरूपितहेतुतावच्छेदकीभूतसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम्। सत्तावान् द्रव्यत्वादित्यादावव्याप्तिवारणाय अग्रे व्यापकत्वघटितलक्षणस्यैव सिद्धान्ततया तत्र च वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वस्यानिवेशनीयतया तादृशलक्षणानुसारेणैवातिव्याप्तेर्दत्तत्वात्। केचित्तु जातेरित्यस्य जातित्वप्रकारकप्रमाविशेष्यत्वादित्यर्थः तथा च स्वरूपस्यैव हेतुतावच्छेदकसम्बन्धतया तादृशम्बन्धावच्छिन्नसामान्यादिनिरूपितवृत्तित्वप्रसिद्ध्या तत्रातिव्याप्तिस्तादृशविशेषणोपादानेऽपि सम्भवोऽस्त्येवेत्याहुः। समवायेन वह्नौ साध्ये इति। अत्र यद्यपि साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे ह्रदस्यापि कालिकादिना वह्न्यादिमत्त्वेन कथं तस्य साध्यानधिकरणत्वं तथापि जन्यमात्रस्य कालोपाधित्वानंगीकारेण तस्य साध्यानधिकरणत्वसम्भवात्। वस्तुतो यत्किंचित्सम्बन्धेन साध्याधिकरणत्वाभाववन्निरूपितवृत्तित्वानधिकरणत्वघटितलक्षणस्यैवाभिप्रेततया संयोगसम्बन्धावच्छिन्नवह्न्यधिकरणत्वाभाववद्ह्रदादिनिरूपितवृत्तित्वानधिकरणत्वस्य धूमे सत्वादतिव्याप्तिः अत एव धूमवान्वह्नेरित्यत्र यत्किंचित्सम्बन्धघटितलक्षणस्यागमनान्न तत्रातिव्याप्तिरभिहितेति। तादृशवह्न्यधिकरणत्वाभाववतीति। साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वाभाववतीत्यर्थः। न क्षतिः। नाव्याप्तिः आत्मभिन्नं घटत्वादित्यत्र साध्याधिकरणत्वाभाववति आत्मनि केनापि सम्बन्धेन घटत्वस्यावृत्तेः 'नित्येषु कालिकायोगात्' इति नियमेन कालिकसम्बन्धेनापि अवृत्तित्वात् इति भावः। वृत्तेरप्रसिद्धत्वादिति। द्रव्यगुणकर्मणामेव समवायानुयोगित्वा-

वाच्यम् । तादृशसाध्याधिकरणत्वाभावव्यापकान्योन्याभावप्रतियोगिताव-च्छेदकत्वमित्यस्य विवक्षितत्वात् । साध्याधिकरणत्वाभावसामानाधिकरण्ये-त्युक्तौ धूमवान्वह्नेरित्यादौ धूमाधिकरणत्वाभाववति जलह्रदादौ वह्निमदन्यो-न्याभावसत्त्वादतिव्याप्तिरतो व्यापकत्वानुधावनम् , अन्योन्याभावप्रतियो-गितावच्छेदकत्वं हेतुतावच्छेदकसम्बन्धावच्छिन्नं हेतुतावच्छेदकावच्छिन्नं च ग्राह्यम् । अन्यथा वह्निमान् धूमादित्यादौ वन्ह्यधिकरणत्वाभाववति धूमाव-यवे धूमवदन्योन्याभावासत्त्वादव्याप्तिः स्यात् , स्याच्च द्रव्यं जातेरित्यादौ घ-टत्वपटत्वादितत्तज्जातिमतोऽन्योन्याभावस्य द्रव्यत्वाधिकरणत्वाभावव्यापक-त्वेनातिव्याप्तिः । अव्याप्यवृत्तिमतोऽन्योन्याभावस्तु नाव्याप्यवृत्तिरिति पृथि-वी संयोगादित्याद्यव्याप्यवृत्तिहेतुकव्यभिचारिणि नातिव्याप्तिरिति संक्षेपः ॥

इति प्रथमलक्षणम् ॥

---

दिति भावः । विवक्षितत्वादिति । तथा च सत्ताभावाधिकरणतावत्सामान्यनिष्ठाभावो न द्रव्यत्ववद्भेदाभावः किन्तु अभावान्तरमेव तत्प्रतियोगितानवच्छेदकधर्मवत्त्वस्य द्रव्यत्व वद्भेदे सत्वात् तादृशभेदप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वे सत्त्वान्नाव्याप्तिः । अत्र व्याप-कत्वं न तादृशाभावप्रतियोगितानवच्छेदकधर्मवत्त्वं पूर्ववत् द्रव्यं सत्वादित्यादावतिव्या-प्त्यापत्तेः नापि अन्योन्याभावघटितं निर्धूमत्ववान् वह्निमद्भिन्नत्वादित्यादावव्याप्त्यापत्तेः किं तु तादृशात्यन्ताभावप्रतियोगितानवच्छेदकं यद्धर्मावच्छिन्नावच्छेदकताकप्रतियो-गिताकान्योन्याभावत्वं तद्धर्मवत्त्वं विवक्षणीयम् तथा च न कोऽपि दोषः । अतो व्यापकत्वानुधावनमिति । तथा च वन्हिमदन्योन्याभावत्वस्य साध्याभावसमाना-धिकरणवृत्तित्वेऽपि साध्याभावाधिकरणतावन्निष्ठाभावप्रतियोगितानवच्छेदकत्वाभावान्नाति-व्याप्तिः साध्याभावाधिकरणताया अयोगोलकादावपि सत्त्वेन तन्निष्ठाभावप्रतियोगिताव-च्छेदकत्वस्यैव वन्हिमदन्योन्याभावत्वे सत्त्वात् । धूमवदन्योन्याभावासत्त्वादिति । धूमा-वयवे समवायेन धूमस्य सत्त्वात् इति भावः । द्रव्यं जातेरित्यादाविति । हेतुतावच्छेदकस्य इतरवारकपर्याप्तिनिवेशेनैव ( हेतुतावच्छेदकेतरानवच्छिन्नत्वनिवेशेन ) धूमवान्वन्हेरि-त्यत्र तत्तद्वन्हिमदन्योन्याभावमादायातिव्याप्तेर्वारणसम्भवात् अप्रसिद्धसाध्यकस्थला-नुधावनं तथा च घटान्योन्याभावीयप्रतियोगितावच्छेदकताया निरवच्छिन्नत्वेन हेतुता-वच्छेदकेतरानवच्छिन्नत्वसत्त्वादतिव्याप्तिरस्त्येवेति । अव्याप्यवृत्तीति । तस्याव्याप्यवृत्ति-त्वाङ्गीकारे तु प्रतियोगिव्यधिकरणसाध्याभाववन्निष्ठाभावीयप्रतियोगितानवच्छेदकत्वस्य कापेसंयोगिभेदत्वे सत्त्वेन अतिव्याप्तिः स्यादिति भावः । संक्षेप इति । प्रतियोगिवैय्यधि-करण्याघटितव्यापकत्वांगीकारे तस्याव्याप्यवृत्तित्वाभ्युपगमेऽपि न क्षतिरिति सूचितम् ।

इति प्रथमलक्षणव्याख्या ।

साध्यवैयधिकरण्यानधिकरणत्वं वा ।
तदुभयमपि साध्यानधिकरणानधिकरणत्वं तच्च तत्र

---

साध्यवैयधिकरण्यमिति । साध्यवैयधिकरण्यं साध्यवद्भिन्नवृत्तित्वम्, साध्यवदवृत्तित्वपरत्वे द्रव्यं सत्त्वादित्यादावतिव्याप्तिः । अव्याप्यवृत्तिमतोऽन्योन्याभावस्तु नाव्याप्यवृत्तिरित्यव्याप्यवृत्तिसाध्यकसद्धेतौ नाव्याप्तिः । अनधिकरणत्वमित्यत्राधिकरणत्वांशस्याधिकस्य प्रवेशान्न साध्यवदन्यावृत्तित्वमित्यनेन यथाश्रुतस्य पौनरुक्त्यम् । अखंडाभावघटकतया चाधिकरणत्वांशस्य न वैयर्थ्यम् । साध्यवद्भिन्नत्वं च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकं बोध्यम् । तेन वन्हिमान् धूमादित्यादौ धूमस्य समवायेन वन्हिमतो भिन्ने यत्किञ्चित्साध्यवद्व्यक्तिभिन्ने च पर्वतादौ वृत्तित्वेऽपि न क्षतिः । तादृशसाध्यवद्भिन्नत्वव्यापकान्योन्याभावप्रतियोगितावच्छेदकत्वमिति तु समुदायार्थनिष्कर्षः । अन्यथा पूर्ववत्साध्यवद्भिन्नवृत्तित्वानधिकरणत्वमित्यत्र वृत्तेर्हेतुतावच्छेदकसम्बन्धेनैव वाच्यतया सत्तावान् द्रव्यत्वादित्यादावव्याप्त्यापत्तेः । शेषं पूर्ववत् । लक्षणद्वयमेकदैव दूषयति—

तदुभयमपीति । साध्यानधिकरणानधिकरणत्वं—साध्यानधिकरणानधिकरणत्वनियतं, साध्यानधिकरणावृत्तित्वव्याप्यमिति यावत् । तच्च व्यापकीभू-

---

अव्याप्यवृत्तिमत इति । अन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेन एतद्वृक्षे कपिसंयोगिभेदसत्त्वादव्याप्तिः स्यादित्यर्थः । अखण्डेति । साध्यवदन्यावृत्तित्वमित्यत्र वृत्तित्वपदार्थस्य प्रतियोगितासम्बन्धेनाभावेऽन्वयः अत्र तु निष्ठत्वसम्बन्धेन तस्याधेयतायामन्वयः आधेयतायाश्चाधिकरणतायामन्वयः तस्य च प्रतियोगितासम्बन्धेनाभावेऽन्वयः इदमेवानयोर्वैलक्षण्यम् । नक्षतिः । नाव्याप्तिः इदं वन्हिमद्गगनादित्यस्य सद्धेतुत्वांगीकारे असम्भवो न सम्भवति तस्यासद्धेतुत्वांगीकारे तु विशेषरूपेण संसर्गत्वानभ्युपगमे विषयतायाः संसर्गत्वानभ्युपगमे च दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्र लक्षणसमन्वयोबोध्यः एतस्याप्यनंगीकारे तु क्षतिपदं असंभवपरं द्रष्टव्यम् । पूर्ववदिति । प्रथमलक्षणोक्तवदित्यर्थः । लक्षणद्वयस्य साध्यानधिकरणानधिकरणत्वबोधकत्वाभावात् साध्यानाधिकरणानधिकरणत्वपदं व्याचष्टे । साध्यानधिकरणानधिकरणत्वनियतमिति । साध्यवद्भिन्नवृत्तित्वानधिकरणे साध्यानधिकरणानधिकरणे च उभयत्रैव साध्यानधिकरणानधिकरणत्वसत्त्वादिति भावः । व्यापकीभूतं चेति । तथाच व्यापकाभावस्य व्याप्याभावव्याप्यत्वेन व्या-

**यत्किञ्चित्साध्यानधिकरणानधिकरणे धूमे चाप्रसिद्धमिति ॥**

तं साध्यानधिकरणावृत्तित्वं च । तत्र । केवलान्वयिसाध्यके । अप्रसिद्धमित्यन्वयः । साध्यानधिकरणत्वस्य साध्याधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपस्य तत्राप्रसिद्धेः ।

यत्किञ्चिदिति । यदि च साध्यानधिकरणत्वं न तत्सामान्यभेदः किंतु साध्याधिकरणप्रतियोगिताकभेदवत्त्वमात्रं तदा वन्हिमान् धूमादित्यत्र यत्किञ्चिद्वन्ह्यनाधिकरणे पर्वतादौ वर्तमाने धूमेप्यप्रसिद्धमित्यर्थः । अप्यर्थकचकारात्केवलान्वयिसाध्यकसमुच्चयः । तथा च व्यापकाभावाद्व्याप्यीभूतं तदुभयलक्षणमपि तदुभयत्राप्रसिद्धमिति भावः । साध्यानधिकरणानधिकरणत्वमिति यथाश्रुतं तु न संगच्छते यथोक्तलक्षणद्वयस्य तत्स्वरूपत्वाभावादिति ध्येयम् ।

भट्टाचार्यानुयायिनस्तु, तदुभयमपि, तदुभयलक्षणवाक्यमपि । साध्यानधिकरणानधिकरणत्वम् , साध्यानधिकरणानधिकरणत्वबोधजनकम् । साध्याधिकरणत्वसामान्याभाववद्वृत्तित्वाभावसाध्यवत्सामान्यभिन्नवृत्तित्वाभावान्यतरबोधजनकमिति यावत् । तच्च । तादृशान्यतराभाववत्त्वं च । तत्र । केवलान्वयिसाध्यके । अप्रसिद्धमित्यन्वयः । साध्याधिकरणत्वसामान्याभावादेरप्रसिद्धत्वादिति भावः । ननु तदुभयवाक्यं न प्रागुक्ताभावान्यतरविषयबोधजनकमपि तु साध्याधिकरणत्वप्रतियोगिकाभाववद्वृत्तित्वसामान्याभावसाध्यवत्प्रतियोगिकभेदवद्वृत्तित्वसामान्याभावान्यतरबोधजनकमेव । साध्याधिकरणत्वप्रतियोगिकाभावसाध्यवत्प्रतियोगिकभेदौ च केवलान्वयिन्यपि प्रसिद्धावित्यत आह । यत्किञ्चिदिति । शेषं पूर्ववदित्याहुः ॥

## माथुरीसिंहव्याघ्रलक्षणं समाप्तम् ।

पक्षीभूतसाध्यानधिकरणानधिकरणत्वस्य अप्रसिद्ध्याऽभावेन व्याप्यीभूतसाध्यवैय्यधिकरण्येत्यादिलक्षणस्याभावः सुलभ एव वन्ह्यभावात् धूमाभाववदिति भावः । नतत्सामान्यभेद इति । तथाच केवलान्वयिस्थले साध्याधिकरणत्वसामान्याभावस्याप्रसिद्धत्वेऽपि यत्किंचित्साध्याधिकरणत्वाभावस्य प्रसिद्ध्या नाप्रसिद्धिनिबन्धनाव्याप्तिः सम्भवतीत्यर्थः । केवलान्वयिसाध्यकसमुच्चय इति । तथाच केवलान्वयिनि तादृशाभावस्य प्रसिद्धत्वेऽपि तदधिकरणनिरूपितवृत्तित्वस्यैव वाच्यत्वहेतौ सत्त्वात् अव्याप्तिः सुदृढैवेति ।

इति श्रीहरिरामशुक्लकृता माथुरीसिंहव्याघ्रलक्षणव्याख्या समाप्ता ।

# माथुर्य्याः पञ्चलक्षण्याः क्रोडपत्रम्

गिरो गुरूणां निध्याय प्रीतये दूरदर्शिनाम् ।
श्रिया हरिहरेणेदं क्रोडपत्रं प्रतन्यते ॥

(१)

२ पृ० ७ प०

अथ **विशेषाभावकूटस्य सामान्याभावहेतुता प्रसिद्धैवेति** मथुरानाथोक्तिः कथं सङ्गच्छते ? तद्रूपप्रागभावतद्रूपप्रागभावध्वंसयोरन्यतरघटकतद्व्यक्तित्वावच्छिन्नाभावकूटस्य घटादौ सत्त्वेऽपि तादृशान्यतरत्वावच्छिन्नाभावस्य तत्रासत्त्वादिति चेन्न, निरवच्छिन्नस्वरूपसम्बन्धेन विशेषाभावकूटस्य सामान्याभावहेतुताप्रसिद्धिरित्यस्यैव मथुरानाथाभिप्रेतत्वात् ।

(२)

३ पृ० १ प०

**न कर्म्मधारयादिति** । अत्र कर्म्मधारयपदं बहुव्रीहीतरपञ्चसमासान्यतमत्वावच्छिन्ने लाक्षणिकम्, न तु षट्समासान्यतमत्वावच्छिन्ने, पञ्चमात्रगतान्यतमत्वापेक्षया षट्समासगतान्यतमत्वस्य गुरुत्वात् । यत् समासत्वस्यान्यतमत्वरूपतां विनाऽन्यद् दुर्वचम् । एतल्लघुशरीरान्यतमत्वावच्छिन्ने लाक्षणिकत्वलाभायैव बहुव्रीहीतरत्वोक्तिः, बहुव्रीहिघटितगुरुतरसमासान्यतमत्वस्य नियममध्ये प्रक्षेपस्यानावश्यकत्वात् ।

यत्तु बहुव्रीहीतरत्वानिवेशे साध्याभाववदवृत्तित्वमित्यत्र मतुप्प्रत्ययस्यासाधुतापत्तिः । अयं भावः—साध्यस्य अभाव इत्यर्थकतत्पुरुषसमासोत्तरं मतुप्प्रत्ययो न भवति, साध्यम् अभावो यस्येत्यर्थकबहुव्रीह्युत्तरं मतुप्प्रत्ययः साधुरेव । एवं च उक्तार्थकतत्पुरुषोत्तरमतुप्प्रत्ययस्यासाधुत्वनिर्वाहाय तदर्थकबहुव्रीह्युत्तरं तस्य साधुत्वनिर्वाहाय च नियमे बहुव्रीहीतरत्वनिवेशस्यावश्यकत्वम् । प्रकृते च तत्पुरुषार्थकबहुव्रीहिरेव, अतो मतुप्प्रत्ययः सुष्ठूपपद्यते । इत्युक्तम्, तच्च मनसि विचित्ररसं प्रसूते । यतो बहुव्रीहितत्पुरुषयोस्तुल्यार्थकत्वं पुरा केनापि पण्डितेन न श्रुतमिदानीमपि न श्रूयते । तथा हि साध्यम् अभावो यस्येतिविग्रहार्थकबहुव्रीहेर्मतुप्प्रत्ययान्तात् साध्याभिन्नाभावनिरूपितसम्बन्धिविशिष्टोऽवगम्यते, तत्प्रत्ययान्तात् साध्यस्य अभाव इतिविग्रहार्थकतत्पुरुषाच्च साध्यनिरूपिताभावसम्बन्धविशिष्टः । एतावता किं बहुव्रीहितत्पुरुषयोस्तुल्यार्थकत्वमायातम् ?

(३)

अथ धूमाधिकरणताया अपि वह्न्यभावाधिकरणत्वेन तन्निरूपितवृत्तिताया नियमतः पर्व्वतनिरूपितत्वेन संयोगसम्बन्धावच्छिन्नायास्तस्या धूमे सत्त्वेन वह्निमान् धूमादित्या-

द्वावव्याप्तिरिति चेदत्र प्राहुः,—अधिकरणतानिरूपितत्वमधिकरणनिरूपितत्वं चैतयोर्द्वयोर्नैको निरूपितत्वरूपानुगतो धर्म्मः। तथा सति धूमः पर्व्वते वर्त्तत इतिवद् धूमो धूमाधिकरणतायां वर्त्तत इति प्रतीत्यापत्तेः। अत एव विलक्षणनिरूपितत्वे सप्तम्यर्थतां स्वीकृत्योपपत्तिः कार्य्या, तादृशापत्तिश्च वार्य्या। एवं रीत्यैव कार्य्यस्य कारणं न तु कार्य्यताया इत्यादिकमुपपादनीयम्। षष्ठ्या विलक्षणनिरूपितत्वार्थकत्वात्।

नव्यास्तु साध्याभावावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावद्वृत्तिताया एव निवेशनीयत्वात्। दर्शिताधिकरणतानिष्ठं निरूपकत्वं च निरवच्छिन्नमधिकरणतात्वावच्छिन्नं वा कथञ्चिदित्येव स्वीकरणीयम्, न तु साध्याभावाद्यखिलधर्मावच्छिन्नत्वमपि मानाभावात्। एवञ्च निरूपकतायां साध्याभावावच्छिन्नत्वनिवेशनेनैवाधिकरणतानिष्ठनिरूपकताया व्यावर्त्तनसम्भवेन नाव्याप्तिः। एवञ्च घटत्वाभाववान् घटपटोभयत्वादित्यादौ मथुरानाथप्रदर्श्यमानातिव्याप्तिरपि सूपपद्यते। अन्यथा घटत्वाभाववत्पटनिरूपितस्य घटपटोभयत्वावच्छिन्ननिरूपकताकनिरूप्यतावद्वृत्तित्वस्य हेतौ सत्त्वादतिव्याप्त्यभिधानमसङ्गतं स्यादिति प्राहुः। प्रकृतपदार्थतत्त्वमविद्वद्भिः प्राचीनक्रोडपत्रकारैरत्र यः समाधानप्रयासः कृतः, स च श्रोतृवृन्दस्य व्यामोहकर एवेति तत्प्रदर्शनमुपेक्षितम्।

( ४ )

६ पृ० २ प०

**तस्य प्रतियोग्यादिस्वरूपत्वनये त्विति**। अथ यथा प्रतियोगित्वनिरूपकत्वाधिकरणत्वावच्छेदकत्वकार्य्यत्वकारणत्वादीनां स्वावच्छेदकस्वरूपत्वेऽपि तेषां स्वरूपसम्बन्धेन वर्त्तमानत्वं सर्वसम्प्रदायानुमतं तथा घटत्वाद्यभावाभावानामपि स्वरूपसम्बन्ध एव नियामक आस्ताम्, अन्यथा प्रतियोगित्वादीनामपि समवायादिको नियामकः स्यात्। एवञ्च व्याप्तिलक्षणे सर्वत्र स्वरूपसम्बन्धेनैव साध्याभावाधिकरणत्वनिवेशः साधीयानस्तु। न च स्वरूपसम्बन्धो घटत्वादिरूपघटत्वाभावाभावप्रतियोगिकत्वेन न क्लृप्तः समवायादेरेव क्लृप्तत्वादिति वाच्यम्, प्रतियोगितात्वादिना स्वरूपसम्बन्धप्रतियोगिताया अपि क्लृप्तत्वात्। न च स्वरूपसम्बन्धे स्वाभावाभावत्वावच्छिन्नप्रकारतानिरूपितसांसर्गिकविषयत्वकल्पने गौरवमिति वाच्यम्, भवन्मते समवायादौ घटत्वत्वाद्यवच्छिन्नप्रकारतानिरूपितसांसर्गिकविषयत्वस्य क्लृप्तत्वेऽपि स्वाभावाभावत्वावच्छिन्नप्रकारतानिरूपितसांसर्गिकविषयतायाः कल्प्यत्वेन लाघवानवकाशात्। अन्यथा प्रतियोगित्वादेः स्वरूपसम्बन्धकल्पनेऽप्यगतिः स्यात्। इति चेन्न, यतः—अयं न विशिष्टसत्तावान् किन्तु विशिष्टसत्ताभावप्रतियोगिमान्, इयं न घटपटोभयवती किन्तूभयाभावप्रतियोगिमती अयं न द्वौ किन्तु द्वित्वावच्छिन्नभेदप्रतियोगीत्यादिप्रतीत्यनुरोधेन प्रतियोगित्वादेः स्वावच्छेदकस्वरूपत्वेऽपि तस्य सम्बन्धान्तरस्वीकारावश्यकत्वम्। स्वाभावाभावादेः स्वरूपतापक्षे तु विशिष्टसत्ताभाववति देशे उभयविशेषाभाववति देशे च तदभावाभाववतोऽप्रतीतेः सुतरां प्रतियोगितावच्छेदकसम्बन्ध एव स्वाभावाभाववत्ताया नियामकत्वमुपपन्नतव्यम्। न च स्वाभावा-

भावत्वावच्छिन्ननिरूपकताकाधिकरणतावैलक्षण्यमुपगम्य उक्तप्रतीतिसमुदाय उपपादनीयः किं सम्बन्धवैलक्षण्येन तदवैलक्षण्येन वा इति वाच्यम्, एकस्यामेवाधिकरणतायां लाघवेन वैशिष्ट्याद्यवच्छिन्नत्वस्वाभावाभावत्वावच्छिन्नत्वयोः कल्पनात्। इत्यकामेनापि तादृशसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं निवेशनीयम्।

(९)

६ पृ० ४ प०

**साध्यसामान्यीयेति**। अत्र तादृशसाध्याभावत्वव्यापकसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं वक्तव्यम्। तेन कालिकसम्बन्धावच्छिन्नप्रमेयाभावस्य स्वरूपेण साध्यत्वे आत्मत्वादिहेतौ कालिकसम्बन्धेन साध्यस्य योऽभावः सोऽपि प्रमेयतया साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावान्तर्गतस्तस्य विशेषणताविशेषेणाभावस्य साध्यरूपत्वेन विशेषणताविशेषोऽपि साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धस्तेन सम्बन्धेन प्रमेयात्मकसाध्याभावाधिकरणे आत्मनि हेतोर्वर्त्तमानत्वेऽपि नाव्याप्तिः।

न चैवमपि कालिकसम्बन्धावच्छिन्नप्रमेयाभावस्य कालिकेन साध्यतायां कालत्वादिहेतौ प्रमेयत्वावच्छिन्नकालिकसम्बन्धावच्छिन्नप्रतियोगित्वस्य निरुक्तसाध्याभावत्वव्यापकतया साध्यसामान्यीयतया च तदवच्छेदककालिकसम्बन्धेन साध्याभाववति काले हेतोर्वृत्तेरव्याप्तिर्दुर्वारैवेति वाच्यम्, तादृशसाध्याभावत्वसमनियतसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वस्य विवक्षणीयत्वात्।

इदमत्रावधेयम्,—विषयित्वसम्बन्धेन प्रमेयसाध्यकस्थले साध्यसामान्यीयप्रतियोगित्वं तत्सम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावे कथमपि न हि सम्भवति। विषयित्वसम्बन्धावच्छिन्नप्रमेयाभावस्य स्वरूपेण योऽभावः स न निखिलप्रमेयस्वरूपः, न वा तादृशाभाववत्ताया नियामको विषयित्वसम्बन्धः। तथा सति प्रमेयाभावाभावत्वावच्छिन्नाविषयकशुद्धप्रमेयत्वावच्छिन्नविषयकज्ञाने प्रमेयाभावत्वावच्छिन्नाभावस्यासत्त्वप्रसङ्गात्। अतो विषयित्वसम्बन्धावच्छिन्नप्रमेयाभावस्य स्वरूपेण योऽभाव एषोऽतिरिक्त एव तद्वत्तानियामकः स्वरूपसम्बन्ध इत्येव विचारसहम्।

न च तादृशाभावाभावो निखिलप्रमेयस्वरूप एवास्ताम्, तद्वत्तानियामकस्तु स्वरूपसम्बन्ध इति वाच्यम्, तथा सति प्रमेयत्वादिरूपप्रमेयस्य स्वरूपसम्बन्धेन सर्व्वत्र सत्त्वेन तादृशाभावाभावस्य तत्सम्बन्धेन सर्व्वत्र सत्त्वापत्तेः। एवञ्च जगदीशाद्यभिमतं साध्यवत्ताबुद्धेर्विरोधितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं निवेशयितुं युक्तमेव। एतेन कपिसंयोगिनस्तादात्म्येन साध्यतायां सद्धेतौ कपिसंयोगिभेदाभावस्यातिरिक्ततया मथुरानाथस्वहास्तितत्वेन साध्याभावरूपकपिसंयोगिभेदे साध्यसामान्यीयप्रतियोगित्वासत्त्वेऽपि साध्यवत्ताबुद्धिविरोधिताघटकसम्बन्धतया स्वरूपस्य प्राप्तत्वेन तत्र नाव्याप्तिरिति समाहितम्।

अथ साध्याधिकरणत्वाभाववदवृत्तित्वमेव व्याप्तिः समुचिता । अन्यथा वृत्त्यनियामकसम्बन्धेन साध्यतास्थले तत्सम्बन्धावच्छिन्नप्रतियोगिताया बहुन्यायविदसम्मतत्वेनाव्याप्तिः स्यात् । एवं सर्व्वत्र साध्याधिकरणत्वाभावाधिकरणतायाः स्वरूपसम्बन्धेन निवेशसम्भवेन साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितेत्यादिगुरुतरप्रयासो विफलश्च । इति चेन्न, प्राचीनमते तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धेन व्याप्यव्यापकभावस्यासत्त्वात् । अवयवग्रन्थे गदाधरेणेति स्वहस्तितम् । साध्याधिकरणत्वाभावस्तु साध्याभाव एव । एवं च घटत्वाभावादिसाध्यकसद्धेतौ साध्याधिकरणत्वाभावस्य स्वरूपेणाधिकरणतानिवेशो न हि सम्भवति, तादृशाधिकरणत्वाभावस्य घटत्वस्वरूपत्वात् । अत एव सिद्धान्तलक्षणविचारे द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्यापि द्रव्यत्वानतिरेकादिति जगदीशलिखनम्

अथ गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वानङ्गीकृन्नये साध्यतावच्छेदकावच्छिन्नाधिकरणत्वाभावनिवेश एवोचित इति चेन्न, गुरुधर्म्मे अभावप्रतियोगितावच्छेदकत्वानङ्गीकृन्मते अधिकरणत्वीयनिरूपकताख्यप्रतियोगितावच्छेदकत्वस्यापि असत्त्वात् । इति विशेषव्याप्तौ दीधितिकृता प्रगल्भलक्षणविचारे स्वहस्तितम् ।

## ( ६ )

१० पृ० ४ प०

**कालिकसम्बन्धावच्छिन्नेति** । ननु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य स्वरूपेण स्वप्रतियोगितादृशविशेष्यत्वानधिकरणघटाद्यवच्छेदेन कालेऽपि सत्त्वात् केवलान्वयितया केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैव तद्दोषस्य वक्ष्यमाणत्वात् कथं तादृशाव्याप्तिनिरासाय साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वस्य प्रतियोगिताविशेषणत्वमिति चेन्न, यतो गगनाभावस्य कालिकसम्बन्धेन योऽभावस्तस्य विशेषणताविशेषेण साध्यत्वे आत्मत्वादिदेतावव्याप्तिरिति प्रतियोगितायां तादृशविशेषणमावश्यकम् ।

## ( ७ )

१० पृ० १० प०

**प्रतियोगितावच्छेदकवदिति** । अथात्र घटभिन्नं कपालत्वादित्यादावव्याप्तिः, घटत्वात्मकसाध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकसमवायसम्बन्धेन घटरूपसाध्याभावाधिकरणे कपाले हेतोर्वृत्तेः । यद्यपि घटनाशदशायामिदानीमिह कपाले न घट इति प्रतीत्या समवायसम्बन्धेन घटस्य निरवच्छिन्नाधिकरणत्वाप्रसिद्ध्या वक्ष्यमाणनिरवच्छिन्नाधिकरणत्वनिवेशनैवाव्याप्तिवारणं सम्भवति, तथापि गुणभिन्नं द्रव्यत्वादित्यत्राव्याप्तिः, गुणत्वरूपसाध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकसमवायसम्बन्धेन गुणात्मकसाध्याभावस्य निरवच्छिन्नाधिकरणे आत्मादौ हेतोर्विद्यमानत्वात् । मैवम् , यत्साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदको यः सम्बन्धः, तेन सम्बन्धेन तत्साध्याभावाधिकरण-

 

त्वस्य विवक्षितत्वात् । न चैवमननुगमः, स्वनिरूपितत्व-स्ववृत्तिसाध्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वैतदुभयसम्बन्धेन साध्याभावविशिष्टाधिकरणत्वस्य निवेशनीयत्वात् । न चात्यन्ताभावत्वनिरूपितत्वदलं व्यर्थम्, विषयितया घटभेदवद्भिन्नभेदस्य घटभेदात्मकस्य ज्ञानभिन्ने सर्वत्र प्रतियोगिसत्त्वात् तद्वारणाय तस्य सार्थक्यात् । न चाभावस्य यः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तस्य कालिकसम्बन्धेन साध्यत्वे महाकालत्वादिहेतावव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वस्य विवक्षणीयतया पुनरत्यन्ताभावत्वनिरूपितत्वदलवैयर्थ्यमिति वाच्यम्, तद्विशेषणस्यात्रैव तात्पर्य्यात् । इति साम्प्रदायिकाः ।

गुरुचरणास्तु घटभेदाभावाश्रयो घटो न कपालमितिप्रतीतिः सर्व्वसम्मतत्वेन तत्प्रामाण्यानुरोधात् घटभेदाभावत्वावच्छिन्नाधिकरणतायाः घट एव स्वीकरणीयत्वेन कपाले साध्याभावत्वावच्छिन्नाधिकरणताविरहादेव न घटभिन्नं कपालत्वादित्यादावव्याप्तिः । इति प्राहुः ।

(८)

१० पृ० १२ प०

**इत्थञ्चात्यन्ताभावत्वनिरूपितत्वेनापीति** । अथात्यन्ताभावत्वनिरूपितत्वस्य प्रतियोगितायां निवेशनमनर्थकम्, भेदाभावस्य प्रतियोगिस्वरूपत्वेऽपि निरुक्तसाध्याभावत्वावच्छिन्नाधिकरणत्वस्यैव व्याप्तिलक्षणे विवक्षिततया घटान्योन्याभाववान् घटत्ववत्त्वादित्यादौ वृत्त्यनियामकतादात्म्यसम्बन्धस्य तादृशसाध्यीयप्रतियोगितावच्छेदकत्वेऽपि तत्सम्बन्धावच्छिन्नाधिकरणत्वाप्रसिद्धेरव्याप्त्ययोगात् । इति चेदत्र केचित्--वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावादरपक्षे स्वामित्वादिसम्बन्धेन धनाभावस्य स्वरूपेण साध्यतायां तद्व्यक्तित्वादिहेतौ साध्यीयप्रतियोगितावच्छेदकेन स्वामित्वसम्बन्धेनाधिकरणत्वाप्रसिद्धेरव्याप्तिभिया यथोक्तलक्षणे साध्याभावत्वावच्छिन्नसम्बन्धिताया एव प्रवेशनमावश्यकम् । एवञ्च साध्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन साध्याभावस्य घटत्वस्याधिकरणे घटत्ववत्त्वस्य वृत्तेरव्याप्तिर्दुष्परिहरेति प्रतियोगितायां तादृशविशेषणम् । इति वदन्ति । तन्न मनोरमम्-- संयोगवद्भिन्नत्वाभावस्येव वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याऽप्यतिरिक्तत्वमेव मथुरानाथाभिप्रेतमिति स्वामित्वादिसम्बन्धावच्छिन्नाभावसाध्यकसद्धेतौ साध्याभावस्यातिरिक्ततया साध्यीयप्रतियोगितावच्छेदकेन स्वरूपसम्बन्धेन तादृशातिरिक्तसाध्याभावस्याधिकरणत्वप्रसिद्धेरव्याप्त्यनवकाशात्, चैत्रे स्वामित्वसम्बन्धावच्छिन्नप्रतियोगिताकधनाभावो नास्तीति नञ्समभिव्याहृतानुयोगिवाचकपदप्रकृतिकसप्तम्या अधिकरणत्वावगाहिशाब्दप्रमानिर्व्वाहानुरोधेन वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावस्याऽतिरिक्तताया एव युक्तत्वाच्च । न चैवं स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्याचार्य्योक्तलक्ष-

णस्य स्वामित्वेन धनाद्यभावप्रतियोगिनि धनादावव्याप्तिरिति वाच्यम्, प्रतियोगित्वलक्षणाव्याप्तिपरीहाराय धनादेः स्वामित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावाभावस्वरूपत्वाङ्गीकारेऽपि निरुक्ताधिकरणत्वावगाहिप्रतीतेः प्रमात्वानुरोधेन स्वामित्वेन धनाभावाभावस्यातिरिक्तत्वस्यापि स्वीकारावश्यकत्वात्।

वस्तुतस्तु अधिकरणत्वादेरिव सम्बन्धिताया अनुगताकारपृथग्धीविशेषसिद्धतया विनिगमनाविरहेण साध्याभावाधिकरणताघटितव्याप्तेरिव साध्याभावसम्बन्धिताघटितव्याप्तेरपि व्यतिरेकिसाध्यकानुमितिप्रयोजकत्वस्य दुष्परिहारतया तादृशसम्बन्धिताघटितव्याप्तिलक्षणस्य घटभिन्नं घटत्वत्वादित्यादावव्याप्तिवारपाय परिचायकशरीरे अत्यन्ताभावत्वनिरूपितत्वं निरुक्तप्रतियोगितायामवश्यं विशेषणीयम्।

(९)

१६ पृ० १ प०

**अन्ये त्विति।** अथ हेतुतावच्छेदकसम्बन्धावच्छिन्न–हेतुतावच्छेदकावच्छिन्न–स्वाधिकरणताश्रयनिरूपित–निरुक्तसम्बन्धावच्छिन्ननिरवच्छिन्नवृत्तित्वाभाववन्निरुक्तसाध्याभावकत्वमेव निवेश्यताम्, किं तादृशगुरुतरनिवेशेन ? न च गुणकर्म्मान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादौ विशिष्टसत्तारूपनिरुक्तसाध्याभावस्य निरुक्तहेत्वधिकरणनिरूपितनिरुक्तवृत्तित्वेनाव्याप्तिरिति वाच्यम्, निरुक्तस्वाधिकरणताश्रयनिरूपितस्वरूपसम्बन्धावच्छिन्ननिरवच्छिन्नवृत्तित्वाभाववन्निरुक्तसाध्याभावत्वावच्छिन्नयथोक्तसम्बन्धावच्छिन्नाधिकरणताकत्वमेतादृशार्थस्योक्तत्वात्।

अत्र ब्रूमः। अधिकरणभेदेनाधिकरणताया नानात्वमते ह्रदनिष्ठधूमाभावाधिकरणतायां हेत्वधिकरणाऽयोगोलकनिरूपित–स्वरूपसम्बन्धावच्छिन्ननिरवच्छिन्नवृत्तित्वाभावसत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिरतो निरुक्तनिवेशनमिति। न च साध्याभावाधिकरणतासामान्ये निरुक्तवृत्तित्वाभावस्य विवक्षितत्वान्नाव्याप्तिरिति वाच्यम्, सामान्यपदस्य व्यापकत्वार्थकतया महागौरवापत्तेः।

(१०)

१८ पृ० ४ प०

**यथोक्तलक्षणे तस्याप्रवेशेन वैयर्थ्याभावादिति।** स्वसमानाधिकरणव्याप्यतावच्छेदकधर्म्मान्तरघटितत्वस्यैव व्यर्थविशेषणघटितत्वरूपत्वात् साध्यवद्भिन्नवृत्ति साध्याभाववदवृत्तित्वत्वस्य साध्यवद्भिन्नावृत्तित्वत्वाघटितत्वेनोक्तलक्षणं न व्यर्थविशेषणघटितमिति भावः।

(११)

१८ पृ० ६ प०

**तादृशद्रव्यत्वादिमद्वृत्तित्वादसम्भवापत्तेरिति।** अथैतल्लक्षणेऽपि साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं वक्तव्यम्। एवञ्च साध्याभावपदाऽऽनर्थक्यशङ्कायामप्याधिकरणत्वस्य तादृशेनैव सम्बन्धेन वि-

वक्षिततया कालिकसम्बन्धावच्छिन्नप्रमेयाभावादिसाध्यकात्मत्वादिहेतौ तादृशकालिकसम्बन्धेन हेतुमत्यसतः साध्यवद्भिन्नवृत्तेरधिकरणे आत्मत्वस्यासत्त्वाल्लक्षणगमनसम्भवेन कथमसम्भवोक्तिः सङ्गच्छते ? इति चेन्न, यतस्तादृशप्रमेयाभावाभावत्वं निखिलप्रमेये नाभ्युपेयते, परन्तु लाघवात् केवलान्वयिष्वेव । तथा चात्मघटान्यतरत्वप्रतियोगिकस्वरूपकालिकान्यतरसम्बन्धेन यः साध्याभावत्वावच्छिन्नाभावस्तस्यापि साध्यतया साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकनिरुक्तान्यतरसम्बन्धेन साध्यवद्भिन्नवर्त्तमानस्य आत्मघटान्यतरत्वस्याधिकरणे आत्मनि हेतोर्वृत्तेरसम्भवोक्तिर्निरावाधैव ।

न च तथापि जात्यभाववान् जातित्वादित्यत्र साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदक–समवायसम्बन्धेन जातिरूपहेत्वधिकरणे कस्याप्यसत्त्वात् सूपपाद एव लक्षणसमन्वय इति वाच्यम्, स्वरूपसमवायान्यतरसम्बन्धस्यापि निरुक्तप्रतियोगितावच्छेदकतया लाभसम्भवेन साध्यवद्भिन्नवृत्तिगगनाभावादेर्हेतुमत्यपि सत्त्वादसम्भवस्य वज्रलेपायमानत्वात् ।

## ( १२ )

२० पृ० ४ प०

**यद्वेति** । ननु घटत्वघटाकाशतत्संयोगान्यतराभाववान् गगनत्वात् इत्यत्राव्याप्तिर्दुर्वारैव घटत्वघटाकाशतत्संयोगस्यानुगततया तत्र तादृशान्यतराभावाभावत्वकल्पने बाधकाभावात् क्लृप्तानां तथात्वकल्पनसम्भवे अतिरिक्ततथात्वकल्पनाऽनौचित्यादिति चेन्न, यद्वेति वाकारस्याऽनास्थासूचकत्वात् । वस्तुतो घटत्वघटाकाशतत्संयोगान्यतराभावाभावस्य घटे व्याप्यवृत्तित्वन्निरवच्छिन्नवृत्तिकतया घटे किञ्चिदवच्छेदेन तादृशान्यतराभावो नास्तीति प्रतीतेरप्रामाणिकत्वम्, परन्तु तादृशान्यतराभावाभावस्य तादृशान्यतरस्वरूपत्वे तादृशान्यतरान्तःपातिघटाकाशतत्संयोगस्य अवच्छिन्नवृत्तिकतया तत्प्रतीतेः प्रामाणिकत्वापत्तेः । अतिरिक्तत्वपक्षे घटे तादृशाभावस्य व्याप्यवृत्तित्वेन निरवच्छिन्नवृत्तिकतया तत्प्रतीतेर्न प्रामाणिकत्वम् । घटाकाशसंयोगाभावत्वेन साध्यत्वे तादृशसाध्यस्य केवलान्वयितया व्याप्यवृत्तित्वाद् भेदस्य तद्वद्भिन्नत्वस्याप्रसिद्धेरव्याप्तिरशक्योच्छेदेत्यन्यतराभावस्य साध्यत्वम् ।

## ( १३ )

२६ पृ० १७ प०

**केवलान्वयिन्यभावादितीति** । ननु केवलान्वयिन्यभावादित्यनेन पञ्चानां लक्षणानां दूषणमसङ्गतं साध्याभाववदवृत्तित्वादिलक्षणस्य स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वादिस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभाववत्त्वार्थे कृते केवलान्वयिन्यव्याप्तिविरहादिति चेन्न, धनी चैत्रत्वादित्यादौ स्वावच्छिन्नसाध्यतावच्छेदकवृत्त्यनियामकस्वामित्वादिसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तेः । न च तादृशलक्षणस्य स्वावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभा-

ववद्वृत्तित्वादिसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकसम्बन्धाभावत्वार्थकरणान्नैष दोष इति वाच्यम्, धनी द्रव्यत्वादित्यादौ द्रव्यत्वस्य धनत्वावच्छिन्नसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वादिसम्बन्धावच्छिन्नप्रतियोगिताकस्वामित्वसम्बन्धाभावसत्वादतिव्याप्त्यापत्तेः ।

प्रमादपरिकल्पितं यदि च किञ्चिदालोचितं
तदस्ति मम दूषणं पुरुषधर्म्म एव भ्रमः ।
यदत्र नवकल्पनाकलिततर्कवाग्वैभवं
तदेव गुरुदैवतस्फुरदमोघशिक्षाफलम् ॥

इति श्रीमहामहोपाध्यायराखालदासन्यायरत्नभट्टाचार्य्यान्तेवासि–श्रीहरिहरशास्त्रिसङ्कलितपञ्चलक्षणीमाथुरीक्रोडपत्रं समाप्तम् ।



सर्वविधपुस्तकप्राप्तिस्थानम्—

जयकृष्णदास-हरिदास गुप्त—

**चौखम्बा संस्कृत सीरिज़ आफिस,**

विद्याविलासप्रेस, गोपालमन्दिर के उत्तर फाटक,

बनारस सिटी ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| प्रमाणमितिका | प्रमितिकर | १ | १ |
| रितर | अनुमितिरनुमितीतर | १ | ६ |
| त्वाप्तिः | त्वाप्राप्तिः | ३ | ५ |
| रु | रू | ३ | २० |
| स | सा | ४ | ११ |
| धूमस्तद्वृ | धूमस्तद्वद्वृ | ५ | १८ |
| ध्य | साध्या | ७ | १४ |
| ह्वधा | वह्नय | १६ | १४ |
| ध्य | साध्या | १९ | ५ |
| तदभिन्न | तद्भिन्नभिन्न | २० | ७ |
| च्छिप्र | वच्छिन्नप्र | २१ | ४ |
| भ | भा | २२ | २ |
| स | सामा | २२ | ७ |
| व | भावे | २६ | १ |

आत्मानन्द आरुड स्वामी
हु. गौ.पोष्ट, मो.ता.भा.जि. बिदर
मैसूर स्टेट

श्रीः ।

# शक्तिवादः

पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तनिर्मितया विवृत्याख्य-

टीकया सहितः ।

भो भो विपश्चिदग्रेसराः !

विदितमस्तु तत्रभवतामेतद्–यत् किल न्यायशास्त्रे शब्दखण्डवि-चारग्रन्थेषु सत्स्वपि बहुषु पदपदार्थसंबन्धस्वरूपशक्तिनिर्णयाय यथा खलु शक्तिवादः सर्वमूर्धन्यस्तथा नापरो ग्रन्थ इति दार्शनिकानां नैव तिरोहितम्,

अस्य प्रणेता विश्वविख्यातवैदुषीकः श्रीमान् तार्किकचूडामणि-गदाधरभट्टाचार्य्यः,

सोऽयं निबन्धोऽतिगम्भीरतया व्याख्यामपेक्षमाणोऽतः श्रीनवद्वी-पनिवासिनैयायिकप्रवरश्रीहरिनाथतर्कसिद्धान्तनिर्मितया विवृत्याख्य-या टीकया पूर्वं कलिकातायां मुद्रितोऽपि नानाकारणनिबन्धनाभिरशु-द्धिभिररुन्तुद एव जिज्ञासूनामासीत्,

ततोऽस्माभिः स्वकीयविद्याविलासयन्त्रालये संशोधय्य प्रकाशितः,

ग्राहकाणां सुविधायै रूप्यकत्रयमेव ३) रु० सटीकस्यास्य शक्ति-वादस्य मूल्यं निर्धारितम्,

आशास्यते चैनं जिघृक्षुभिर्ग्राहकैर्निम्ननिर्द्दिष्टस्थाने पत्रादिप्रेषणे-नोक्तग्रन्थावाप्तये वयं सूच्येमहीति ।

१—१२—२९ ।

जयकृष्णदासहरिदासगुप्तौ
चौखम्भासंस्कृतग्रन्थमाला कार्य्यालये,
काश्याम् ।

आत्मानन्द आरुड स्वामी
हु. गौ.पोष्ट, मो.ता.भा.जि. बिदर
मैसूर स्टेट

७१-१ ब्रह्मसूत्रशाङ्करभाष्यम्। चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्या-
सहितया श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम्।
द्वितीयाध्यायस्य द्वितीयपादान्तो प्रथमोभागः रु० २--८
७१-२ ब्रह्मसूत्रशाङ्करभाष्यम्। रत्नप्रभया सहितम्। द्वितीयाध्यायस्य
द्वितीयपादान्ताच्चतुर्थाध्याय पर्यन्तः द्वितीयोभागः। (यन्त्रस्थ)
७२-१ सिद्धान्तशिरोमणिः। श्रीभास्कराचार्य विरचितः। गणि-
ताध्यायः वासनाभाष्य सहितः। ज्योतिषाचार्य म. म.
श्रीदमद्बापूदेवशास्त्रिकृतटिप्पणी सहितः। (ज्यो० वि० ४) २—०
७२-२ सिद्धान्तशिरोमणिः। " " "
गोलाध्यायः वासनाभाष्य सहितः। ज्योतिषाचार्य म. म.
श्रीदमद्बापूदेवशास्त्रिकृतटिप्पणी सहितः। (ज्यो०वि०४) २—०
७३ काकचण्डीश्वरकल्पतन्त्रम्। पण्डित रामकृष्ण शर्म्मणा सम्पा-
दितम्। पण्डित बटुकनाथ शर्म्मा एम. ए. साहित्योपाध्याय
इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम्। (आयुर्वेद
शास्त्रविभागे १) रु० ०—८
७४ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्।
मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं०
श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम्।
(सर्गत्रयमात्रम्)। (काव्य वि० १०) रु० ०—१२
७५ चन्द्रालोकः। पीयूषवर्षश्रीजयदेवकवि प्रणीतः। श्रीमत्पद्मना-
भमिश्रापराभिधानप्रद्योतनभट्टाचार्य विरचितया चन्द्रालो-
कप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः। साहि-
त्याचार्येण खिस्ते इत्युपाख्यनारायणशास्त्रिणा भूमिका-
दिभिः सम्भूष्य सम्पादितः। (अलङ्कार वि० ३) रु० ०--१२
७६ किरातार्जुनीयम्। श्रीमत्कविकुलचूडामणिभारविविरचितम्।
मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० श्रीकन-
कलालशर्मणा कृतया भावार्थदीपिनीव्याख्यया समलङ्कृ-
तम्। (सर्गत्रयमात्रम्) (काव्य वि० ११) रु० ०—६
७७ शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्क-
सिद्धान्तभट्टाचार्यविरचितविवृतिसहितः। (न्यायविभागे १०) रु० ३-
७८. माथुरीपञ्चलक्षणी। पं० श्रीउमानाथाज्र्यालकृतव्याख्यया सहिता
तथा माथुरीसिंहव्याघ्रलक्षणम् पं० श्रीहरिरामशुक्लविर-
चितया व्याख्यया सहितं तथा पं० हरिहरशास्त्रिसङ्कलित-
माथुरीपञ्चलक्षणीक्रोड़पत्रं च। (न्याय वि० ११) ०-६

---

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस,
गोपालमन्दिर के उत्तर फाटक बनारस सिटी।

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

६४

न्यायविभागे(८)अष्टमं पुष्पम् ।

श्रीमथुरानाथतर्कवागीशकृतं

# व्याप्तिपञ्चकरहस्यम् ।
# सिंहव्याघ्रलक्षणरहस्यं च







प्रकाशकः—
जयकृष्णदास–हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

THE

# KASHI-SANSKRIT-SERIES

*( HARIDAS SANSKRIT GRANTHAMĀLĀ )*

## NO. 64.

( Nyāya Section No. 8 )



THE

# VYĀPTĪPANCHAKARAHASYAM

AND

# SINHAVYYĀGHRA LAKSHANA RAHASYAM

By

*S'ri Mathurā Nātha Tarkavāgis'a.*

WITH GANGĀNIRJHARINI COMMENTARY AND NOTES

By

*Nyāyāchārya Pandit Sri S'ivadatt Misra*

PROFESSOR GOVERNMENT SANSKRIT COLLEGE, BENARES.

*Edited By*

PANDIT DHUNDHIRAJ S'ASTRI N. U., K. T.

Professor D. A. V. Veda Vidyālaya, Benares.

PRINTED, PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series office, Vidya Vilas Press,*

*North of Gopalmandir, Benares City.*

1928.

Printed-Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
BENARES CITY.

*Printed by Jai Krishna Das Gupta at the Vidya Vilas Press, Benares.*

Agents:

1 Otto Harrassowitz, Leipzig:
GERMANY.

2 The Oriental Book-supplying Agency,
POONA.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

६४

न्यायविभागे(८)अष्टमं पुष्पम् ।

श्रीमथुरानाथतर्कवागीशकृतं

# व्याप्तिपञ्चकरहस्यम् ।

# सिंहव्याघ्रलक्षणरहस्यं च

काशीस्थराजकीयपाठशालीयन्यायशास्त्रप्रधानाध्यापक-महामहोपाध्याय श्रीमद्गुरुचरण पं० वामाचरणभट्टाचार्यानुगृहीतेन
काशीस्थराजकीयपाठशालायां न्यायशास्त्राध्यापकेन
न्यायाचार्य पं० श्रीशिवदत्तमिश्रगौडेन
विरचितया गंगानिर्झरिणीव्याख्यया
संवलितम्
तत्कृतटिप्पण्यादिभिर्विभूषितं च ।
काशीस्थ डी. ए. वी. वेदविद्यालयप्रधानाध्यापकेन
पं० श्रीढुण्ढिराजशास्त्रिणा संशोधितम् ।

प्रकाशकः—
जयकृष्णदास—हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

श्रीः ।

श्रीगुरुः शरणम् ।

अथ प्रस्तूयते किलेदं महामहोपाध्यायश्रीमथुरानाथतर्कवागीशविरचितं व्याप्तिपञ्चकरहस्यम् । अनुमानखण्डीयप्रारम्भिकस्याऽस्य ग्रन्थस्य पठनपाठनोपयोगिनी गंगानिर्झरिणीनाम्नी टीकाश्रीजयकृष्णदासगुप्तस्याऽत्यन्ताऽनुरोधेन विरचिता अस्य मुद्रणविक्रययोः सर्वेऽधिकाराः सततं प्रकाशकायत्तीकृताः । तदनेन प्रीयतां सर्वान्तर्यामी काशीविश्वेश्वर इति शिवम् ।



विदुषामनुचरः

श्रीशिवदत्तमिश्रः

आत्मानन्द आरुड स्वामी
मु. गौ. पोस्ट, मो. ता. मा. जि. बिदर
मैसूर स्टेट

श्रीगणेशायनमः ।

# व्याप्तिपञ्चकस्य चिन्तामणिः ।

## नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः ?

# अथ श्रीमथुरानाथतर्कवागीशकृतं व्याप्तिपञ्चकरहस्यम् ।

श्रीरस्तु ।

अनुमानप्रामाण्यन्निरूप्य व्याप्तिस्वरूपनिरूपणमारभते नन्वित्यादिना ।

# अथ न्यायाचार्यशिवदत्तमिश्रकृता सुबोधाख्या माथुरी टीका ।

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्राशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥ १ ॥
जननीजनकौ नत्वा ध्यायं ध्यायं गुरोः पदम् ।
तन्यते शिवदत्तेन सुबोधा पञ्चलक्षणी ॥ २ ॥

निरूप्येत्यत्र धात्वर्थो निरूपणम् । तच्च ज्ञानानुकूलो व्यापारः शब्दरूपः, अनुमानप्रामाण्यमित्यत्र द्वितीयार्थो विषयत्वं निरूपणपदार्थैकदेशे ज्ञानेऽन्वेति । (१)ल्यवर्थो ध्वंसकालीनत्वम् । तस्याग्रिमनिरूपणे ऽन्वयः। आङ्पूर्वकरभधात्वर्थश्चाऽऽद्यकृतिः। आद्यकृतित्वं च स्वसमानविषयकस्वसमवायिसमवेतकृतिध्वंसासमानकालीनकृतित्वम् , सविषयकार्थबोधकधातुयोगे आख्यातार्थ आश्रयत्वम् । नन्वित्यादिनेति–तृतीयार्थोऽभेदो धान्येन धनवानितिवत् , तस्य व्याप्तिनिरूपणे ऽन्वयः। तथा चानुमानप्रामाण्यविषयकनिरूपणध्वंसकालीन–नन्वित्यादिग्रन्थाभिन्नव्याप्तिस्वरूपनिरूपणविषयकाऽऽद्यकृतिमान् मूलकार इति बोधः ।

---

(१) ल्यबर्थो ध्वंसकालीनत्वमिति । ल्यप्स्थानिभूतक्त्वाप्रत्ययस्य लाघवात्प्रागभावे शक्तिः कर्त्तरि निरूढलक्षणा, प्रागभावश्च कालीनतासम्बन्धेनाधेयतासम्बन्धेन वा प्रकृत्यर्थे विशेष्यतया प्रतियोगितासम्बन्धेनोत्तरक्रियायां च विशेषणतयाऽन्वेति, कर्त्ता चोत्तरक्रियायां कार्यतासम्बन्धेन विशेषणतयाऽन्वेति, प्रकृत्यर्थश्च क्त्वाप्रत्ययार्थो यः कर्त्ता तदेकदेशे कर्तृत्वे विशेषणतयाऽन्वेति, इत्थञ्च भुक्त्वा चैत्रो व्रजतीत्यादौ भोजनकर्तृकर्तृकं यद्भोजनकालीनप्रागभावप्रतियोगि भोजनवृत्तिप्रागभावप्रतियोगि वा गमनं तदनुकूलकृतिमांश्चैत्र इत्यन्वयबोधः । भोजनानन्तरलवमुहूर्त्तादिना व्यवधान इव वृष्ट्यादिना व्यवधानेऽपि भुक्त्वा व्रजतीति प्रयोगस्येष्टत्वात् । कर्तृत्वं च कृतिमत्त्वं क्वचिच्चाश्रयत्वं व्यापारवत्त्वं च । एवं तन्निष्ठकृतिजन्यत्वं कार्यत्वं क्वचिच्च तदाश्रितत्वं तन्निष्ठव्यापारजन्यत्वं च । तेन रथः स्थित्वा गच्छति काष्ठमोदनं पक्त्वा तेमनं पचतीत्यादावचेतनेऽपि नान्वयानुपपत्तिः । स्थित्याश्रयाश्रितं यत्स्थितिकालीनप्रागभावप्रतियोगिगमनं तदाश्रयो रथः । ओदनकर्मक-

पाकानुकूलव्यापारवन्निष्ठव्यापारजन्यं यदोदनकर्मकपाककालीनप्रागभावप्रतियोगि तेमनकर्मकपचनं तदनुकूलव्यापारवत्काष्ठमित्यन्वयबोधः सम्भवति । नच स्वीयभोजनपूर्ववर्त्तिपुरुषान्तरीयभोजनोत्तरवार्त्तिगमनेपि भुक्त्वा व्रजतीति प्रयोगापत्तिरिति वाच्यम्। क्त्वाप्रत्ययार्थयोः कर्त्तृप्रागभावयोर्विशेष्यतया प्रकृत्यर्थतावच्छेदकरूपेणैकक्रियान्वयित्वस्य व्युत्पत्तिसिद्धत्वादिति । अतएव कर्त्तृत्वप्रागभावयोः शक्यत्वे भोजनकालीनेऽगमनेपि केवलसमानकर्त्तृकांशमादाय भुक्त्वा व्रजतीति प्रयोगापत्तिः, एवं केवलतत्कालीनप्रागभावप्रतियोगित्वरूपोत्तरवृत्तित्वांशमादाय भिन्नकर्त्तृकभोजनोत्तरवार्तिव्रजनेपि तथाप्रयोगापत्तिश्चेति निरस्तम्। प्रकृत्यर्थतावच्छेदकरूपेण क्रियाव्यक्त्यन्वितततदुभयविशेष्यकबोध एव तत्तत्पदसमभिव्याहृतक्त्वाप्रत्ययस्य निरूढत्वात्। नच तदुभयविशेष्यकबोध एव क्त्वाप्रत्ययस्य निरूढत्वे मुखं व्यादाय स्वपितीत्यत्रानुपपत्तिः, ओष्ठपुटविभागरूपस्य मुखव्यादानस्य स्वापोत्तरकालीनतया स्वापे तत्कालीनप्रागभावप्रतियोगित्वस्य बाधितत्वादिति वाच्यम्। मुखव्यादानानन्तरं यत्किञ्चित्स्वापव्यक्तेरुपादानादेव तत्रान्वयसम्भवात् । नच तथापि 'मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप से'त्यादौ भिन्नकर्त्तृके क्त्वादर्शनात्तदुभयविषयकबोधे कथं क्त्वाप्रत्ययस्य निरूढलक्षणा 'यस्मात्त्वं मामवजानासि तस्मात् मत्प्रसूतिमनाराध्य तव प्रजा न भविष्यतीति सा सुरभिस्त्वां शशापेति' तत्रार्थत्वादिति वाच्यम्। तत्रानाराध्येत्यनन्तरं स्थितस्येत्यध्याहार्य स्थितिक्रियासमानकर्त्तृकत्वोपगमेन क्त्वाप्रत्ययेन समानकर्त्तृकत्वसम्भवात् । नच तथापि यत्राङ्गुलिसंयुक्ते पटेऽङ्गुलिसंयोगनाशानन्तरं घटसंयोगस्तत्रापि घटो अङ्गुली संयुज्य पटे संयुज्यते इति प्रयोगापत्तिः । घटपटसंयोगस्य घटपटोभयकर्त्तृकतया अङ्गुलिसंयोगसमानकर्त्तृकत्वस्यापि तत्र सत्त्वादिति वाच्यम् । तत्र युजधातुद्वयस्य तद्घटप्रतियोगिकसंयोगत्वेन लक्षणयैकघटकर्त्तृकसंयोगद्वयबोधकत्वनियमादेवोक्तस्थले तादृशव्यवहाराभावात्, इत्थं चाङ्गुलिनिष्ठतद्घटव्यक्तिप्रतियोगिकसंयोगकर्त्तृकर्त्तृको योऽङ्गुलीनिष्ठतद्घटव्यक्तिप्रतियोगिकसंयोगकालीनप्रागभावप्रतियोगी तद्घटव्यक्तिप्रतियोगिकपटवृत्तिसंयोगस्तदाश्रयो घट इत्यन्वयबोधः । एतेन येनैकमोदनं पक्त्वा ओदनान्तरं भुज्यते तत्राप्योदनः पक्त्वा भुज्यत इति प्रयोगापत्तिः, तत्रोदनं पक्त्वा भुज्यत इत्येव प्रयोगादिति परास्तम् । कर्मप्रत्ययस्थले धातुद्वयस्य तद्व्यक्तिकर्त्तृकत्वविशिष्टस्वार्थतावच्छेदकद्वयरूपेणैकव्यक्तिकर्मकक्रियाद्वयबोधकत्वनियमादेव न तत्, इत्थं चोदनकर्मकपाककर्त्तृकर्त्तृकं यत्तदोदनव्यक्तिकर्मकपाकवृत्तिप्रागभावप्रतियोगितदोदनव्यक्तिकर्मकं भोजनं तत्कर्मतावानोदन इत्यन्वयबोधः । तथापि प्रयोगानुपगमे क्त्वाप्रत्ययस्य कुत्र शक्तिः ? नच तदा ध्वंस एव शक्तिः । तस्य स्वाधिकरणक्षणोत्पत्तिकत्वरूपस्वसमानकालीनोत्पन्नत्वसम्बन्धेन समभिव्याहृतक्रियायामन्वयः । प्रकृत्यर्थश्च 'तत्' प्रतियोगित्वसम्बन्धेन प्रकारः। चैत्रो भुक्त्वा व्रजतीत्यादौ भोजनसमानकर्त्तृकं यद्भोजनध्वंससमकालोत्पन्नं गमनं तदनुकूलकृतिमांश्चैत्र इत्यन्वय इति वाच्यम् । स्थित्वा पश्यति स्थित्वा भुंक्ते इत्यादौ तथान्वयबोधासम्भवाद्दर्शनभोजनानन्तरमपि स्थितेः सत्त्वादिति चेत् । तर्हि क्त्वाप्रत्ययस्य पूर्वकाल एव शक्तिः। सामान्यतः कालत्वमेव शक्यतावच्छेदकं न तु पूर्वकालत्वम् आनन्तर्यसम्बन्धेन समभिव्याहृतक्रियायामन्वयः । आनन्तर्यं च स्वध्वंसाधिकरणक्षणोत्पत्तिकत्वं प्रकृत्यर्थकालेऽधिकरणतासम्बन्धेन विशेषणतयाऽन्वेति । एवं च भुक्त्वा व्रजतीत्यत्र भोजनसमानकर्त्तृकं यद्भोजनाधिकरणकालानन्तरङ्गमनन्तदनुकूलकृतिमानिति बोधः । अतएव 'समानकर्त्तृकयोः पूर्वकाले' इत्यनुशासनमपि साधु सङ्गच्छते । वस्तुतस्तु क्त्वाप्रत्ययस्य कृतावेव शक्तिः । प्रागभावत्वादिकमपेक्ष्य जातित्वेन कृतित्वस्य लघुत्वात्, स्वाश्रयकर्त्तृकत्वरूपपरम्परासम्बन्धेन समभिव्याहृतक्रियायां तदन्वयः, प्रागभावे पूर्वकाले वा निरूढलक्षणा, भुक्त्वा व्रजतीत्यत्र भोजनानुकूलकृत्याश्रयकर्त्तृकं यद्भोजनकालीनप्रागभावप्रतियोगि भोजनाधिकरणकालानन्तरं वा गमनं तदनुकूलकृतिमानित्यन्वयबोधः। स्थित्वा रथो गच्छतीत्यादावचेतने रथो गच्छतीत्यादाविवाश्रयत्वादौ निरूढलक्षणा । तस्य चाश्रितत्वादिसम्बन्धेन समभिव्याहृतक्रियायामन्वयः । यत्तु-क्त्वाप्रत्ययार्थकृतेरप्याश्रयतासम्बन्धेन कर्त्तर्यवान्वयः, तथाच भोजनानुकूलकृतिमांश्चैत्रो भोजनकालीनप्रागभावप्रतियोगिगमनानुकूलकृतिमानित्यन्वयबोधः, तावतापि समानकर्त्तृकत्वलाभादिति-तन्न। भुक्त्वा व्रजनमित्यादौ कर्त्तृकत्वालाभापत्तेः । केचित्तु भुक्त्वा व्रजती-

अनुमितिहेत्वित्यस्याऽनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यर्थः । व्याप्तिज्ञान इत्यत्र च विषयत्वं सप्तम्यर्थः, तथाचानुमाननिष्ठप्रामाण्यानुमिति-

---

ननु व्याप्तिस्वरूपन्निरूपयतीत्येव कथं नोक्तम्, अर्थाऽबाधेऽप्यधिकलेखनस्यायुक्तत्वादिति चेन्न । व्याप्तिस्वरूपविषयकज्ञानानुकूलव्यापारानुकूलवर्त्तमानकृतेरेव वाक्यार्थतया स्वमते प्रतियोग्यसमानाधिकरणेत्यादेरेव व्याप्तिस्वरूपत्वात्तद्विषयकनिरूपणानुकूलकृतेर्वर्त्तमानकालीनत्वाभावेन निरूपयतीत्यस्याऽसङ्गतत्वापातादिति ।

नन्वेवमपीदानीन्तनाऽऽद्यकृतेः सिद्धान्तभूतव्याप्तिस्वरूपनिरूपणाननुकूलतयाऽसङ्गतिर्दुर्वारैव, व्याप्तिस्वरूपनिरूणस्य सिद्धान्तव्याप्तिनिरूपणमात्रपरत्वे नन्वित्यादिनेति तृतीयार्थाऽभेदान्वयासङ्गतिश्चेति चेन्न । परमतनिराकरणपूर्वकत्वविशिष्टो व्याप्तिस्वरूपविषयकज्ञानानुकूलो व्यापारो व्याप्तिस्वरूपनिरूपणपदार्थः । तथाच नन्वित्यादिग्रन्थस्यापि निरूपणपदार्थतया तद्विषयकाऽऽद्यकृतेर्व्याप्तिस्वरूपनिरूपणानुकूलत्वमक्षतमेव, तथा चोक्तं गदाधरेण— 'पूर्वपक्षाभिधानतत्खण्डनयोरपि तदारम्भणरूपतेति' ध्येयम् ।

अथ परमतनिराकरणपूर्वकसिद्धान्तकथनं यदि निरूपणम्, तदोक्ततृतीयार्थाभेदान्वयानुपपत्तितादवस्थ्यं, नन्वित्यादिपूर्वपक्षाभिधानस्य निरूपणानन्तर्गतत्वात् । एवं पक्षधर्मता निरूप्यते इत्यादावपि निरूप्यते इत्यस्यासङ्गतिर्दुर्वारैव, प्रथमतस्तत्रापि पूर्वपक्षस्यैवाभिधानात् । नच पूर्वपक्षनिरूपणसिद्धान्तनिरूपणसाधारणं निरूपणत्वं कथञ्चिन्निर्वचनीयम्, तथाच तद्ग्रन्थसङ्गतिरिति वाच्यम् । तदाऽत्रापि निरूपयतीत्येव वक्तव्यं स्यात्, युक्तेस्तौल्यादिति चेन्न । यतोऽपठितपूर्वग्रन्थानां झटिति नन्वित्यादि ग्रन्थाध्ययने प्रवृत्त्यर्थमारभत इत्युक्तम् । निरूपयतीत्युक्त्या तु नारम्भो लभ्यते, कतिपयनिरूपणोत्तरमपि निरूपयतीति व्यवहारसंभवात्, पक्षताग्रन्थे तु व्याप्तिनिरूपणानन्तरमित्यभिधानादेव पक्षतानिरूपणारम्भलाभसंभवादारभ्यत इति नोक्तमिति विभावनीयम् ।

मूलार्थं सोपपत्तिकमाह अनुमितीति । (१)अनुमानं प्रमाणं प्रमितिकरणतावच्छेदकरूपवत्त्वात् इन्द्रियवत् इत्याकारिकानुमितिरित्यर्थः । अनुमितौ हेतुरनुमितिहेतुरिति सप्तमीतत्पुरुषः समासः । अनुमितिकारणमित्यर्थः । व्याप्तिज्ञानम्=व्याप्तिप्रकारकं ज्ञानम्, परामर्श

---

त्यादौ व्रजनप्रागभावकालीनं व्रजनोत्पत्तिकालीनध्वंसप्रतियोगिकालानिष्ठं वा यद्भोजनन्तत्समानकर्त्तृकव्रजनानुकूलकृतिमानित्यन्वयबोधः शक्तिर्लक्षणा च पूर्ववदेव । नचैकस्वार्थविशेषितापरपदार्थान्वितस्वार्थान्तरबोधकत्वमव्युत्पन्नमिति वाच्यम् । तादृशव्युत्पत्तौ मानाभावात् । अन्यथा स्वर्गकामो यजेतेत्यादौ इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इति प्रथमान्तार्थमुख्यविशेष्यकान्वयबोधानुपपत्तेः, घटो भविष्यति नंक्ष्यतीत्यादौ चानागतोत्पत्त्याश्रयो घटः अनागतोत्पत्तिकनाशप्रतियोगी घट इत्यन्वयबोधानुपपत्तेश्च । तत्र प्रत्ययार्थयोरनागतत्वा-श्रयत्वयोरनागतोत्पत्तिकत्वप्रतियोगित्वयोर्धात्वर्थमन्तराकृत्यैवान्वयादित्याहुः । तदसत् । सङ्ख्याकालेष्टसाधनताद्यतिरिक्तप्रत्ययार्थस्य प्रकृत्यर्थविशेष्यतयैवान्वय इति व्युत्पत्तिविरोधापत्तेः । नच क्त्वाप्रत्ययार्थातिरिक्तस्थले एव तथा व्युत्पत्तिरिति वाच्यम् । असङ्कोचेनैवोपपत्तौ सङ्कोचस्यान्याय्यत्वादिति सङ्क्षेपः । अधिकं रहस्येनुसन्धेयम् ।

(१) अनुमानं व्याप्तिज्ञानमित्यर्थः । एतेनानुमानं यद्यनुमितिकरणं तदाऽऽश्रयासिद्धिः परमतेऽनुमितिकरणस्याप्रसिद्धेः, यदि धूमादि तदा बाधो व्याप्तिज्ञानस्यैव सिद्धान्ते प्रमाणत्वादिति निरस्तम् । व्या-

हेतुव्याप्तिज्ञानविषयीभूता व्याप्तिः केत्यर्थः। अनुमाननिष्ठप्रामाण्यानुमितिहेत्वित्यनेन व्याप्तेरनुमानप्रामाण्योपपादकत्वकथनादनुमानप्रामाण्यनिरूपणानन्तरं व्याप्तिनिरूपणे उपोद्घात एव सङ्गतिः सूचिता। उपपादकत्वं चात्र ज्ञापकत्वम्।

---

इति यावत्। अनुमितिहेतुश्च तद्व्याप्तिज्ञानं चेति कर्मधारयः। सप्तम्यर्थो विषयत्वम्। किंशब्दार्थश्च स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मप्रकारकजिज्ञासाविषयः। व्याप्तिपदं च व्याप्तिपदार्थत्वावच्छिन्ने लाक्षणिकम्। व्याप्तिपदार्थश्च पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकारतारूपविलक्षणविषयताश्रयः, अनुमितिजनकस्य तादात्म्येन व्याप्तिज्ञानेऽन्वयः। धनवान् सुखीतिवत् असति बाधके विशेष्यतावच्छेदके विशेषणप्रयोजकत्वभाननियमाद् व्याप्तिविषयतायामनुमितिप्रयोजकत्वं लभ्यते, तच्चावच्छेदकत्वरूपम्। अथवाऽनुमितिजनकत्वस्यावच्छेदकतया विषयतायामन्वयः। मूले **नन्विति** प्रश्ने। तथा च अनुमितिजनकतावच्छेदकनिरुक्तविषयताश्रयव्याप्तिपदार्थत्वप्रकारकजिज्ञासाविषयाभिन्नो व्याप्तिपदार्थः क इति मूलवाक्याद्बोधः।

ननु व्याप्तिज्ञाने का व्याप्तिरित्यस्य का व्याप्तिरित्यस्यैव वा सम्यक्त्वेऽलं ज्ञान इत्यन्तेनेत्यत आह—अनुमाननिष्ठेति। अनुमानविशेष्यकप्रामाण्यप्रकारकानुमितिहेत्वित्यर्थः। **अनुमानप्रामाण्योपपादकत्वकथनात्** अनुमानप्रामाण्यविषयकानुमितिजनकज्ञानाविषयत्वकथनादित्यर्थः। **सङ्गतिः सूचितेति**। तथाच का व्याप्तिरित्यभिधानेऽनुमानप्रामाण्योपपादकत्वलक्षणोपोद्घातसङ्गतिलाभो न स्यात् अतो ज्ञान इत्यन्तमिति भावः। अनुमित्युपपादिका व्याप्तिः केत्यभिधाने व्याप्तिः कथमनुमित्युपपादिकेत्याकाङ्क्षानिवर्त्तकस्य वक्तव्यतापत्तिरत उक्तमनुमितिहेतुव्याप्तिज्ञान इति।

नन्वेवमनुमितिहेतुज्ञान इत्यस्यैव सम्यक्त्वे व्याप्तिज्ञान इत्यनेन पुनरुक्तिर्व्यर्थेति चेन्न। अनुमित्यनुपपादकस्याप्यनुमितिहेतुसमूहालम्बनज्ञानविषयतयाऽनुमित्युपपादकत्वबोधासम्भवात्। तदुक्तौ चोक्तयुक्त्या व्याप्तिविषयतायामनुमितिजनकतावच्छेदकत्वात्मकप्रयोजकत्वलाभेन जनकतावच्छेदके तत्रोपपादकत्वलाभसम्भवात्।

सङ्गतिसामान्यलक्षणन्तु—अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानाविषयत्वम्, यन्निरूपणाव्यवहितोत्तरनिरूपणप्रयोजिका या जिज्ञासा तज्जनकज्ञानविषयो यो धर्मः स तन्निरूपितसङ्गतिरित्यर्थकम्। प्रकृते चानुमानप्रामाण्यनिरूपणान(१)न्तरव्याप्त्यभिधानप्रयोजिका या जिज्ञासा, सा चानुमानप्रामाण्योपपादकज्ञानं जायतामित्याकारिका, तज्जनकं यद् ज्ञानं, तच्चोपपादकज्ञानं मदिष्टसाधनमिति ज्ञानं, तद्विषयत्वमुपपादकत्वे इति समन्वयः।

---

प्तिज्ञानत्वेन पक्षत्वे परमतेऽयोग्योपाधिशङ्कया सर्वत्रैव व्यभिचारसंशयसत्त्वाद् व्याप्तिनिश्चयानुत्पादेपि न क्षतिः, संशयात्मकव्याप्तिज्ञानस्यैव प्रसिद्धेः। अवच्छेदावच्छेदेन पक्षत्वादंशतो बाधेऽपि न क्षतिरिति ध्येयम्।

(१) इदमत्रावधेयम्। अनुमानप्रमाणग्रन्थव्याप्तिग्रन्थयोरेकवाक्यताप्रतिपत्तये सङ्गतिप्रदर्शन-

मावश्यकम् । एकवाक्यत्वं चैकप्रयोजनप्रयोजनकप्रतिपत्तिविषयार्थकत्वम्, पूर्वग्रन्थार्थप्रतिपत्तिप्रयोजनप्रयोजनकप्रतिपत्तिविषयार्थकत्वमिति यावत् । प्रयोजनं प्रामाण्यसिद्धिः, परंपरया मुक्तिर्वा । एकवाक्यताप्रतिपत्तौ च सङ्गतिप्रदर्शनं लिङ्गज्ञानविधया हेतुः । यद्यत्सङ्गतिमत्प्रतिपादकवाक्यं भवति तत्तत्प्रतिपादकग्रन्थेनैकवाक्यं भवतीति व्याप्तेः । नचैतादृशैकवाक्यताप्रतिपत्तेः प्रकृते क उपयोग इति वाच्यम् । अनुमानप्रमाणग्रन्थप्रयोज्यफलेच्छावतो व्याप्तिग्रन्थप्रवृत्तावुपयोगित्वात् । नच जिज्ञासाया अभिधानप्रयोजकत्वे मानाभाव इति वाच्यम् । प्रथमतोऽनुमानप्रामाण्यस्योपपाद्यत्वज्ञानमनुमानप्रामाण्यं कस्यचिदुपपाद्यमित्याकारकन्ततोऽनुमानप्रामाण्योपपादकत्वेन सामान्यतस्तदुपपादकज्ञानन्ततः सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारजिज्ञासाजनकत्वाद्विशेषतोऽनुमानप्रामाण्योपपादकज्ञानं भवत्वितीच्छा सैव च किमस्योपपादकमित्याकारिका । ततः शिष्यस्य किमस्योपपादकमिति शब्दप्रयोगः । ततः शिष्याजिज्ञासाज्ञानन्ततस्तदिष्टसाधनत्वेन विशेषतो व्याप्त्यादिरूपानुमानप्रामाण्योपपादकबोधकानां वाक्यानां ज्ञानात्तत्रेच्छा ततः कण्ठक्रियानुकूला प्रवृत्तिः ततोभिधानमिति क्रमेण जिज्ञासायाः अभिधानप्रयोजकत्वम् ।

नच प्रयोजकान्तं व्यर्थमिति वाच्यम् । जिज्ञासुमेकं पुरुषं प्रति सङ्गतमपि यदभिधानमसङ्गतमेवाजिज्ञासुं प्रति तद्, अतो यं प्रतिपादयितुमनन्तराभिधानन्तादृशाभिधानप्रयोजकतत्पुरुषीयजिज्ञासाजनकज्ञानविषयोर्थ इति सङ्गतिलक्षणशरीरे तत्पुरुषीयत्वनिवेश आवश्यकः । एवं च प्रयोजकान्तानुपादाने यस्य पुंसो यन्निरूपणानन्तरमन्याभिधानानन्तरमेव यद्धर्मावच्छिन्नस्य विशेषजिज्ञासा तादृशजिज्ञासाजनकज्ञानविषयस्य प्रथमनिरूपितसङ्गतित्वापत्तेः । अनन्तराभिधानप्रयोजकज्ञानविषयत्वमात्रस्य निवेशे पटादिकन्निरूप्य प्रतिपाद्यस्य जिज्ञासामन्तरेणैव यत्राजिज्ञासितासम्बद्धघटाभिधानं केनचित्कृतं तत्रास्य घटज्ञानं भवत्वित्याकारकेच्छाजनकीभूतवक्तृज्ञानविषयघटत्वादावतिप्रसङ्गस्तादृशज्ञानस्यापि घटादिबुबोधयिषाद्वारा पटाभिधानानन्तरघटाभिधानप्रयोजकत्वादतस्तत्प्रयोजकजिज्ञासाजनकेति । परकीयज्ञानगोचरेच्छा न जिज्ञासा, किन्तु ज्ञातुमिच्छा जिज्ञासेति व्युत्पत्त्या स्वी*यज्ञानगोचरेच्छाया एव तत्त्वादिति । अनुमानप्रामाण्योपपादकज्ञानस्य यत्फलं सुखादि तद्गोचरज्ञानस्यापि तादृशजिज्ञासाप्रयोजकत्वात्तद्विषयसुखादावतिव्याप्तिरतो जिज्ञासाप्रयोजकत्वमुपेक्ष्य जिज्ञासाजनकत्वमुक्तम्, एवं च फलज्ञानस्य फलेच्छां प्रति कारणत्वादुपायेच्छां प्रत्यन्यथासिद्धत्वेन जनकत्वाभावात् फलेच्छाया उपायेच्छां प्रति कारणत्वात्तादृशजिज्ञासाजनिकायाः फलेच्छाया विषये फलेऽनिव्याप्तितादवस्थ्यमतो ज्ञानपदम् ।

ननु ज्ञानगोचरेच्छा जिज्ञासा तत्र ज्ञाननिष्ठेष्टसाधनताज्ञानं हेतुरिति तद्विषयेष्टसाधनत्वेऽतिव्याप्तिः । नच तस्य कारणतारूपसङ्गतित्वेन लक्ष्यत्वैवास्त्विति वाच्यम् । निरूप्यनिष्ठकारणत्वादीनामेव सङ्गतित्वात्तदुपपादकज्ञाननिष्ठेष्टसाधनत्वस्य सङ्गतित्वविरहादिति चेन्न ( विशेष्यतासम्बन्धेनेच्छां प्रति विशेष्यतासम्बन्धेनेष्टसाधनताज्ञानस्य कारणत्वेन तत्रातिव्याप्तिविरहात् । विशेष्यतासम्बन्धेनेष्टसाधनताज्ञानस्येष्टसाधनत्वे विरहात् यज्ज्ञानमित्यत्र यत्प्रकारकेत्यभिधानाच्च नोपपादकादौ धर्मिण्यतिव्याप्तिरिति । अथवा ) जनकज्ञानविषयेत्यनेन जनकीभूतेष्टसाधनताज्ञानीयज्ञाननिष्ठविशेष्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वात्मकविषयतया विवक्षितत्वान्नेष्टसाधनत्वे कार्यादौ धर्मिणि वाऽतिव्याप्तिः । एतादृशविषयताविशेषलाभायैवार्थपदम् । तादृशविषयतापर्याप्त्यधिकरणत्वं विवक्षणीयन्तेनोपजीवकत्वघटकोत्तरवर्त्तित्वादिवारणमिति दिक् ।

प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणे किमनुमानमिति जिज्ञासा प्रयोजिका ननु प्रत्यक्षोपजीवकं किमिति जिज्ञासा । तथाचोपजीवकत्वादौ सङ्गतित्वसङ्गमनार्थमनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धः सङ्गतिः । ननु कार्यत्वाद्यन्यतमत्वं सङ्गतित्वं लाघवात्कथन्नोक्तमिति चेन्न । प्रमेयनिरूपणानन्तरम्प्रमेयवान्किमिति जिज्ञासया यत्र प्रमेयवान्निरूपितस्तत्र प्रमेयरूपायां

* धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्राद्धात्वर्थेन समानकर्तृकायां स्वविषयिकायां चेच्छायां सनो विधानात् । तथाच ज्ञानविशिष्टेच्छा जिज्ञासा । वै० स्वनिरूपितविषयितावत्त्वस्वसमवायिसमवेतत्वोभयसम्बन्धेनेति ।

केचित्तु अनुमितिपदमनुमितिनिष्ठेतरभेदानुमितिपरम्, तथाचानुमितिनिष्ठेतरभेदानुमितौ यो हेतुः प्रागुक्तव्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वरूपस्तद्घटकं यद्व्याप्तिज्ञानं तदंशे विशेषणीभूता व्याप्तिः केत्यर्थः । घटकत्वार्थकसप्तमीतत्पुरुषसमासात्, तथाच प्रागुक्तानुमितिलक्षणोपोद्घात एव सङ्गतिरनेन सूचितेत्याहुः ।

---

पूर्वमनुमितिलक्षणं कृतमतो लक्षणनिरूपिता सङ्गतिरप्यस्तीत्याह केचित्त्विति । व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वमनुमितिलक्षणमुक्तम् । लक्षणस्येतरभेदानुमितिः प्रयोजनं व्यवहारश्च । तदुक्तं—'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति' । व्यावृत्तिरितरभेदानुमितिः । तथाच मूलस्थानुमितिपदेनानुमितिविशेष्यकस्वेतरभेदप्रकारकानुमितिर्ग्राह्येति भावः । तथा चानुमितिः स्वेतरभिन्ना व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यज्ञानत्वादिति फलितम् । अत्र हेतौ व्याप्तिप्रकारकत्वानुपादाने धूमवान्पर्वत इत्याकारककेवलपक्षधर्मताज्ञानजन्ये तदनु-

---

प्रसङ्गसङ्गतावव्याप्तेः । प्रमेयभेदाऽप्रसिद्ध्या तदन्यतमत्वस्य तत्र दुर्वचत्वापत्तेरिति ध्येयम् । सा च सङ्गतिः षट्प्रकारा । तथाहि "सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैक्यकार्यत्वे षोढा सङ्गतिरिष्यते ॥ इति

१ प्रसङ्गत्वन्तूपोद्घातादिपञ्चकभिन्नत्वे सति सङ्गतित्वम् । स्मृतस्योपेक्षानर्हत्वमिति प्रसङ्ग इति लक्षणेऽपि स्मृतत्वमनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम् । उपेक्षार्हा ये उपोद्घातादयस्तदन्यत्वम् । अतः प्रागुक्तस्यैवार्थस्य लाभः । तेनाधारत्वाधेयत्वघटत्वादीनां सङ्गतिलक्षणाक्रान्ततयाऽत्रैवान्तर्भाव इति । यद्यपि भेदमनिवेश्य सर्वा सङ्गतिः प्रसङ्ग एवान्तर्भावयितुं शक्यते तथापि विभाजकस्य स्वतन्त्रेच्छतया न पर्यनुयोगावसरः ।

२ हेतुत्वं कारणत्वम् । हेतुतापदमजहत्स्वार्थवृत्त्याकार्यत्वकारणत्वोभयसाधारणेन केनचिद्धर्मेणोभयपरम् । अतो न षोढात्वव्याघातः ।

३ अवसरस्तु विषयसिद्ध्या प्रतिबन्धकीभूतजिज्ञासानिवृत्तावनन्तरमवश्यवक्तव्यत्वम् ।

४ निर्वाहकैक्यम्-एकनिर्वाहकनिर्वाह्यत्वम् । तदन्यत्वे सति तन्निर्वाह्यत्वम् । तदन्यत्वे सति तत्प्रयोजकप्रयोज्यत्वमिति यावत् । निर्वाहकत्वम्प्रयोजकत्वम् ।

५ कार्यैक्यम्-तदन्यत्वे सति तत्प्रयोज्यकार्यप्रयोजकत्वम् । निर्वाहकैककार्यत्वेइत्यपि पाठः । एककार्यं यस्येति व्युत्पत्त्या एककार्यकारित्वमित्येककार्यत्वस्यार्थो बोध्यः ।

६ उपोद्घातश्च 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' । प्रकृतसिद्ध्यर्थां-प्रकृतोपपादकविषयिणीम् । किमस्योपपादकमित्याकारिकां चिन्तां, जिज्ञासामुपोद्घातमुपोद्घातसङ्गतिनिर्वाहिकां विदुरित्यर्थः । अथवा 'कृदभिहितो भावोद्रव्यवत्प्रकाशते' इति न्यायेन चिन्तापदं चिन्तनीयपरम् प्रकृतसिद्ध्युपपादकतया चिन्तनीयत्वमित्यर्थः । तथाचार्थद्वयेपि प्रकृतसिद्ध्युपपादकत्वमुपोद्घात इति फलितार्थः । प्रकृते प्रकृतसिद्धिः-प्रामाण्यसिद्धिः, तदुपपादकत्वं व्याप्तौ सामान्यलक्षणेऽनुमानप्रामाण्योपपादकं किमिति जिज्ञासामादायोपपादकत्वे लक्षणसमन्वयः । सर्वासु सङ्गतिषु सामान्यलक्षणं तत्सङ्गतिप्रकारकजिज्ञासा ग्राह्या । अत्रेदं बोध्यम् । उपपादकत्वं क्वचिद् घटकत्वरूपं यथा व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमित्यत्राऽज्ञातव्याप्तिकस्यसामान्यतो व्याप्तिपदवाच्यत्वेन का व्याप्तिरित्याकारिकायां जिज्ञासायां व्याप्तिनिरूपणम् । एवमुपस्थापकत्वरूपमपि । यथेन्द्रियाऽसन्निकृष्टे पर्वतीयधूमे व्याप्तिविशिष्टत्वज्ञानं न तदुपस्थापकं विनेति तदुपस्थापकं किमिति जिज्ञासायां सामान्यलक्षणानिरूपणम् । ज्ञापकत्वरूपमपिक्वाचित्! यथा प्रकृतेऽनुमानप्रामाण्योपपादकत्वं व्याप्तौ । ज्ञापकत्वं च तद्विषयकज्ञानजनकज्ञानविषयत्वम् । प्रामाण्यविषयकज्ञानजनकं यद्व्याप्तिज्ञानन्तद्विषयत्वं व्याप्ताविति संक्षेपः ।

**न तावदव्यभिचरितत्वम्, तद्धि न साध्याभाववदवृत्तित्वम्१ साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्२ साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्३ सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्४ साध्यवदन्यावृत्तित्वं५ वा, केवलान्वयिन्यभावादिति ।**

न तावदिति । 'तावद्'वाक्यालङ्कारे। अव्यभिचरितत्वं–अव्यभिचरितत्वपदप्रतिपाद्यम्। तत्र हेतुमाह तद्धीत्यादि । हि यस्मात्, तत्—अव्यभिचरितत्वशब्दप्रतिपाद्यम्, नेति सर्वस्मिन्नेव लक्षणे सम्बध्यते, तथाच व्याप्तिर्यतः साध्याभाववदवृत्तित्वादिरूपाऽव्यभिचारितत्वशब्दप्रतिपाद्यस्वरूपा न अतोऽव्यभिचरितत्वशब्दप्रतिपाद्यस्वरूपा नेत्यर्थः पर्यवसितः । विशेषाभावकूटस्य सामान्याभावहेतुता प्रसिद्धैवेति न नञ्द्वयोपादानन्निरर्थकम् ।

व्यवसाये धूमवत्पर्वतवान्देश इति विशिष्टवैशिष्ट्यबोधे च व्यभिचारः स्यादतो व्याप्तिप्रकारकत्वोपादानम्। वह्निव्याप्यो धूम इति केवलव्याप्तिप्रकारकज्ञानजन्ये वह्निव्याप्यधूमवान्पर्वत इति ज्ञाने व्यभिचारवारणाय पक्षधर्मतेति। परामर्शजन्ये संस्कारे व्यभिचारवारणाय चरमज्ञानपदम्। प्रथम ज्ञानपदं च निश्चयत्वावच्छिन्नपरम् तेन परामर्शानुव्यवसाये न व्यभिचारः, विशिष्टबुद्धौ विशेषणज्ञानस्य ज्ञानत्वेनैव कारणत्वात् । ननु दण्डो रक्तो नवेति संशये रक्तदण्डवानिति ज्ञानानुदयाद्विशेषणज्ञानस्य निश्चयत्वेनैव कारणत्वं वाच्यम्, एवञ्च व्यभिचारस्तदवस्थ एव । नच चरमज्ञानेऽभावाविषयकत्वं निवेशनीयं, परामर्शानुव्यवसायस्य व्याप्तिविषयकतयाऽभावविषयकत्वान्न दोष इति वाच्यम्। अभावविषयकानुमितौ भागासिद्ध्यापत्तेः तादृशानुमितेरभावाविषयकत्वादिति चेन्न । साध्यतावच्छेदकावच्छिन्नविषयतानिरूपितव्याप्तिवि(१)षयतानिरूपितहेतुविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावदभावाविषयकज्ञानवृत्तिप्रत्यक्षासमवेतधर्मसमवायित्वस्य हेतुत्वान्न कोऽपि दोषः । वस्तुतस्तु निश्चयत्वमभावाविषयकत्वं वा न निवेश्यं प्रयोजनाभावादित्यन्यत्र विस्तरः। सप्तमीतत्पुरुषेति। अनुमितिहेतौ व्याप्तिज्ञानमित्यनुमितिहेतुव्याप्तिज्ञानमित्याकारकेत्यर्थः । तथाचात्र घटकत्वरूपमुपपादकत्वं पूर्वोक्तं वेदितव्यम् ।

मूलेऽनुयोगिवाचकपदाभावाद्व्याप्तिरिति पदं प्रश्नस्थ(२)मनुषञ्जनीयम्, तथाच व्याप्तिः अव्यभिचरितत्वशब्दप्रतिपाद्याभिन्ना साध्याभाववदवृत्तित्वरूपाव्यभिचरितत्वशब्दप्रतिपाद्य-

(१) व्याप्तिविषयता अपि निरूप्यनिरूपकभावापन्ना एव ग्राह्याः । तेन व्याप्तिभ्रमाधीनानुमितौ न हेतोरसत्त्वम् ।

(२) नेदीयस्थानान्तरस्थस्यानुसन्धानमनुषङ्गः । दवीयस्थानान्तरस्थस्यानुसन्धानमनुवृत्तिः । सा च सिंहावलोकितमण्डूकप्लुतिगङ्गास्रोतोवदिति त्रिधा । अध्याहारस्त्वश्रुतपदस्यानुसन्धानमितरयोस्तु श्रुतपदस्यैवेति विशेषः ।

भेद—साध्यवद्भिन्नसाध्याभाववदवृत्तित्वरूपाव्यभिचरितत्वशब्दप्रतिपाद्यभेद—साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यरूपाव्यभिचरितत्वशब्दप्रतिपाद्यभेद—सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वरूपाव्यभिचरितत्वशब्दप्रतिपाद्यभेद —साध्यवदन्यावृत्तित्वरूपाव्यभिचरितत्वशब्दप्रतिपाद्यभेदकूटवत्त्वादित्यनुमानं मूलाभिप्रेतम् । न चाप्रयोजकम् । यो यदीययावद्विशेषाभाववान् स(१)तत्सामान्याभाववानिति वक्ष्यमाणव्याप्तेः प्रयोजकत्वात् ।

---

(१) नन्विदं सर्वं तदा स्याद्यदि सामान्याभावे मानं स्यात्तत्रैव मानं नास्ति। न च सिद्ध्यसिद्धिभ्यां व्याघात इति वाच्यम् । रूपत्वं तत्तद्रूपाभावप्रतियोगितावच्छेदकं न वेति विप्रतिपत्तेः । तत्राभावाधिकरणकाभावस्यातिरिक्तत्वानभ्युपगमे सामान्याभाववादिनयेऽभावकोटौ बाधः रूपत्वावच्छिन्नप्रतियोगिताकसामान्याभावे तत्तद्रूपं नास्तीति तत्तद्रूपाभावस्य रूपसामान्याभावाभिन्नतया रूपत्वस्य तत्प्रतियोगितावच्छेदकत्वात् । तन्मते तु रूपत्वावच्छिन्नप्रतियोगिताकत्वं किञ्चिद्देशावच्छिन्नवृत्ति न वेति विप्रतिपत्तिः सम्भवति सामान्याभावानभ्युपगन्तृनये विशेषाभावकूटेषु रूपत्वावच्छिन्नप्रतियोगिताकत्वं रूपानाधिकरणदेशावच्छेदेन वर्त्तते नतु रूपाधिकरणदेशावच्छेदेनेति तन्मते विधिकोटिः पक्षवृत्तिः । रूपत्वावच्छिन्नप्रतियोगिताकत्वं तत्तद्रूपाभावातिरिक्ताभावनिरूपितविशेषणताग्राह्यं न वेति विप्रतिपत्तिः । नन्वतिरिक्तसामान्याभावे किं मानं रूपं नास्तीतिबुद्धेर्विशेषाभावकूटविषयकत्वेन निर्वाहात् । न चातिरिक्ताभावाभावे वायुविशेष्यकतत्तद्रूपाभावनिर्णये वायुविशेष्यकरूपतदभावकोटिकसंशयो न स्यात्तन्निश्चये तत्संशयायोगादिति वाच्यम् । तत्र रूपत्वेन घटादिकोटिकसंशयोत्पादात् । न च रूपान्यत्र रूपं,द्रव्यं न रूपामिति विशेषदर्शनदशायामपि तादृशसंशयोदयात्तदानीं घटे रूपत्वभ्रमायोगादिति वाच्यम् । रूपत्वेन रूपकोटिकसंशये रूपत्वावच्छिन्नप्रतियोगिताकत्वेन रूपेणाभावनिश्चयो विरोधी न तत्प्रतियोगिकाभाववत्ताज्ञानत्वेन, अन्यथा प्रमेयत्वेन तन्निश्चये तत्संशयो न स्यात् तथाच तद्रूपेणाभावानिश्चये तत्संशये बाधकाभावात् । न च समानविषयकत्वेन प्रतिबध्यप्रतिबन्धकभावाभ्युपगमात्कथं संशय इति वाच्यम् । तादृशसंशयस्य सामान्याभावाभ्युपगमेऽप्यनिर्वाहात् । तत्तद्रूपप्रतियोगिताकाभावनिश्चयरूपस्य प्रतिबन्धकस्य सत्त्वात् । नच विशेषाभावस्य रूपत्वावच्छिन्नप्रतियोगिताकत्वाभ्युपगमे रूपविशेषाभाववति रूपं नास्तीति बुद्ध्यापत्तिरिति वाच्यम् । तस्य व्यासज्यवृत्तित्वाङ्गीकारात् तथाच व्यासज्यवृत्तिधर्मप्रत्यक्षे यावदाश्रयसन्निकर्षस्य हेतुत्वात् यत्किञ्चिद्रूपवति न तथा प्रत्ययः, तादृशप्रतियोगिताकत्वाश्रयीभूततत्तद्रूपाभावस्य तत्रासत्त्वात् यावदाश्रयसन्निकर्षाभावात् । न च व्यासज्यवृत्तिधर्मस्य संसर्गमर्यादया भाने न यावदाश्रयसन्निकर्षापेक्षा, तथा चैकाभावसन्निकर्षे संसर्गमर्यादया रूपत्वावच्छिन्नप्रतियोगिताकत्वस्य प्रत्यक्षापत्तिरिति वाच्यम् । व्यासज्यवृत्तिधर्मनिरूपितलौकिकविषयताशालिप्रत्यक्षत्वस्य यावदाश्रयसन्निकर्षजन्यतावच्छेदकत्वोपगमात्, तथाच संसर्गमर्यादया भानेपि तस्य कारणत्वकल्पनातदभावेन तत्प्रत्यक्षोत्पत्त्यभावात् । यदि च संयोगादेः संसर्गमर्यादया भाने न यावदाश्रयसन्निकर्षापेक्षा, तदा तत्र मास्तु, तादृशप्रतियोगिताकत्वरूपव्यासज्यवृत्तिधर्मग्रहे पुनरस्त्येव यावदाश्रयसन्निकर्षापेक्षा संयोगादिसाधारणव्यासज्यवृत्तित्वस्य ऐक्याभावेनैककार्यकारणभावाभावात् । अत एव व्यासज्यवृत्तिधर्मग्रहे यावदाश्रयभेदज्ञानं हेतुस्तदग्रहे तदभावात् , तथाच यावद्विशेषाभावानामेकदोपस्थित्यभावेन तत्तद्भेदाग्रहात्कथं तत्प्रत्यक्षमिति परास्तम् । एतत्प्रत्यक्षे आश्रयभेदज्ञानानामपेक्षाभावात् । नच यदि एतत्प्रत्यक्षे आश्रयभेदज्ञानं न हेतुस्तदाऽधिकरणानामभेदग्रहे तत्प्रत्यक्षापत्तिरिति वाच्यम् । तदभेदाग्रहाभावस्य हेतुत्वाभ्युपगमात् । नच तस्य व्यासज्यवृत्तित्वे यावदाश्रयसन्निकर्षकारणत्वकल्पनापेक्षया सामान्याभावस्वीकारे लाघवमिति वाच्यम् । तस्य व्यासज्यवृत्तित्वाङ्गीकारेण पर्याप्तिसम्बन्धेन तादृशप्रतियोगिताकत्वविशिष्टत्वेनैव हेतुतया रूपवत्येकाभावसन्निकर्षे पर्याप्तिसम्बन्धेन तादृशप्रतियोगिताकत्वविशिष्टविशेषाभावकूटाभावादेव प्रत्यक्षवारेण यावदाश्रयसन्निकर्षे हेतुत्वाकल्पनेन लाघवेनातिरिक्तसामान्याभावस्य तत्र सामान्यधर्माऽवच्छिन्नप्रतियोगिताकत्वस्य च कल्पने गौरवात् । अथैवं सति सामान्याभावानङ्गीकारे यावद्विशेषाभावस्योक्तक्रमेण कारणत्वकल्पने गौरवम् । न चानन्ताभावनिष्ठकारणत्वकल्पेन न गौरवं कार्यकारणभावभेदस्त्ववच्छेद-

कभेदात्, प्रकृते च तद्भेदो नास्त्येव, अन्यथा अनन्तस्वरूपयोग्यदण्डनिष्ठकारणताकल्पनमपेक्ष्य फलोपधायकदण्डादिवृत्तिजनकतावच्छेदकतया जातिः कल्प्यतामिति वाच्यम्। भवन्मते रूपत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टसमवायावच्छिन्नप्रतियोगिताकत्वविशिष्टत्वेन हेतुत्वे विनिगमनाविरहेण गौरवतादवस्थ्यात्, मन्मते समवायावच्छिन्नप्रतियोगिताकवास्तवाभावनिष्ठतत्तद्व्यक्तित्वस्यावच्छेदकत्वात्। न चाभावनिष्ठतत्तद्व्यक्तित्वस्य तज्ज्ञानादिरूपतया विनिगमनाविरह इति वाच्यम्। अभावनिष्ठतत्तद्व्यक्तित्वस्य तत्तद्व्यक्तिस्वरूपतया तस्यैवावच्छेदकत्वात् ज्ञानरूपत्वे कारणताग्रहकाले उपस्थितिकल्पने गौरवम्। अभावस्वरूपत्वे तस्य कारणताग्रहदशायामुपस्थितिसत्त्वात्। न च तत्तद्व्यक्तित्वस्यावच्छेदकत्वेपि तस्य स्वरूपतो भानं न संभवति जात्यतिरिक्तपदार्थस्य स्वरूपतो भानानङ्गीकारादिति वाच्यम्। जात्यतिरिक्तपदार्थश्चान्यत्र स्वरूपतो न भासत इति तादृशप्रकारताशालिबोधे तत्तद्वृत्तिधर्मप्रकारकबोधसामग्र्या नियामकत्वेन तद्व्यक्तिरित्याकारकाविलक्षणप्रकारताशालिबोधे तस्या नियामकत्वानङ्गीकारात्। न चास्मन्मते समवायावच्छिन्नैकाऽतिरिक्तैव प्रतियोगिता, तथाच सैव निरूपकतयाऽवच्छेदिकेति वाच्यम्। तद्व्यक्तित्वेन प्रतियोगित्वानिष्ठमावच्छेदकत्वमपेक्ष्याऽभावनिष्ठतद्व्यक्तित्वस्यावच्छेदकत्वे लाघवात्। न च भवन्मतेऽभाववनिष्ठतत्तद्व्यक्तित्वस्य प्रतियोगित्वरूपतया एतत्प्रतियोगिताव्यक्तेरेव निरूपकतासम्बन्धेनावच्छेदकत्वमस्त्विति वाच्यम्। प्रतियोगितास्वरूपतद्व्यक्तित्वस्य ज्ञानरूपत्वादिकमादाय विनिगमनाविरहेणानन्त्यात्, मन्मतेऽभावनिष्ठतद्व्यक्तित्वस्याभावरूपत्वात् ज्ञानादिरूपत्वे उपस्थितिगौरवात्, भवन्मते प्रतियोगितास्वरूपज्ञानरूपयोरुपस्थितिकल्पनासामान्यात्।

केचित्तु सामान्याभावस्वीकारे तादिन्द्रियजन्यज्ञानप्रतिबन्धकताया तत्तदभावनिरूपितलौकिकविषयताशालिज्ञानत्वेन प्रतिबन्धकत्वापेक्षया एतदभावविषयताशालित्वेन तत्त्वे लाघवमित्याहुः। तन्न। अस्मन्मतेपि तावदभावत्वेन तदाश्रयत्वेनैक एवाभावः कल्प्यते, अन्यथा सर्वेषामेक एवाभावः कल्प्यतां तत्तदवच्छेदेन घटत्वावच्छिन्नप्रतियोगिताकत्वं कल्प्यतां तद्भेदोपि विलुप्येत। नन्वनन्ताधिकरणावच्छिन्नकत्वकल्पनमपेक्ष्यैक एवाभावः कल्प्यतामिति चेत्तुल्यं प्रकृतेऽपि। न चाभावकल्पनेऽपि अनन्तवाय्वाद्यधिकरणवृत्तित्वकल्पने गौरवमिति वाच्यम्। तस्य फलमुखत्वात् अन्यथाऽधिकरणरूपेण किमपराद्धं तादृशप्रतियोगिताकत्वस्य व्याप्यवृत्तित्वे अवच्छेदकमिश्रितसन्निकर्षकार्यकारणभावकल्पने गौरवम्। न च तदवच्छिन्नसन्निकर्षस्य संयोगादिसाधारणकार्यकारणभावबलादेव हेतुत्वं भविष्यतीति वाच्यम्। अवयवानामेव हि स्वमते तद्द्रव्यसंयोगावच्छेदकत्वं, न त्वन्त्यावयविनां, तत्समवेतद्रव्याभावात्। इत्थं च घटादेः संयोगावच्छेदकत्वानङ्गीकारादन्त्यावयविस्थले कार्यकारणभावकल्पनमेव गौरवम्, अन्यथा अन्त्यावयविनो घटादेरपि यावद्विशेषाभावाधिकरणतया तदवच्छिन्नसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्यान्यावच्छेदेन सन्निकर्षेऽपि प्रत्यक्षापत्तेः।

किञ्च रूपं नास्तीति प्रतीतिविषयत्वस्य यावदभावानां कल्पनामपेक्ष्यैकाभावस्यैव तादृशप्रतीतिविषयत्वं कल्प्यते लाघवात्। न च सामान्याभावविषयकलौकिकप्रत्यक्षे सन्निकर्षबलाद्विशेषाभावविषयतयाऽस्त्येवातिरिक्तकल्पनागौरवमिति वाच्यम्। रूपं नास्तीत्यनुमितेस्तावद्व्यक्तिनिष्ठविषयताकल्पनामपेक्ष्यैकाभावविषयत्वे लाघवात्। न च तत्रापि तन्मते रूपत्वावच्छिन्नप्रतियोगिताकत्वेन यत्किञ्चिदभावोऽनुमितिविषय इति वाच्यम्। व्यापकताज्ञाने रूपत्वावच्छिन्नप्रतियोगिताकत्वेन यावदभावो यत्र विषयस्तत्रानुमितौ विनिगमनाविरहेण तावद्विषयकत्वकल्पने गौरवतादवस्थ्यात्, अन्यथाऽभाव एव न सिद्ध्येत्। अधिकरणस्यैव तादृशप्रतीतिविषयत्वाभ्युपगमात्। अनन्तानां प्रतीतिविषयत्वे गौरवमिति चेत्समानमिहापि। अपि च सामान्याभावानङ्गीकारे जन्यरूपत्वावच्छिन्ने रूपत्वेन प्रतिबन्धकता तदभावः कारणमिति प्रतिबन्धकाभावकारणतायां रूपत्वावच्छिन्नप्रतियोगिताकत्वरूपत्वेनानन्ताभावनिष्ठकारणताकल्पनमपेक्ष्य लाघवादेकाभावनिष्ठकारणता कल्प्यते। न च भवन्मते ध्वंसप्रागभावाभ्यां सहात्यन्ताभावविरोधेनाऽनन्ततत्तद्व्यक्तित्वावच्छिन्नाभावनिष्ठकारणताकल्पने साम्यमिति वाच्यम्। तादृशविरोधानङ्गीकारेण रूपत्वावच्छिन्नप्रतियोगिताकाभावव्यक्तेरेव कारणत्वकल्पनात्। विरोधाङ्गीकारेऽपि लौकिकविषयतासम्बन्धावच्छिन्नप्रतियोगिताकचाक्षुषत्वावच्छिन्नाभावादे

प्रतिबन्धकत्वस्थले तावदभावकूटनिष्ठकारणत्वकल्पने गौरवात् । न च तादृशप्रतियोगिताकत्वविशिष्टाभावव्यक्तिकल्पनापेक्षया तावदभावनिष्ठाखण्डोपाधिस्वीकारे लाघवमिति वाच्यम् । तद्धर्माश्रयव्यक्तिसत्त्वे कार्यवारणाय तद्धर्मस्य पर्याप्तिस्वीकारे गौरवात् ।

केचित्तु सामान्याभावस्वीकारे तदिन्द्रियजन्यज्ञानप्रतिबन्धकतायां लौकिकविषयताशालिज्ञानस्यैव प्रतिबन्धकत्वनये एतदभावलौकिकविषयताशालित्वेन प्रतिबन्धकता लाघवात्, एतदभावस्य घटत्वविशिष्टप्रतियोगिनोऽभावांशे भाने एव लौकिकविषयताङ्गीकारेणातिप्रसङ्गाभावात्—भवन्मते विषयमिश्रितप्रतिबन्धकत्वे गौरवात् । रूपत्वावच्छिन्नप्रतियोगिताकाभावविषयकज्ञानत्वेन तत्त्वे एतन्नास्तीति बुद्धिकाले फलाभावप्रसङ्गः । एतत्प्रतियोगितासांसर्गिकविषयतावच्छिन्नाभावविषयताया अवच्छेदकत्वे गौरवादिति । तन्न । एतद्धर्मविशिष्टतया तादृशभानानङ्गीकारेण तत्प्रतियोगिताकाभावकूटाधिकरणवृत्तित्वादिरूपनिरूपितसांसर्गिकविषयताशालित्वेन प्रतिबन्धकत्वे दोषाभावात् ।

केचित्तु प्रतियोगितासम्बन्धेन भ्रमानंगीकारे इन्द्रियसंबद्धविशेषणतया अभावमिश्रितकारणत्वनये मन्मते एतदभावविशेषणतात्वेन कारणत्वकल्पनात्, भवन्मते एतत्प्रतियोगिताकाभावविशेषणतात्वेन हेतुत्वे गौरवात् । तन्न इन्द्रियसंबद्धविशेषणतात्वेन विशेषणताया एतत्प्रतियोगितारूपत्वेन इन्द्रियसम्बन्धवद्व्यक्त्यनुयोगिकाभावनिष्ठएतत्प्रतियोगितारूपाया हेतुत्वात् । भवन्मतेऽतिरिक्ताभावस्वीकारेपि यदि प्रतियोगिता नातिरिक्ता तदा तत्र तदभावस्य तत्तदभावस्वरूपतत्तत्प्रतियोगितास्वरूपयोर्हेतुत्वे विनिगमनाविरहाच्च ।

केचित्तु सामान्याभावाङ्गीकारे संशयादौ मन्मते एतदभावाधिकरणावृत्तित्वरूपाविरोधो भासते । भवन्मते तु तावदभावाधिकरणावृत्तित्वरूपः, तथाच बाधादेः प्रतिबन्धकतायां गौरवम् । न च रूपत्वावच्छिन्नप्रतियोगिताकाभावत्वेनानुगमो भवतापि तदभावव्यक्तेः रूपत्वावच्छिन्नाभावत्वेन विषयतायां प्रवेशः क्रियते तथाच क्व गौरवमिति वाच्यम् । रूपत्वावच्छिन्नप्रतियोगिताकविशेषाभावाधिकरणवृत्तित्वत्वरूपेणोपस्थितस्य विरोधस्य भ्रमभिन्नत्वेन भानासम्भवात् । न च तस्य व्यासज्यवृत्तित्वानङ्गीकारेणावच्छेदकतासम्बन्धेनैतत्प्रतियोगिताविशिष्टावृत्तित्वत्वरूपेण विरोधो भासते, तथाच प्रतियोगितानिरूपितावच्छेदकताया अनतिरिक्तत्वे त्वविरोधः । न चाधिकरणस्वरूपतत्तद्व्यक्त्यवृत्तित्वं भासते, तथाच क्वानुगम इति वाच्यम् । सामान्यव्यक्तेः सम्बन्धतायां गौरवतादवस्थ्यात् । न च गुरुधर्मस्यानवच्छेदकत्वं तत्समनियतलघुरूपस्यावच्छेदकत्वासम्भवात् कम्बुग्रीवादिमान्नास्तीत्यादौ विशेष्यविशेषणभावापन्नतत्कूटविषयतायाः प्रवेशे कारणतावच्छेदकापेक्षेति वाच्यम् । द्वित्वावच्छिन्नाभावादिव्यावृत्तप्रतियोगिताया भवन्मते प्रवेशासामर्थ्यादिति वदन्ति ।

केचित्तु समनियताभावस्थले एतत्प्रतियोगितायां सांसर्गिकविषयताशालिएतदभावज्ञानत्वेन प्रतिबन्धकत्वे लाघवाद् भवन्मते रूपत्वावच्छिन्नप्रतियोगितासम्बन्धेन रूपत्वविषयताशालित्वेन प्रतिबन्धकत्वे गौरवात् । न च भवन्मते रूपत्वावच्छिन्नप्रतियोगितासम्बन्धेन रसत्वेन रसभ्रमात्मकज्ञानस्य प्रतिबन्धकत्वापत्तिरिति वाच्यम् । रूपभिन्नस्य रूपत्वावच्छिन्नप्रतियोगितासम्बन्धेन भानानङ्गीकारेण दोषाभावात् । न च समनियताभावस्य प्रतियोगिताभिन्नत्वेन एतत्प्रतियोगितायां सांसर्गिकविषयताशालित्वेन प्रतिबन्धकत्वादिति वाच्यम् । घटवत्ताज्ञानं प्रति कम्बुग्रीवादिमान्नास्तीति ज्ञानस्यापि प्रतिबन्धकत्वापत्तेः । न च कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगितानां संसर्गताख्यविषयतायां घटो नास्तीति प्रतियोगितायां, तथाच प्रतियोगित्वपर्याप्तसांसर्गिकविषयताशालित्वेन प्रतिबन्धकत्वं लाघवात् कम्बुग्रीवादिमान्नास्तीत्यस्य तत्प्रतियोगितापर्याप्तसांसर्गिकविषयताशालित्वाभावेन प्रतिबन्धकत्वापत्तिरिति वाच्यम् । एतत्प्रतियोगितासम्बन्धेन गुरुधर्माभावभानेऽप्रतिबन्धात्तथाच प्रतियोगिताभेदस्वीकारे रूपं प्रति मन्मते तदभावत्वेन हेतुता न तु एतत्प्रतियोगिताकाभावत्वेन गौरवादिति सामान्याभावसिद्धिरिति वदन्ति ।

नन्वतिरिक्ताभाव एव किम्मानं तत्र घटादिशून्यदेशे एव घटाभावः न त्वतिरिक्ताभावसिद्धिरिति मीमांसकाः । युक्तं चैतन्नैयायिकमतेपि अभावानुयोगिकाभावस्यातिरिक्तत्वाभावेन तत्तदधिकरणस्वरूप एव तत्तदभावः । अथ तत्तन्नाशाधिकरणव्यक्तेरभावत्वेन तत्र घटत्वावच्छिन्नप्रतियोगिताकत्वमपेक्ष्य

अथ किमिदं पक्षतावच्छेदकं व्याप्तित्वम् ? न तावद्धेतुव्यापकसाध्यसामानाधिकरण्यत्वम् , तदवच्छिन्नेऽव्यभिचरितत्वशब्दप्रतिपाद्यभेदनिश्चयेन सिद्धसाधनप्रसङ्गात् । नापि साध्याभाववदवृत्तित्वत्वादिकं तदवच्छिन्नेऽव्यभिचरितत्वशब्दप्रतिपाद्यभेदरूपसाध्यविरहेण बाधप्रसङ्गात् । एवं वक्ष्यमाणेन केवलान्वयिन्यभावादित्यनेन व्याप्तौ साध्याभाववदवृत्तित्वादिरूपाव्यभिचरितत्वशब्दप्रतिपाद्यभेदकूटः साधनीयः । सोऽपि न सम्भवति, केवलान्वयि-

---

लाघवादतिरिक्ताभावसिद्धिरिति चेत्, सत्यम् अतिरिक्ताभावकल्पनेपि तादृशाभावस्य तत्तन्निखिलाधिकरणव्यक्तिषु सम्बन्धकल्पनस्यावश्यकत्वात्कृतमतिरिक्ताभावकल्पनेन, एवं घटत्वावच्छिन्नप्रतियोगिताकत्वस्य सम्बन्धः कल्प्यत इति । अथ यदि तत्तदधिकरणस्वरूप एवाभावस्तदा तदधिकरण एव घट सत्त्वासत्त्वदशायां तदभावप्रतीत्युत्पादानुत्पादविलयप्रसङ्गः, त्वन्मते तादृशाधिकरणस्याविशिष्टत्वात्, अस्मन्मते यत्कालावच्छेदेन तत्तदभावस्तिष्ठति तत्कालावच्छेदेन तत्तदभावप्रत्यय इति चेत् । अस्मन्मतेपि यत्कालावच्छेदेन घटत्वावच्छिन्नप्रतियोगिताकत्वं तादृशाधिकरणस्य तत्कालावच्छेदेनैवाभावप्रत्ययः । अथ सम्भवति चेदं तद्धर्मावच्छिन्नप्रतियोगिताकत्वस्यातिरिक्तत्वे तस्य स्वरूपसम्बन्धात्मकत्वे तु तत्तदधिकरणस्वरूपस्य तादृशविशिष्टधर्मावच्छिन्नाधिकरणतानियामकत्वासम्भवात् । ननु तस्यातिरिक्तत्वपक्षे को दोष इति चेत्, तादृशप्रतियोगिताकत्वस्यातिरिक्तत्वमभ्युपेत्य तथा वर्तने किमपराद्धमतिरिक्ताभावकल्पनेनेति चेत् सत्यम् । अतिरिक्ताभावस्वीकारेपि तत्तद्धर्मावच्छिन्नप्रतियोगिताकत्वमतिरिक्तमवश्यमभ्युपेयम्, अन्यथाऽभावाधिकरणकाभावस्याभावलक्षणाधिकरणस्वरूपत्वात् घटवद्भूतलवृत्तिपटाभावाधिकरणकघटाभावस्य पटाभावात्मकत्वेन घटवद्भूतले घटाभाववदिति प्रत्ययस्यापि प्रामाण्यापत्तिः, तस्माद् घटवद्भूतले पटत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टाधिकरणता, न तु घटत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टाधिकरणतेति स्वीकरणीयं भवद्भिरपीति । अथ यद्यतिरिक्ताभाव एव नास्ति तर्हि पापनाशार्थं प्रायश्चित्तप्रवृत्त्यनुपपत्तिः, एवं विघ्ननाशार्थं मङ्गलादिष्वपि, तन्मते तत्तदधिकरणस्वरूपस्य पूर्वसिद्धत्वादिति चेत् । सत्यम् । तन्मतेपि कथं नरकप्रागभावप्रतिपालनार्थं प्रवृत्तिः । यदि च योगक्षेमसाधारणजन्यत्वज्ञानात्तत्र प्रवृत्तिस्तदाऽस्मन्मतेपि तत्र नरकप्रतियोगिकत्वसम्बन्धविशिष्टस्याग्रिमक्षणे सत्त्वं विना प्रायश्चित्तं न तु सम्भवतीति प्रायश्चित्ते प्रवृत्तिः । अथ यद्यधिकरणस्वरूप एवाभावस्तदा घटः प्रागभाववानिति प्रत्ययः कथं स्यात् । न च तथापि प्रतियोगितासम्बन्धेन तादृशप्रागभावाधिकरणं स घटो न भवतीति त्वन्मतेपि कथं प्रत्ययः सविषयातिरिक्तपदार्थस्य भाविन्यऽसत्वादिति वाच्यम् । प्रतियोगितासम्बन्धेन भाविन्यसत्वमङ्गीक्रियते एव, अन्यथा प्रतियोगितासम्बन्धेन प्रागभावस्य प्रवृत्त्यापत्तेरिति चेत् । सत्यम् । तादृशप्रत्यय एव नास्ति, अस्ति च घटो भविष्यतीति प्रत्ययः । स प्रत्ययस्तु तत्तदधिकरणदेशरूपप्रागभावकृत एवेति न दोषः । अथ स भाविघटः पटो नेति प्रत्ययः कथं स्यादिति चेद् । घटे तदानीं घटभेद इति प्रत्ययस्तु भ्रम एव कालाद्यवगाहिप्रत्ययस्तु भ्रम एव कालाद्यवगाहित्वप्रत्ययस्तु भवितुमर्हति तत्तद्घटे तत्तद्घटतादात्म्यवदिति ।

अत्र न्यायविदः । तत्तन्नानाधिकरणव्यक्तीनां घटत्वावच्छिन्नप्रतियोगिताकत्वन्त्वतिरक्त एवाभावे कल्प्यते । न च तादृशाभावस्य तत्तन्निखिलाधिकरणसम्बन्धकल्पनाया आवश्यकत्वे तद्दोषतादवस्थ्यात्कृतमतिरिक्ताभावकल्पनेनेति वाच्यम् । तादृशगौरवस्य फलमुखत्वेनादोषत्वात् । न च फलमुखगौरवस्यादोषत्वे जितं क्षणभङ्गवादिभिः, तन्मते लाघवात्प्रतियोगित्वेन नाशत्वेन हेतुहेतुमद्भावः । न तु द्रव्यनाशे तदाश्रयनाशस्याऽसमवायिनाशस्य(वा)हेतुत्वमुररीक्रियते । इत्थं च प्रतिक्षणं घटादिव्यक्तिध्वंसोत्पादकल्पनस्य फलमुखत्वेनादोषादिति चेत् । सत्यम् । फलमुखगौरवस्य दूषणावहत्वं, बाधकसत्त्वे, तत्र सोयं घट इति प्रत्यभिज्ञाबलात्तस्य दूषणावहत्वं, प्रकृते च तादृशबाधकासत्त्वान्न दूषणावहत्वमिति । अपि च तादृशाभावस्य तत्तदधिकरणस्वरूप एव सम्बन्धः, स च स्वरूपो लाघवात्तदभावस्वरूप एव, इत्थं च तस्य घटत्वावच्छिन्नप्रतियोगिताकत्वस्य तत्तदधिकरणस्वरूपस्य सम्बन्धसत्त्वेपि तादृशसम्बन्धस्य नानात्वं स्फुटमेवेति ध्येयम् । स्फुटं चैतन्न्यायसिद्धान्तरहस्ये ।

हेतुनिरूपितवृत्तित्वाभावरूपहेतोः सिद्धान्तसिद्धव्याप्तावभावात्। यस्तु–अत एवाऽव्यभिचरितत्वं पक्षो व्याप्तिभेदः साध्यः। नन्वव्यभिचरितत्वस्य पक्षत्वे पक्षतावच्छेदकाननुगमः। न चास्त्वननुगतमेव पक्षतावच्छेदकमिति वाच्यम्। एकधर्मावच्छिन्नस्य व्याप्तित्वनिराकरणेऽपि अन्यधर्मावच्छिन्नस्य व्याप्तित्वशङ्कानिरासायोगात् अव्यभिचरितत्वपदस्य व्याप्तिपञ्चकपरत्वे 'सकृदुच्चरित' इति न्यायविरोधापत्तेः। (१)आवृत्तौ वाक्यभेदापत्तेरिति चेन्न। अव्यभिचरितत्वपदप्रतिपाद्यत्वेन पक्षता, तथा चाऽव्यभिचारितत्वपदजन्यप्रतीतिविषयत्वं पक्षतावच्छेदकं, नातोऽव्यभिचरितत्वत्वस्य साध्याभाववदवृत्तित्वादिसाधारणस्यैकस्याभावेऽपि क्षतिः। नच तथापि व्याप्तिभेदस्य साध्यत्वे सिद्धान्तव्याप्तिभेदमादाय सिद्धसाधनं साध्याभाववदवृत्तित्वादिभेदसाधने बाध इति वाच्यम्। अनुमितिजनकज्ञानविषयत्वाभावस्यैव साध्यत्वादित्याह–तन्न। अनुमितिजनकज्ञानविषयस्य सिद्धान्तव्याप्तेर्भेदसाधने सिद्धसाधनम्। तादृशस्य साध्याभाववदवृत्तित्वादिरूपव्याप्तेर्भेदसाधने बाध इति चेन्न।

नहि व्यापकसामानाधिकरण्यत्वादिरूपं व्याप्तित्वं प्रकृते पक्षतावच्छेदकतयाऽभिप्रेतम्, नापि अव्यभिचरितत्वत्वं येनोक्तदोषाः स्युः, किन्त्वनुमितिजनकतावच्छेदकहेतुप्रकारतानिरूपितप्रकारतावत्त्वमेव, तथा चाव्यभिचरितत्वशब्दप्रतिपाद्यविशिष्टहेतुमत्ताज्ञानस्यानुमितिजनकत्वं व्यापकसामानाधिकरण्यविशिष्टहेतुमत्ताज्ञानस्य वेति संशयादनुमितिजनकतावच्छेदकहेतुप्रकारतानिरूपितप्रकारत्वावच्छिन्नेऽव्यभिचरितत्वशब्दप्रतिपाद्यभेदः सन्दिग्ध एवेति न सिद्धसाधनं न वा बाध इति। न च साध्याभाववदवृत्तित्वादिरूपप्रत्येकव्याप्तिविशिष्टहेतुमत्ताज्ञानानामनुमितिजनकतासंशयादुक्तपक्षतावच्छेदकावच्छिन्ने उक्तभेदकूटसन्देहेन सन्दिग्धासिद्धिरित्याशङ्कायां कूटघटकप्रत्येकभेदसाधकत्वेन केवलान्वयिन्यभावादित्यनेनोपन्यस्तकेवलान्वयिवृत्तित्वाभावरूपहेतौ स्वरूपासिद्धिर्दुर्वारैव, वस्तुतोऽनुमितिजनकज्ञानविषयस्य केवलान्वयिवृत्तित्वनियमादिति वाच्यम्। अनुमितिजनकतावच्छेदकहेतुप्रकारतानिरूपितप्रकारत्वावच्छिन्नं पक्षीकृत्य केवलान्वयिवृत्तित्वाभावरूपहेतुना साध्याभाववदवृत्तित्वादिभेदो न साध्यते, किन्तु साध्याभाववदवृत्तित्वं पक्षीकृत्य तेनैव हेतुना तादृशप्रकारत्वावच्छिन्नभेद एव, तथा च साध्याभाववदवृत्तित्वादौ केवलान्वयिवृत्तित्वाभावरूपहेतोः सत्त्वेन न स्वरूपासिद्धिरिति। न चैतादृशानुमानेन साध्याभाववदवृत्तित्वे तादृशप्रकारत्वावच्छिन्नभेदसिद्धावपि तादृशप्रकारत्वरूपपक्षतावच्छेदकावच्छिन्ने साध्याभाववदवृत्तित्वादिभेदासिद्ध्या न प्रथमानुमाने सन्दिग्धासिद्धिनिरास इति वाच्यम्। साध्याभाववदवृत्तित्वत्वाद्यवच्छिन्ने तादृशप्रकारत्वावच्छिन्नभेदसिद्धौ तदुत्तरं तादृशप्रकारत्वावच्छिन्ने साध्याभाववदवृत्तित्वत्वाद्यवच्छिन्नभेदस्य मानसबोधसम्भवादिति।

केचित्तु अनुमितिजनकत्वमव्यभिचारपदजन्यप्रतीतिविषयतावच्छेदकावच्छिन्नविषयतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिज्ञानत्वानवच्छिन्नं साध्याभाववदवृत्तित्वादिविषयतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषय-

(१) स्वस्थानीभूतस्य पुनरनुसन्धानमावृत्तिः।

ताशालिज्ञानत्वावच्छिन्नत्वाभावकूटवत्त्वादित्यनुमाने तात्पर्यम् । अत्राव्यभिचारपदार्थतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नत्वाभावमात्रोक्तौ वन्ह्यभाववदवृत्तिपर्वतो वन्हिमान् धूमादित्यादौ वह्निव्याप्यधूमवान् वह्न्यभाववदवृत्तिपर्वत इत्याकारकपरामर्शनिष्ठानुमितिजनकतायां धर्मितावच्छेदकावच्छिन्नविषयताविधयाऽव्यभिचारपदार्थतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नत्वसत्त्वेन बाधः स्यात् । केचित्तु ज्ञेयत्वं वाच्यत्वाव्यभिचारीति व्यवहारानुरोधेन साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्याप्यव्यभिचारपदार्थत्वमावश्यकम्, तथाच हेतुविषयत्वानुपादानेऽव्यभिचारपदार्थावच्छिन्नसाध्यतावच्छेदकनिष्ठविषयताघटितधर्मावच्छिन्नत्वाभावस्य सिद्धान्तिमतेऽनुमितिजनकतायामसत्त्वाद्बाध इति प्राहुः । न चाव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वाभावस्य साध्यत्वे नोक्तदोषः, तादृशजनकतायामव्यभिचारपदार्थावच्छिन्नविषयताघटितधर्माऽवच्छिन्नत्वसत्त्वेपि अव्यभिचारपदार्थावच्छिन्नहेतुविषयताघटितधर्मावच्छिन्नत्वविरहादिति पक्षतावच्छेदकावच्छिन्नविषयतानिवेशो व्यर्थ इति वाच्यम् । वह्न्यभाववदवृत्तिधूमवत्कालीनपर्वतो वह्निमान् धूमादित्यादिस्थलेऽप्यबाधापत्तेः । एवं हेतावपि साध्याभाववदवृत्तित्वादिविषयत्वावच्छिन्नत्वाभावकूटवत्त्वादित्येतावन्मात्रोक्तौ वह्न्यभाववदवृत्तिपर्वतो वह्निमान् धूमादित्यादौ वह्निव्याप्यधूमवांस्तादृशपर्वत इति परामर्शनिष्ठानुमितिजनकतायां कूटविरहेण भागासिद्धिः स्यात् । न च तादृशविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नविषयताघटितधर्मावच्छिन्नत्वाभावकूटवत्त्वोपादानेन न भागासिद्धिरिति वाच्यम्। वह्न्यभाववदवृत्तिधूमवन्महानससदृशः पर्वतो वह्निमान् धूमादित्यादिस्थलीयपरामर्शजनकतायां भागासिद्ध्यापत्तिरतः पक्षतावच्छेदकावच्छिन्नविषयतानिवेशः। न च तथापि पर्वतो वह्निमान् वह्न्यभाववदवृत्तेरित्यादौ परामर्शनिष्ठानुमितिजनकतायां बाधो दुर्वारः, हेतुतावच्छेदकपर्यन्तस्य व्याप्तित्वमिति सिद्धान्ते हेतुव्यापकवह्निसमानाधिकरणवृत्तिवह्न्यभाववदवृत्तित्वरूपहेतुतावच्छेदकरूपाव्यभिचारपदार्थावच्छिन्नहेतुविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयत्वावच्छिन्नत्वस्य तत्र सत्त्वादिति वाच्यम् । अव्यभिचारपदार्थतावच्छेदकावच्छिन्ना याऽव्यभिचारपदार्थमात्रवृत्तिविषयता तन्निरूपितत्वं साध्यघटकहेतुविषयतायां निवेशनीयम् । तथा चाव्यभिचारपदार्थतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकविषयतानिरूपितप्रकृतहेतुतावच्छेदकपर्याप्तावच्छेदकताकविषयतानिरूपितप्रकृतपक्षतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकविशेष्यत्वानवच्छिन्नत्वस्यैव साध्यत्वं फलितम् । साध्यसिद्धिश्चावच्छेदकावच्छेदेन बोध्या, तेनाऽनुमितिजनकतात्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे आलोकादिलिङ्गकानुमितिजनकतायां धूमविषयताघटितसाध्यस्य मतद्वयेऽपि सत्त्वात्सिद्धसाधनम् पक्षतानिष्ठजनकतायां निरुक्तसाध्यपर्यवसानमादायार्थान्तरञ्चेति शङ्काया अनवसर इति ध्येयम्। अनुमितिजनकत्वं च प्रकृतहेतुतावच्छेदकावच्छिन्नलिङ्गकप्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयकप्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकानुमितिजनकत्वरूपं ग्राह्यम् । नातः प्रागुक्तानुमितिजनकतायां केवलपर्वतत्वादिरूपपक्षतावच्छेदकमादाय भागासिद्धितादवस्थ्यम् । न चैवमपि धूमव्यापकवह्निसामानाधिकरण्यवह्न्यभाववदवृत्तित्वोभयवद्धूमवान्पर्वत इति ज्ञानीयतादृशसामानाधिकरण्यत्वावच्छिन्नसाध्याभाववदवृत्तित्वत्वावच्छिन्नविषयतायाः ज-

साध्याभाववदवृत्तित्वमिति । वृत्तम् वृत्तिः, भावे निष्ठाप्रत्ययात्, वृत्तस्याभावोऽवृत्तं वृत्त्यभाव इति यावत्, साध्याभाववतोऽवृत्तं साध्याभाववदवृत्तम् साध्याभाववद्वृत्त्यभाव इति यावत्, तद्यत्रास्ति स साध्याभाववदवृत्ती मत्वर्थीयेन्प्रत्ययात्, तस्य भावः साध्याभाववदवृत्तित्वम्, तथा च साध्याभाववद्वृत्त्यभाववत्त्वमिति फलितमिति प्राञ्चः । तदसत्, 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर'इत्यनुशा(१)सनाविरोधात्, तत्र कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वात् । तच्चाऽगुणवत्त्वमिति साधर्म्यव्याख्यानावसरे गुणप्रकाशरहस्ये(२) दीधितिरहस्ये च स्फुटम् ।

---

नकतावच्छेदकत्वेन भागासिद्धितादवस्थ्यमिति वाच्यम् । प्रागुक्तविषयतात्वावच्छिन्नावच्छेदकतानिरूपितत्वाभावस्यैव हेतुसाध्यविधया प्रवेशात् उक्तज्ञानीयविषयतायास्तादृशसामानाधिकरण्यत्वावच्छिन्नविषयतात्वेनैवावच्छेदकत्वात् ।

अथ वह्निव्याप्यो धूमो धूमवान्पर्वत इति ज्ञानस्यापि कारणत्वेन विशिष्टविषयतायाः कारणतानवच्छेदकत्वेन साध्याभाववदवृत्तित्वविषयताया जनकतावच्छेदकत्वेऽपि साध्यसिद्धिरिति न विवक्षितार्थसिद्धिरिति चेन्न । प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकताविशिष्टहेतुतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपिताव्यभिचारपदार्थतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकतानिरूपितत्वाभावस्यैव साध्यत्वात् । वैशिष्ट्यं च स्वनिरूपकजनकतानिरूपितत्वसम्बन्धेनेति ।

एवं च तादृशजनकत्वं तादृशनिरूपितत्वाभाववत् प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारत्वनिष्ठावच्छेदकताविशिष्टहेतुतावच्छेदकावच्छिन्नविशेष्यत्वनिष्ठावच्छेदकतानिरूपितसाध्याभाववदवृत्तित्वत्वाद्यव्यभिचारपदार्थतावच्छेदकावच्छिन्नविषयतात्वावच्छिन्नावच्छेदकतानिरूपितत्वाभावकूटवत्त्वादिति फलितम् ।

मूले केवलान्वयिन्यभावादिति । इदमत्रावधेयम् । केवलान्वयीत्यादिमूले केवलान्वयिपदं न वास्तवकेवलान्वयिपरम् । अभावपदस्य साध्याभाववदवृत्तित्वाभावपरतया साध्याभावाप्रसिद्ध्या तत्र तादृशाभावासम्भवात् । यदि तत्त्वेन ज्ञानपरं तदा केवलान्वयित्वाक्रान्ते धूमादौ तादृशाभावासत्त्वाद् ज्ञेयत्वादावसत्त्वाच्च व्याहतमतः केवलान्वयिपदस्य केवलान्वयित्वग्रहकालीनानुमितिजनकज्ञानपरत्वम्, अभावपदस्य च साध्याभाववदवृत्तित्वविषयत्वाभावपरत्वमिति । तथाच केवलान्वयिनि निरूप्यनिरूपकभावापन्नतादृशविषयत्वग्रहसम्भवाच्चानुपपत्तिः । तादृशविषयताशून्यज्ञानवृत्तित्वादिति तादृशनिरूपितत्वाभावकूटस्य 'प्रत्येक'साधको हेतुः पर्यवसित इति प्राहुः ।

बहुव्रीहीतरसमासपरत्वादिति । ननु समासपरत्वादित्येव वक्तुमुचितं किं बहुव्रीहीतरपदेन

---

(१) अनुशासनेऽस्मिन् लाघवमेव मूलम् । पीतमम्बरं यस्येत्येकया वृत्त्याऽर्थप्रतिपत्तिसम्भवे पीतं च तदम्बरं चेति पीताम्बरं तदस्यास्तीति पीताम्बरवानिति वृत्तिद्वयकल्पने गौरवन्तथा चानुशासनस्य बहुव्रीहीतरसमासान्मत्वर्थीयो न भवति बहुव्रीहिसमासेन तदर्थलाभश्चेदित्यर्थः ।

(२) अत्र गुणप्रकाशरहस्यग्रन्थश्चेत्थम् । अगुणवत्त्वमिति । अगुणवत्समवेतनित्यवृत्तिसत्त्वान्यध

बहुव्रीह्युत्तरमत्वर्थीयार्थस्य बहुव्रीहेप्रतिपत्तिकरत्वाभावेन बहुव्रीह्युत्तरमत्वर्थीयप्रत्ययानुपपत्त्यभावादिति चेन्न । यादृशसमासोत्तरं मत्वर्थीयप्रत्ययार्थो बहुव्रीहिणा प्रतिपाद्यते तादृशसमासपरत्वमावेदयितुं बहुव्रीहीतरपदस्योक्तत्वात्, तथा च बहुव्रीहिपदं वस्तुगतिमनुरुध्योक्तम् ।

केचित्तु समासत्वं कर्मधारयाद्यन्यतमत्वं न त्वनुगतरूपम्, तत्रान्यतमत्वघटकभेदप्रतियोगितावच्छेदककोटौ बहुव्रीहिसमासप्रवेशकृतगौरववारणाय बहुव्रीहीतरपदमित्याहुः । तदसत्, कर्मधारयत्वादीनामनुगतत्वे समासत्वस्याप्यनुगतत्वसम्भवात्, अत एव समासत्वमखण्डोपा-

---

र्मसमवायित्वं विवक्षणीयम् । कर्मत्ववारणाय नित्यवृत्तीति भावः । बहुव्रीहिणैवेति । बहुव्रीह्युत्तरत्वप्रत्ययेनैवेत्यर्थः । विवक्षितत्वस्य लाभ इति । न गुणोऽगुण इति नञ्तत्पुरुषोत्तरमतुप्प्रत्ययानन्तरत्वप्रत्ययेन लभ्यस्यान्वयस्य गुणाभाववत्त्वरूपस्य लाभ इत्यर्थः । एतच्चाऽभेदोऽविवादोऽविरोध इत्यादिप्रयोगानुरोधादत्यन्ताभावार्थकनञा न तत्पुरुषसमास इत्याचार्यमतानुसारेणोक्तम् । अर्थ इति अनुशासनविरुद्ध इत्यर्थः । अनुशासनमेवाह कर्मधारयेति । कर्मधारयोत्तरं मतुप्प्रत्ययलभ्यस्य बहुव्रीहिणा लाभसम्भव इत्यादौ पूरणीयम् । लघुत्वात् शब्दलाघवात् । इति न्यायादिति-इत्यनुशासनादित्यर्थः । नञ्तत्पुरुषस्यानेककर्मधारयमध्यघटितत्वादिति भावः । न च शब्दलाघवादरे मतुप्प्रत्ययोत्तरनञ्तत्पुरुषोऽपि मूलोक्तविरुद्धो बहुव्रीहिणैव तल्लभ्यार्थस्य लाभसम्भवेन शब्दगौरवादिति वाच्यम् । मतुप्प्रत्ययानन्तरं नञ्तत्पुरुषलभ्यस्यार्थस्य गुणवद्भिन्नत्वरूपस्य बहुव्रीहिणा लाभासम्भवात् । न च बिसकिसलयच्छेदपाथेयवन्त इत्यत्र बिसकिसलयच्छेदः—पाथेयः—पाथभक्षो येषु—हंसाश्चेति बहुव्रीहिणैव विवक्षितार्थलाभसम्भवेन कर्मधारयोत्तरं मतुप्दलं तदनुशासनव्यभिचारीति वाच्यम् । तत्र पाथेयनिष्ठोत्कर्षभूयस्त्वादि--लक्षणस्य विवक्षितार्थस्य तदर्थकमतुप्प्रत्ययं विना बहुव्रीहितो लाभासम्भवात् बहुव्रीहितो विवक्षितार्थलाभसम्भव एव कर्मधारयोत्तरं मतुप्प्रत्ययानभ्युपगमात्, अतएव न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति शाब्दिकाः । नञ्तत्पुरुषे दूषणान्तरमाह प्रत्युतेति । अन्योन्याभाववाचकनञैव तत्पुरुष इति मते इति शेषः । पर्युदासनञा-अन्योन्याभाववाचकनञा, न विवक्षितमिति । भाष्येऽतिव्याप्तिरिति भावः । न च तथापि गुणस्याभावोऽगुणमित्यव्ययीभावोत्तरं मतुप्प्रत्यय एव कुतो न कृत इति वाच्यम् । न कर्मधारयादित्यत्र कर्मधारयपदस्य-बहुव्रीहितरसमासपरतया कर्मधारयवदव्ययीभावोत्तरमपि मतुपोऽनभ्युपगमात् । नचैवं राजपुरुषवद्गृहमित्यादिप्रयोगोऽपि स्यात्तनोऽपि राज्ञः पुरुषो यत्रेति व्यधिकरणबहुव्रीहिणैव विवक्षितार्थलाभसम्भवादिति वाच्यम् । व्यधिकरणबहुव्रीहेः कण्ठेकाल इत्यादिस्थलविशेषनियन्त्रितत्वात् नीलोत्पलवद्गृहमित्यादि प्रयोगवत्तादृशप्रयोगस्यासिद्धत्वाच्चेति दिक्, इति ।

गुणदीधितिरहस्ये तु 'अगुणवत्त्वमपि साधर्म्यपरतया स्वयं व्याचष्ट एवमिति । द्रव्यत्वसत्तादिकमादाय द्रव्येऽतिव्याप्तिवारणायावृत्त्यन्तम् । कर्मत्वादिकमादाय कर्मण्यतिव्याप्तिवारणाय नित्यवृत्तीति नित्यसमवेतार्थकम् । तेन कर्मत्वस्यापि दैशिकविशेषणतया परमाण्वादौ कालिकविशेषणतया महाकाले च वृत्तावपि कर्मणि नातिव्याप्तितादवस्थ्यम् । समवायेन तद्वत्तालाभाय समवायित्वमिति । ननु विवक्षितस्य गुणवद्भेदस्योक्तसमासालाभादाह गुणाभावसम्बन्धस्येति भाष्यकृतेति शेषः । गुणस्य भावोऽगुणमित्यव्ययीभावसमाससङ्ग्रहाय व्याचष्टे नञ्समासादिति । तथाच नञ्समासत्वरूपेण प्रकाशकृता तत्पुरुषाव्ययीभावौ निराकृतौ । अन्यथा नञ्तत्पुरुषो व्यर्थ आपद्येत अव्ययीभावान्मतुप् कुतो न कृत इत्यापेक्षापापवादादिति भावः । इत्थं चात्रापि कर्मधारयपदं बहुव्रीह्यतिरिक्तपरमिति ध्येयम्' इत्युक्तम् ।

रूपादीनां गुणानां द्रव्याश्रितत्वं निष्क्रियत्वमगुणवत्वं चेति भाष्यम् ।

गुणा येषु वर्त्तन्ते ते गुणवन्तो न गुणवन्तोऽगुणवन्तस्तेषां भावस्तत्त्वमिति किरणवल्यामुदयनाचार्याः ।

दीधितिः । एवमगुणवत्वमपि गुणवदवृत्तिनित्यवृत्तिधर्मसमवायित्वं विवक्षणीयम् । नन्वित्यादिविवक्षितार्थस्य गुणाभावसम्बन्धस्य लाभात् । नञ्तत्पुरुषात्—नञ्समासात् । पर्युदासेति । इदमुपलक्षणम् । प्रसज्य बहुव्रीहिणा गुणशून्यवत्त्वमित्यपि द्रष्टव्यम् ।

धिरिति समासमञ्जर्यामुक्तम्। एवंविधामाश्रित्य तावदन्यान्यत्वेत्यादिना समासत्वमनुगतमुक्तं समासवादे इति विभावनीयम्।

परे तु शोभनः शुक्लो यत्रेति शुक्लवाचकपदघटितबहुव्रीह्युत्तरमत्वर्थीयप्रत्ययेन यत्र सुन्दरशुक्लगुणविशिष्टविशिष्टं बोध्यते तत्रैव शोभनः शुक्लो यत्रेति शुक्लगुणविशिष्टवाचकपदघटितबहुव्रीहिणा तादृशार्थप्रतिपादनान्मत्वर्थीयानुपपत्तिरित्यतो बहुव्रीहीतरपदमुपात्तम्।

ननु कर्मधारयपदस्य बहुव्रीहीतरसमासमात्रपरत्वेपि साध्याभाववदवृत्तित्वमित्यत्र साध्याभाववत्पदस्य साधुत्वानुपपत्तिः साध्यस्याभावः साध्याभाव इति षष्ठीतत्पुरुषोत्तरमत्वर्थीयस्यानुशासनविरुद्धत्वादिति चेन्न। साध्यमभावो यस्येति बहुव्रीह्युत्तरं मतुप्प्रत्ययः नातो विरोधशङ्कापीति। अथवाऽभावो विद्यते यत्रासौ अभाववानितिमतुप्प्रत्ययानन्तरन्तद्घटकाभावपदेन साध्यपदस्य षष्ठीतत्पुरुषः, प्रतियोगिसापेक्षसमासस्येष्टत्वात्।

अन्ये तु प्राशस्त्ये मतुपो विधानात्, साध्याभाववदिति मतुपा साध्याभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपमधिकरणतायां निरवच्छिन्नत्वरूपं च प्राशस्त्यं प्रतिपाद्यते, साध्यस्याभावो यत्रेति बहुव्रीहिणा तु साध्यप्रतियोगिकाभावाश्रय एवेति मत्वर्थीयेन यदर्थः प्रत्याय्यते बहुव्रीहेस्तदर्थप्रतिपत्तिकरत्वाभावेन मत्वर्थीयः सङ्गत एवेति। न चावृत्तीतिमत्वर्थीयेनापि तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वरूपं प्राशस्त्यं प्रतिपाद्यते, तथाच तादृशप्राशस्त्यघटितार्थबोधकत्वं साध्याभाववतो न वृत्तिर्यत्रेति साध्याभाववदवृत्तिरिति बहुव्रीहौ नसम्भवतीति तद्ग्रन्थासङ्गतिरिति वाच्यम्। नञुपस्थाप्याभावेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैवान्वयिनोऽन्वयो न तु तदाश्रयनिष्ठप्रतियोगिताकत्वसम्बन्धेन, तथासति घटवत्यपि घटो नास्तीति प्रतीत्यापत्तेस्तत्र घटप्रतियोगिकाभावसत्त्वात्, तथा च साध्याभाववतो न वृत्तिर्यत्रेति बहुव्रीहौ नञ्सत्त्वेन तदर्थेऽभावे साध्याभाववत इति षष्ठ्यन्तार्थसाध्याभाववन्निरूपितत्वविशेषितवृत्तिपदार्थवृत्तित्वस्य तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयात्तादृशप्राशस्त्यबोधकत्वस्य बहुव्रीहौ सम्भवात्तद्ग्रन्थसङ्गतिः। न हि साध्याभावेत्यत्राऽभावपदसमभिव्याहारस्थलेऽपि नञाद्यनुपस्थाप्येऽभावेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वय इति नियमो, मानाभावात्, निपातातिरिक्तयोर्नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादिति न्यायविरोधाच, किन्त्वभावादिपदसमभिव्याहारस्थले एतन्नियमानुरोधेनान्वयिनोऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताके निरूढलक्षणा, तथा च विना मत्वर्थीयं साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपप्राशस्त्यस्यालाभात्साध्याभाववदिति मत्वर्थीयसङ्गतिरिति वदन्ति। तच्चिन्त्यम्। न च **समास**पदं व्यर्थं कृदन्ततद्धितान्तादिपदोत्तरमतुप्स्थलेऽनेकपदत्वाभावाद् बहुव्रीहिसमासस्यैवाऽसंभवेन तत्र मत्वर्थीयार्थस्य बहुव्रीहिणा बोधयितुमशक्यत्वादिति वाच्यम्। स्वरूपबोधनार्थत्वादिति। '**न कर्मधारयान्मत्वर्थीय**' इत्येतावन्मात्रोक्तौ कृष्णसर्पवद्वल्मीकमिति प्रयोगस्य साधुत्वानुपपत्तिः कृष्णसर्पेतिविग्रहस्य नित्यसमासतया तदुत्तरं मतुप्प्रत्ययेऽनुशासनविरोधादतो **बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर** इत्युक्तम्। तथाच कृष्णः सर्पो यत्रेति विग्रहस्य विलक्षणवैजात्यावच्छिन्नसर्पवत्त्वबोधकत्वाभावेन तस्य साधुत्वोपपत्तिः। नच '**न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तत्र संभवती**'त्येव कथन्नोक्तमिति वाच्यम्।

अव्ययीभावसमासोत्तरपदार्थेन समन्तत्समासानिविष्टपदार्थान्तरान्वयस्याऽव्युत्पन्नत्वात्, यथा भूतलोपकुम्भं भूतलाऽघटमित्यादौ भूतलवृत्तिघटसमीपतदत्यन्ताभावयोरप्रतीतेः । एतेन वृत्तेरभावोऽवृत्तीत्यव्ययीभावानन्तरं साध्याभाववतोऽवृत्तिर्यत्रेति बहुव्रीहिरित्यपि प्रत्युक्तम्, वृत्तौ साध्याभाववतोऽनन्वयापत्तेः । अव्ययीभावसमासस्याव्ययतया तेन समं समासान्तराऽसम्भवाच्च । नञुपाध्यादिरूपाव्ययविशेषाणामेव समस्यमानत्वेन परिगणितत्वात् ।

---

राजसम्बन्धिपुरुषसम्बन्धिदेशतात्पर्यके राजपुरुषवानित्यत्र षष्ठीतत्पुरुषोत्तरं मतुब् न स्यात्तत्र राजा पुरुषो यत्रेति बहुव्रीहेः सम्भवात् । न चैवमपि यत्र राजा राजसम्बन्धी पुरुषश्चास्ति तत्र मतुब्बोध्यस्य देशविशेषस्य बहुव्रीहिणा प्रतिपत्तिसम्भवेनानुपपत्तितादवस्थ्यमिति वाच्यम् । यत्पदेन यादृशधर्मावच्छिन्नविषयताकबोधो मत्वर्थीयसमभिव्याहृतेन जायते मतुपः समभिव्याहारं विना तेन पदेन बहुव्रीहिबलात्तादृशधर्मावच्छिन्नविषयताकबोधसम्भवे तत्पदान्मत्वर्थीयो न भवतीत्यर्थस्य विवक्षणात्, तथाच राजसम्बन्धिपुरुषसम्बन्धित्वावच्छिन्नविषयताकबोधो मतुप्समभिव्याहृतेन राजपुरुषपदेन जायते बहुव्रीहिसमासेन तु राजाऽभिन्नपुरुषसम्बन्धित्वेनैवेति न दोषः । **स्फुटमिति** । अगुणवत्त्वमित्यत्र न गुणोऽगुणः स यत्रास्तीत्यगुणवान् गुणस्याभावोऽगुणन्तद्यत्रास्तीत्यगुणवानिति वा विग्रहनिराकरणेन गुणोऽस्यास्तीति गुणवान् न गुणवानगुणवानिति विग्रहस्य प्रकाशरहस्यादौ दर्शनेन कर्मधारयपदस्य बहुव्रीहीतरसमासपरत्वादिति स्पष्टम् ।

असुव्वत इति भाष्यप्रयोगदर्शनाद्रक्तदण्डवानिति लौकिकप्रयोगदर्शनाच्चोक्तव्युत्पत्तेः प्रायिकत्वेनाऽत्रापि तदनुरोधस्याऽनावश्यकत्वे प्राचीनमते दोषान्तरमाह **अव्ययीभावसमासोत्तरपदार्थेनेति** । तथा चाऽवृत्तमित्यस्य पूर्वपदार्थप्रधानाव्ययीभावसमासत्वेन पूर्वपदार्थप्रधानसमासघटकोत्तरपदार्थेन समं तत्समासाघटकपदार्थस्याऽनन्वयादवृत्तित्वे साध्याभाववतोऽनन्वयापत्तिर्दोष इति ।

ननु **अन्तरपद**मनर्थकमिति चेन्न । उपकुम्भमित्यादावपि तत्समासानिविष्टसमीपादिपदप्रतिपाद्यसामीप्याद्यर्थे घटादेरनन्वयप्रसङ्गात् । एवं वृत्तित्वपदार्थे साध्याभाववत्पदार्थस्येव नञ्पदार्थस्याप्यन्वयो न स्यात् तादृशसमासघटकीभूतं यन्नञ्पदन्तदर्थरूपेऽभावेऽव्ययीभावसमासाऽनिविष्टं यदभाव इत्याकारकं तदर्थत्वसत्त्वात् **अन्तरपदोपादाने** च तत्समासानिविष्टपदार्थे तत्समासनिविष्टपदार्थभिन्नत्वं लभ्यत इति भावः ।

तत्समासानिविष्टपदार्थान्वयस्याव्युत्पन्नत्वादित्येव वा कुत्रचित्पाठः ।

ननु भूतलोपकुम्भमित्यत्र भूतलपदेनोपकुम्भरूपाव्ययीभावस्य सप्तमीतत्पुरुषसमासत्वाप्रसक्त्या तादृशवाक्यस्यासाधुतया योग्यत्वाभावेन कथं तादृशप्रतीत्यापत्तिः सङ्गतेति चेन्न । अव्ययीभावस्याव्ययत्वानङ्गीकर्तृमते तादृशापत्तिसम्भवात्, अत एव सहरीकरोति सहरीमन्यत उपकुम्भीभूतमित्यादयः प्रयोगा उपपद्यन्ते, अन्यथा तस्याव्ययत्वे 'अव्ययस्य च्वावीत्वं नेति वाच्यमिति' निषेधेनासाधुत्वापत्तिरित्यव्ययीभावश्चेति सूत्रे १।१।४१।

भाष्ये स्प(१)ष्टम् ।

परे तु तादृशानुपूर्वीज्ञानाद् भ्रान्तपुरुषस्य शाब्दबोधापत्तिसम्भवादित्याहुः । कुत्रचिद् भूतले उपकुम्भं भूतले अघटमिति पाठः । **वृत्तौ साध्याभाववतोऽनन्वयापत्तेरिति** । अव्ययीभावसमास(२)घटकोत्तरपदार्थेन तत्समासानिविष्टपदार्थान्तरान्वयस्याव्युत्पन्नत्वादित्यर्थः ।

---

(१) तथा चात्राऽव्ययस्य परिगणितत्वेन परिगणिताव्ययातिरिक्ताव्ययीभावस्य सामान्यशास्त्रेण समासाङ्गीकारेणोत्तरपदार्थान्वयविवक्षायां भूतलोपकुम्भमित्यादेः साधुत्वापत्तिरिति ध्येयम् ।

(२) समासघटकपदोपस्थाप्येन समासाऽघटकपदार्थस्य नान्वयः, आकांक्षाविरहात् । अत एव ऋद्धस्य राजमातङ्गा इत्यादौ ऋद्धादिपदार्थस्य राजादौ योग्यतादिसत्त्वेपि नान्वयः । यद्यपि तत्र समभिव्याहाररूपाऽकांक्षा सम्भवति, तथापि समभिव्याहारमात्रं नाकांक्षा, अपितु अन्वयबोधविशेषे पदविशेषयोः समभिव्याहारः । नामार्थयोरभेदान्वयबोधे च समानविभक्तिकयोर्नाम्नोः समभिव्याहार आकाङ्क्षा, उक्तस्थले च राजपदस्य निर्विभक्तिकतया न तत्समभिव्याहारः ऋद्धराज्ञोरभेदान्वयबोधौपयिकाकाङ्क्षा । राजपदोत्तरं यदि लुप्तषष्ठी प्रतिसन्धीयते तदा शोभनं दधीत्यादिवत्तत्रापि तादृशाकाङ्क्षा विद्यते एवमन्वयबोधोपि भवति, परन्त्वसाधुतया न तथा प्रयुज्यते । अतएव 'शोभने वनेचर' इत्यादावाक्रोशार्थे 'विरूपाशादास्याः पुत्र' इत्यादौ च वनदास्यादौ शोभनविरूपाद्यभेदान्वयबोधौपयिकाकाङ्क्षासत्त्वेनाऽन्वयबोधसम्भवेपि न तथा प्रयुज्यते । असाधुता च तत्राऽसामर्थ्यातिदेशात् 'सापेक्षमसमर्थवद्भवतीति' स्मृतेः । सापेक्षत्वन्तु प्रकृतसमासानिविष्टपदार्थान्वितस्वार्थबोधकत्वम् । प्रधानार्थबोधकपदस्य सापेक्षत्वेऽपि समासः साधुः । राजपुरुषो दर्शनीय इत्यादावुत्तरपदस्य दर्शनीयपदसापेक्षतयापि समासस्य साधुत्वात् । प्रधानत्वं चार्थस्य समासजन्यबोधे मुख्यविशेष्यत्वम् । राजपुरुषमानयेत्यादौ पुरुषादेः कर्मत्वादिविशेषणतया भानेपि समासजन्येऽवान्तरवाक्यार्थबोधे मुख्यविशेष्यतया दर्शनीयं राजपुरुषमानयेत्यादौ समासः साधुः । नचैवं चित्रगुरित्यादौ लक्षणया गोपदस्य चित्रगोस्वामिबोधकतया समासजन्यबोधे मुख्यविशेष्यतया गोपदं प्रधानार्थकमेव, तदुपस्थाप्यायां गवि समासानिविष्टशोभनादिपदार्थस्यान्वयविवक्षणेपि समासः साधुः, ( एवं ऋद्धस्य दृष्टराजपुरुषश्चैत्र इत्यादावपि राजादौ ऋद्धान्वयविवक्षणे समासस्याऽसाधुत्वं ) स्यादिति वाच्यम् । प्रधानार्थे इतरान्वय एव समासस्य साधुत्वादुक्तस्थले च स्वामिविशेषणस्य गोरप्रधानत्वात् । अथ सापेक्षपदे समासस्यासाधुत्वे चैत्रस्य दासभार्या शरैः शातितपत्रो वृक्षादित्यादौ दासशातितादिपदस्य चैत्रस्य शरैर्वृक्षादित्यादिपदसापेक्षतया समासो न साधुः स्यात् । अभेदेनेतरान्वयितायाः सापेक्षताघटकत्वे चैत्रस्य गोरूपमित्यादावपि गवि चैत्रसम्बन्धान्वयविवक्षया प्रयोगापत्तिः । एवं चैत्रस्य सख्युर्धनमित्यर्थे चैत्रसखिधनमित्यादिसमासो न स्यात् , पदत्रयस्थले च तत्पुरुषाभावात् । सख्युर्धनं सखिधनमिति समासानन्तरं चैत्रस्य सखिधनं चैत्रसखिधनमिति समासस्यैवादरणीयत्वात् । अत्र चैत्रसम्बन्धिन एव प्रकृतसमासानिविष्टचैत्रपदलक्ष्यार्थस्याभेदेन सखिपदार्थान्वितत्वात् । चैत्रस्य सखा चैत्रसखा तस्य धनं चैत्रसखिधनमिति समासादरे च सखिपदोत्तरं समासान्ततया, टच्प्रत्ययप्रसङ्गेन चैत्रसखधनमिति प्रयोग एव स्यात् । एतेन कारकप्रतियोगिपदातिरिक्तपदसापेक्षपदेनैव न समासः । तदुक्तं—

प्रतियोगिपदादन्यद्यदन्यत्कारकादपि ।
वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यते ॥ इति ।

चैत्रस्य दासभार्येत्यादौ दासत्वं सप्रतियोगिकमिति चैत्रपदस्य समासस्थदासपदार्थप्रतियोगिबोधकतया शरैः शातितपत्रो वृक्षादित्यादौ शरादिपदस्य शातनादिक्रियायां कारकबोधकतया समासः साधुरित्यपि प्रत्युक्तम् । चैत्रसखिधनमित्यादौ चैत्रसम्बन्ध्यर्थकचैत्रादिपदस्य प्रतियोगिपदत्वाभावात् । चैत्रादिसम्बन्धिनः सखित्वाद्यप्रतियोगित्वात् । मैवम् । यत्र हि समस्यमानपदार्थेऽविशेष्यरूपे इतरान्वयो विव-

क्ष्यते तत्र समासो न भवति । यत्र हि तादृशपदार्थतावच्छेदके इतरान्वयस्तत्र भवत्येव समासः । चैत्रस्य दासभार्येत्यादौ दासत्वे चैत्रादिसम्बन्धान्वयो न तु दासपदार्थे दासे । शरैः शातितपत्र इत्यादौ च शातने शरकरणकत्वादेरन्वयो न तु शातितपदार्थे शातनकर्मणि अतो भवत्येव समासः । चैत्रसखिधनमित्यत्रापि सखित्वे चैत्रसम्बन्धिनोऽन्वयो न तु सखिपदार्थे सख्याविति नानुपपत्तिः । नचैवं दासत्वादौ प्रमेयादिपदार्थान्वयविवक्षणे प्रमेयो दासभार्येत्यादिप्रयोगापत्तिरिति वाच्यम् । प्रमेयो दास इत्यादावपि पदार्थैकदेशे दासत्वादौ प्रमेयाद्यभेदान्वयविरहेण तत्रैकदेशान्वयस्याव्युत्पन्नतया तथा प्रयोगविरहात् । षष्ठ्याद्युपस्थितप्रतियोगित्वस्य लक्षणया नामोपस्थाप्यतत्तत्प्रतियोगित्वावच्छिन्नस्य च भेदाभेदाभ्यां ससंबन्धिकदासत्वादावन्वयो व्युत्पत्तिसिद्ध एव चैत्रस्य दासश्चैत्रदास इत्यादौ तादृशान्वयबोधोदयात्, अतश्चैत्रदास इत्यादौ समासनिर्वाहः । अथैवं पितुः स्वर्गकाम इत्यादि प्रामाणिकानां दानादिवाक्यं न साधु स्यात्तत्र समस्यमानस्वर्गादिपदार्थे स्वर्गादौ पित्रादिसम्बन्धान्वयादिति चेन्न । तत्र कामनायामेव पित्रादिसम्बन्धस्य स्वर्गभागित्वेन विशेषरूपस्यान्वयो न तु स्वर्गादावित्युपगमेन सामञ्जस्यात् । अतो मुक्तं पितरमुद्दिश्य पितृस्वर्गस्य बाधेपि न तादृशवाक्यस्यायोग्यता । नचैवमपि कामनाबोधकपदस्यैव सापेक्षतया न समासः स्यात्तत्पदस्य प्रधानार्थकस्याप्यप्रधानार्थे इतरान्वयसापेक्षतया समासविरहात्, अन्यथा शोभनश्चित्रगुरित्यादौ गवादिषु शोभनाद्यभेदान्वयविवक्षणे समासप्रसङ्गस्य पूर्वोक्तस्य दुर्वारतापत्तेरिति वाच्यम् । क्रियाभिन्नप्रधानार्थकपदोपस्थाप्ये इतरान्वयेनैव प्रधानार्थकपदस्य सापेक्षताया असामर्थ्यप्रयोजकत्वमित्युपगमात् । प्रकृते च कामनायाः क्रियात्वेनानुपपत्तिविरहात् । चैत्रस्य कृतोपकारोयमित्यादिप्रयोगोपीष्यत एव क्रियाभिन्नत्ववत्सप्रतियोगिकान्यत्वमप्यर्थे विशेषणं देयम्, चैत्रस्य सपुत्रोयमित्यादौ पुत्रत्वादौ चैत्रसम्बन्धान्वयेपि न समासानुपपत्तिः । नचैवं चैत्रस्य दृष्टपुत्रो मैत्र इत्यादेरपि प्रयोगः स्यादिति वाच्यम् । इष्टत्वात् । एवञ्च प्रकृतसमासानिविष्टपदार्थान्वितपदार्थतावच्छेदकसप्रतियोगिकक्रियातिरिक्तविशेषणार्थपरत्वं साकाङ्क्षत्वमिति निर्व्यूढम् । अत्र प्रकृतपदानुपादाने नीलमुत्पलमित्यादौ सर्वत्रैवातिव्याप्तिः समासानिविष्टनीलपदार्थान्वितस्वार्थपरत्वस्योत्पलपदेपि सत्त्वात् । यदि चोत्पलपदस्य विशेष्यत्वाद् विशेष्ये समासघटकपदनिष्ठत्वविशेषणाद्वा नैष दोषः, तथापि धनर्द्धस्य राजमातङ्गा इत्यादावव्याप्तिः । ऋद्धपदस्य समासनिविष्टत्वात्समासानिविष्टपदार्थान्वितस्वार्थपरत्वाभावात् । नचैवं राजपदार्थस्य धनऋद्धसमुदायार्थान्वितत्वेन तस्य समुदायस्य समासानिविष्टत्वाद् धनऋद्धपदार्थः समासानिविष्टपदार्थ एव तदन्वितस्वार्थपरत्वेन राजपदे नाव्याप्तिरिति वाच्यम् । 'पदार्थस्य पदार्थेनान्वय' इति न्यायात्समुदायार्थस्यान्वयाभावात् । प्रकृतसमासानिविष्टपदार्थान्वितस्वार्थकत्वमित्युक्तौ 'ऋद्धस्य राज्ञो धनं राजमातङ्गांश्च पश्ये'त्यादौ प्रकृतसमासानिविष्टऋद्धपदार्थान्वितो यो राजत्वावच्छिन्नोऽर्थः समासघटकराजपदस्यापि तदर्थकत्वादतिव्याप्तिः । न च तादृशविशिष्टार्थकत्वं वाच्यम् । विशिष्टार्थे वृत्त्यभावात् । परत्वोक्तौ तु समासघटकराजपदस्य तादृशबोधेच्छयोच्चरितत्वाभावान्नातिव्याप्तिः । अथ नीलोत्पलरूपमित्यादावतिव्याप्तिः, नीलपदार्थस्यापि प्रकृतसमासानिविष्टकृष्णादिपदार्थत्वात्तदन्वितस्वार्थपरत्वस्योत्पलपदे सत्त्वात् । यद्यपि तदुपस्थापितस्वार्थपरत्वमित्युच्यते, तथाप्ययमृद्धस्तद्राजमातङ्गा इत्यादावतिव्याप्तिः प्रागुपस्थितपदार्थशक्तेन तत्पदेन प्रकृतसमासानिविष्टऋद्धपदोपस्थापितार्थस्योक्तत्वेन तदन्वितस्वार्थपरत्वस्य राजपदे सत्त्वादिति चेत् ।

अत्र केचित् । प्रकृतसमासानिविष्टपदानुपस्थापितत्वे सति प्रकृतसमासानिविष्टपदोपस्थापितो योऽर्थस्तदन्वितस्वार्थपरत्वं वाच्यम् । ततश्च प्रकृतसमासानिविष्टऋद्धपदोपस्थापितस्य ऋद्धत्वावच्छिन्नरूपार्थस्य समासानिविष्टतत्पदेनाप्युपस्थापितत्वान्न दोष इति वदन्ति । तन्न । ऋद्धस्य राजत्वं ऋद्धपुत्र इत्यादौ ऋद्धार्थस्य समासस्थऋद्धपदेनाप्युपस्थितत्वादव्याप्तेर्दुर्निवारत्वात् । परन्तु प्रकृतसमासानिविष्टपदोपस्थितिजन्यो यः प्रकृतसमासानिविष्टपदार्थप्रकारकस्वार्थविशेष्यको बोधस्तदिच्छयोच्चरितत्वमिति निष्कर्षः । अयमृद्धस्तद्राजमातङ्गा इत्यादौ तु ऋद्धत्वावच्छिन्नार्थस्य तत्पदोपस्थापितस्य राजपदार्थेनान्वयबोधे तत्पदजन्योपस्थितेरेव कारणत्वं न तु ऋद्धपदात् । ऋद्धपदस्य तु तत्पदोपस्थापनहेतुत्वमिति सर्वसामञ्जस्यम् ।

वस्तुतस्तु साध्याभाववतो न वृत्तिर्यत्रेति त्रिपदव्यधिकरणबहुव्रीह्यु-त्तरं त्वप्रत्ययः। साध्याभाववत इत्यत्र निरूपितत्वं षष्ठ्यर्थः। अन्वयश्चास्य वृत्तौ। तथाच साध्याभावाधिकरणनिरूपितवृत्त्यभाववत्त्वमव्यभिचरितत्वमिति फलितम्। न च व्यधिकरणबहुव्रीहिः सर्वत्र न साधुरिति वाच्यम्। अयं हेतुः साध्याभाववदवृत्तिरित्यादौ व्यधिकरणबहुव्रीहिं विना गत्यन्तराभावेनाऽत्रापि व्यधिकरणबहुव्रीहेः साधुत्वात्।

साधुत्वादिति। व्यधिकरणबहुव्रीहेर्ज्ञापकासिद्धत्वेन तस्याऽसार्वत्रिकत्वेप्युक्तप्रयोग एवोदाहरणतया वक्तव्योऽनन्यगतिकत्वादिति भावः।

ननु वह्निमान् धूमादित्यत्राव्याप्तिः। हेत्वधिकरणताया अपि साध्याभावाधिकरणतया तन्निरूपितत्वस्य धूमनिष्ठवृत्तितायां सत्त्वात् हेतुनिष्ठवृत्तितायां हेत्वधिकरणनिरूपितत्ववद् हेत्वधिकरणतानिरूपितत्वस्यापि सर्वसम्मतत्वात्। न च धूमादिकरणत्वं धूमादिकरणस्वरूपमेवाऽतो धूमाधिकरणत्वं वह्न्यभावाधिकरणमेव न सम्भवतीति वाच्यम्। अधिकरणत्वस्याधिकरणस्वरूपत्वेपि अधिकरणतात्वेन रूपेण तत्र वन्ह्यभावाधिकरणताऽस्त्येव यथा प्रतियोगिताप्रतियोगिन्येव वर्त्तते न तु प्रतियोगिनोऽधिकरणे इति। न च हेत्वधिकरणताभिन्नत्वस्य साध्याभावाधिकरणे निवेशान्न दोष इति वाच्यम्। धूमाधिकरणताभिन्नं धूमादित्यत्राव्याप्तेः हेत्वधिकरणताभिन्नसाध्याभावाधिकरणाप्रसिद्धेः, वह्निमान् धूमादित्यत्र साध्याभावाधिकरणधूमत्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वमादायाव्याप्तितादवस्थ्याच्च। न च साध्याभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतानिरूपितवृत्तित्वाभावविवक्षणे न दोष इति वाच्यम्। धूमवान् वह्नेरित्यत्रातिव्याप्तेः तादृशवृत्तित्वस्य साध्याभाव एव सत्त्वात्। न च साध्याभावाधिकरणनिष्ठाधिकरणतानिरूपितवृत्तित्वाभावस्य लक्षणत्वे न दोष इति वाच्यम्। घटभिन्नमधिकरणतात्वादित्यत्र साध्याभावाधिकरणघटनिष्ठा या घटत्वाधिकरणता तन्निरूपितवृत्तित्वस्य हेतौ सत्त्वादव्याप्त्यापत्तिरिति चेन्न।

साध्याभावाधिकरणविशिष्टवृत्तित्वाभावो व्याप्तिः। वैशिष्ट्यं च स्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसम्बन्धेन। न च तथापि अवच्छेदकताभिन्नमवेच्छदकत्वान्यत्वविशिष्टप्रमेयत्वादित्यत्राव्याप्तिः, साध्याभावाधिकरणं यदवच्छेदकत्वन्तन्निरूपितत्वस्य हेतुनिष्ठाधेयतायां सत्त्वात्—आधेयताया आधेयतावच्छेदकतानिरूपितत्वात्—अवच्छेदकत्वनिष्ठं यदधिकरणत्वं तन्निरूपितत्वस्य च तत्र सत्त्वादिति वाच्यम्। स्वनिरूपितत्वपदेन स्वनिष्ठसंसर्गतात्वानवच्छिन्नत्वे सति अवच्छेदकतात्वानवच्छिन्नं यन्निरूपकत्वं तन्निरूपितानिरूप्यतावत्त्वस्य विवक्षितत्वात्। संसर्गताभिन्नमाधिकरणतात्वादित्यत्राव्याप्तिवारणाय सत्यन्तम्। नचैवं घटाभावाधिकरणतात्वप्रकारकप्रमाविशेष्यतावान् घटाभावाधिकरणतात्वादित्यत्राव्याप्तिः साध्याभावाधिकरणं यद्धेत्वधिकरणत्वं तन्निरूपितत्वस्य तन्निष्ठं यद्घटाभावाधिकरणत्वं तन्निरूपितत्वस्य च हेतुनिष्ठाधेयतायां सत्त्वात्, संसर्गघटकस्वनिष्ठाधिकरणतायांहेत्वधिकरणभिन्नत्वनिवेशे तु अधिकरणतात्वप्रकारकप्रमाविशेष्यमधिकरणतात्वादित्यत्राव्याप्तिः हेत्वधिकरणताभिन्नस्वनिष्ठा-

धिकरणत्वाप्रसिद्धेरिति वाच्यम् । स्वनिष्ठाधिकरणतायां स्वाभाववत्त्वनिवेशान्नाव्याप्तिः । स्वाभावश्च स्वाश्रयत्वस्वाभाववद्वृत्तित्वोभयसम्बन्धावच्छिन्नप्रतियोगिता । स्वाभाववद्वृत्तित्वनिवेशाद् वाच्यत्वभिन्नं घटत्वादित्यादौ साध्याभावाधिकरणस्य वाच्यत्वस्य सर्वत्र सत्त्वेऽपि व्यधिकरणसम्बन्धावच्छिन्नाभावमादाय नाव्याप्तिः ।

वस्तुतस्तु साध्याभावाधिकरणत्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो विवक्षणीयः । तथाच वह्निमान् धूमादित्यादौ वन्ह्यभावाधिकरणं यद्ध्रदत्वधिकरणत्वं तन्निरूपितवृत्तित्वस्य धूमे सत्त्वेपि तादृशवृत्तित्वं न साध्याभावाधिकरणत्वावच्छिन्ननिरूपकतानिरूपितानिरूप्यतावद् धूमादिकरणतायां धूमः इति प्रत्ययाभावात्, किन्तु साध्याभावाधिकरणनिष्ठाधिकरणतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदेवेति न दोष इति विभावनीयम् ।

स्वतादात्म्यस्वावच्छेदकावच्छिन्नवत्साध्याभावाधिकरणनिरूपितत्वोभयसम्बन्धेन वृत्तिताविशिष्टवृत्तित्वाभावो व्याप्तिरित्यपि कश्चित् ।

यद्वा साध्याभावाधिकरणविशिष्टवृत्तित्वाभावो व्याप्तिः । वैशिष्ट्यं च स्वनिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वं च स्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्नवत्त्वसम्बन्धेनेति दिक् ।

ननु साध्याभावाधिकरणनिरूपिताभाव एव व्याप्तिरस्तु, वृत्तितात्वेन वृत्तित्वप्रवेशो व्यर्थः । न च वह्निमान् धूमादित्यत्र धूमाभावस्य पर्वतनिष्ठविशेष्यतायाश्च साध्याभावाधिकरणतया तन्निरूपितप्रतियोगितायाः प्रकारतायाश्च धूमे सत्त्वादव्याप्तिरिति वाच्यम् । स्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसम्बन्धेन साध्याभावाधिकरणविशिष्टवृत्तित्वाभावस्यावश्यं विवक्षणीयतया ममाप्येतदुभयसम्बन्धेन साध्याभावाधिकरणविशिष्टो यस्तदभावस्यैव निवेशनीयत्वात् । यदि च संयोगसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य साध्यत्वे तत्सम्बन्धावच्छिन्नप्रतियोगिताकज्ञेयाभावस्य हेतुतायामव्याप्तिः साध्याभावस्य प्रमेयरूपतया साध्याभावाधिकरणघटवैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन हेत्वभावीयज्ञेयाभावनिष्ठप्रतियोगितायां सत्त्वात्, तथाहि ज्ञेयाभावनिष्ठप्रतियोगिताया निखिलज्ञेयनिरूपितत्वेन घटनिरूपितत्ववद् घटनिष्ठाधिकरणतानिरूपितत्वस्यापि सत्त्वात्तादृशप्रतियोगित्वाभावस्य हेतावसत्त्वादित्युच्यते।तदा दीधितिकारमते वृत्तित्वनिवेशस्य सार्थक्येऽपि हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण वृत्तित्वाभावप्रवेशकृन्मथुरानाथमते वृत्तित्वनिवेशस्य वैयर्थ्यं दुर्वारमेव तादृशसम्बन्धेन साध्याभावाधिकरणविशिष्टाभावविवक्षणेनोक्तदोषवारणात् प्रतियोगितायास्तादृशस्वरूपेणासत्त्वादिति चेन्न । साध्याभावाधिकरणधूमसंयोगनिरूपितप्रतियोगितामादाय वह्निमान् धूमादित्यादावव्याप्तेः तत्सम्बन्धावच्छिन्नाधेयतायास्तत्संसर्गीयप्रतियोगितायाश्चैक्येन निरुक्तवृत्तित्वीयस्वरूपेण तत्प्रतियोगिताया धूमे सत्त्वात् । न च निरुक्तप्रतियोगितायां संयोगनिष्ठाधिकरणतानिरूपितत्वविरहान्न वैशिष्ट्यमिति वाच्यम् । धूमसंयोगस्यापि स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेन धूमाधिकरणतया तादृशाधिकरणतानिरूपिताधेयताया अपि निरुक्तप्रतियोगितारूपतास्वीकारेणैवोपपत्तावतिरिक्तकल्पनायां माना-

आत्मानन्द ...स्वामी

भावेन धूमनिष्ठप्रतियोगितायां साध्याभावाधिकरणधूमसंयोगवैशिष्ट्यानपायात्। न च तादृशवृत्तितात्वावच्छिन्नप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकतादृशविशिष्टाभावोक्तौ न दोषः, साध्याभावाधिकरणविशिष्टत्वावच्छिन्नस्य व्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकतादृशविशिष्टत्वावच्छिन्नाभावस्य केवलान्वयितया हेतौ सत्त्वादिति वाच्यम्। तुल्ययुक्त्या धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेरिति ध्येयम्।

**साध्याभाववदवृत्तित्वमिति मूलम्।** साध्यस्याभावः साध्याभावः स विद्यते यत्रासौ साध्याभाववान् साध्याभाववतो न वृत्तिर्यत्रासौ साध्याभाववदवृत्तिस्तत्त्वम्। साध्यस्येत्यर्थः प्रतियोगित्वम्। तत्र प्रकृत्यर्थस्य साध्यतावच्छेदकावच्छिन्नस्य निष्ठत्वसम्बन्धेनान्वयः। प्रतियोगिताया अभावे निरूपकतासम्बन्धेनान्वयः। अथवाऽस्मृताविभक्तेरपि ततो बोधानुरोधेनाभावपदसमभिव्याहारे साध्यपदस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताके निरूढलक्षणा। तस्याभेदेनाभावेऽन्वयः। निरवच्छिन्नाधिकरणत्वं मतुवर्थः। साध्याभाववत इत्यत्र षष्ठ्यर्थो निरूपितत्वम्। अन्वयश्चास्य वृत्तौ। निरूपितत्वसम्बन्धेन वा साध्याभाववतो वृत्तावन्वयः। नञर्थोऽभावः। तथाच साध्यतावच्छेदकाच्छिन्नप्रतियोगितानिरूपकाभावाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिः।

अत्र साध्यवद्वृत्तित्वमित्युक्तौ धूमवान् वन्हेरित्यत्रातिव्याप्तिर्वन्हेर्धूमवद्वृत्तित्वादतोऽभावद्वयोपादानम्। ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नो यस्तन्निरूपकाभावाधिकरणानिरूपितवृत्तित्वाभावस्यैव सम्यक्त्वे **प्रतियोगित्वोपादानं** व्यर्थमिति चेन्न। अभावत्वप्रकारकप्रमाविशेष्यतावानभावत्वादित्यादावव्याप्तिः, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छेदकावच्छिन्नाधेयतानिरूपकाभावाधिकरणे घटाभावे हेतोर्वृत्तेरिति। स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य स्वरूपेण साध्यत्वे गगनत्वहेतावव्याप्तिः साध्यस्य घटाभाववृत्तितया साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्ना या साध्यनिष्ठाधेयता तन्निरूपकघटाभावाधिकरणे गगने हेतोर्वृत्तेरतः प्रतियोगित्वोपादानमिति सम्प्रदायः।

अथ साध्यतावच्छेदकनिष्ठं यत्तन्निरूपकप्रतियोगिताकाभाव एव प्रवेश्यतां **किमवच्छेदकत्वोपादानेनेति** चेन्न। समवायेन प्रमेयस्य साध्यतायां सत्त्वहेतौ साध्यतावच्छेदकीभूतप्रमेयत्वनिष्ठवृत्तितानिरूपक—घटनिष्ठ—प्रतियोगिताकघटाभावाधिकरणे हेतोर्वृत्तेरव्याप्त्यापत्तेः। न च साध्यतावच्छेदकनिष्ठं यत्तन्निरूपितत्वमेव प्रतियोगितायां वाच्यम् एवञ्चाधिकरणे वृत्तितानिरूपकत्वस्यैव सत्त्वेनाव्याप्त्यभावादिति वाच्यम्। घटाभाववान् घटाभावत्वादित्यत्र साध्यतावच्छेदकीभूतघटाभावत्वनिष्ठा या—घटाभावत्वाभावीया—प्रतियोगित्वाभावाभावरूपा प्रतियोगिता तन्निरूपितप्रतियोगित्वाभावनिष्ठप्रतियोगिताकाभावाधिकरणे घटाभावत्वे हेतोः सत्त्वेनाव्याप्त्यापत्तेः। न **चावच्छेदकत्वोपदानेऽपि** साध्यतावच्छेदकीभूतघटाभावत्वनिष्ठा या—घटाभावाभावीया—ऽवच्छेदकत्वाभावाभावरूपाऽवच्छेदकता तन्निरूपितावच्छेदकत्वाभावनिष्ठप्रतियोगितानिरूपको योऽभावोऽवच्छेदकत्वाभावाभावोऽवच्छेदकतारूपस्तदधिकरणे घटाभावत्वे हेतोर्वृत्तेरव्याप्तितादवस्थ्यमिति वाच्यम्। साध्यतावच्छेदकनिष्ठाव-

च्छेदकतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्वस्य विवक्षितत्वात् । अवच्छेदकत्वाभावनिष्ठप्रतियोगितात्वेनाऽवच्छेदकत्वाभावाभावत्वेनैव निरूप्यनिरूपकभावेनोक्तदोषाभावात् ।

केचित्त्वखण्डाभावघटकतया सार्थक्यमिति प्राहुः ।

वस्तुतस्तु सिद्धान्ते पर्याप्तिघटितकल्पेऽवच्छेदकत्वपदानुपादाने साध्यतानिरूपितत्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगितेत्याद्यर्थविवक्षणे साध्यतानिरूपितत्वस्य साध्यतावच्छेदकतावत् साध्यतात्वनिष्ठाधेयत्वादौ सत्त्वेन साध्यतानिरूपितत्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतसाध्यतावच्छेदकसाध्यतात्वगतद्वित्वादौ साध्याभावीयप्रतियोगित्वस्यासत्त्वेनाऽसम्भवः स्यात् , एवं साध्यतावच्छेदकताविशिष्टान्येति निकृष्टेऽर्थे साध्यतानिरूपितविशिष्टान्येत्याद्यर्थः स्यात् , तथाच साध्यतानिरूपितत्वस्य साध्यतात्वनिष्ठाधेयत्वादौ सत्त्वेन तत्र निरुक्तप्रतियोगित्वस्यासत्त्वेन सुतरामसम्भवोऽतोऽवच्छेदकत्वोपादानम् ।

अथ साध्यतावच्छेदकावच्छिन्नप्रतियोगितानिरूपको यस्तदधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिरिति प्रतियोगितानिरूपकत्वेनाभावः प्रवेश्यतामभावत्वेनाभावप्रवेशो व्यर्थः । नच वह्नित्वावच्छिन्नप्रतियोगितानिरूपको यः संयोगस्तदधिकरणनिरूपितवृत्तित्वाभावस्य धूमादावसत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिः । नच सांसर्गिकप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्यासत्त्वान्नैष दोष इति वाच्यम् । तत्सम्बन्धावच्छिन्नाधेयत्वतत्संसर्गीयप्रतियोगित्वयोरैक्येन सांसर्गिकप्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वानपायादिति वाच्यम् । साध्याभावाधिकरणतायां साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया तादृशप्रतियोगितावच्छेदकस्वरूपसम्बन्धेन संयोगस्याधिकरणाऽप्रसिद्ध्या तस्य धारणासम्भवादिति चेन्न । वह्न्यधिकरणतावान् धूमादित्यादावव्याप्तिः । तादृशप्रतियोगितावच्छेदकस्वरूपसम्बन्धेन साध्यनिष्ठप्रतियोगितानिरूपकस्वरूपसम्बन्धस्याधिकरणे पर्वते हेतोः सत्त्वादतोऽभावपदम् । न च स्वरूपस्याप्यभावरूपतयाऽभावपदोपादानेपि तद्दोषतादवस्थ्यमिति वाच्यम् । तादृशप्रतियोगितात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावदभावत्वावच्छिन्ननिरूपकताया निवेशादिति नव्याः ।

वस्तुतस्तु आधेयतानिष्ठकालिकसम्बन्धावच्छिन्नाधेयत्वस्य कालिकेन साध्यत्वे घटत्व हेतौ प्रतियोगितायाः प्रतियोगिस्वरूपत्वे आधेयत्वनिष्ठप्रतियोगिताया आधेयतात्मकत्वेन कालिकसम्बन्धावच्छिन्नतया तन्निरूपकाभाववति घटे हेतोर्वृत्तित्वेनाव्याप्तिरतः साध्यतानिरूपितसंसर्गतावच्छेदकीभूतधर्मावच्छिन्नसंसर्गतात्वावच्छिन्ननिरूप्यतानिरूपितप्रतियोगितात्वावच्छिन्ननिरूपकत्वस्य प्रवेशनीयतया संसर्गतात्वेन सांसर्गिकप्रतियोगितात्वेन निरूप्यनिरूपकभावविरहेणाभाव(१)पदानुपादानेपि नोक्ताव्याप्तिः । किन्तु आधेयतासम्बन्धेन वह्निमान् वह्नित्वत्वादित्यत्र वह्नित्वावच्छिन्नप्रतियोगितानिरूपकावच्छेदकत्वाधिकरणे वह्नित्वे वह्नित्वत्वस्य वृत्तेरव्याप्तिः स्यादिति ध्येयम् ।

---

(१) केचित्तु अभावपदानुपादाने आधेयतासम्बन्धेन पर्वतविशिष्टवह्निसाध्यकधूमादावव्याप्तिः साध्यनिष्ठप्रतियोगितानिरूपितावच्छेदकतायाः पर्वते स्वरूपसम्बन्धेन सत्त्वादिति प्राहुः ।

**साध्याभावाधिकरणवृत्त्यभावश्च तादृशवृत्तित्वसामान्याभावो बोध्यः, तेन धूमवान् वह्नेरित्यादौ धूमाभाववज्जलह्रदादिवृत्त्यभावस्य धूमाभाववद्वृत्तित्वजलत्वोभयत्वावच्छिन्नाभावस्य च वन्हौ सत्त्वेऽपि न क्षतिः ।**

---

अथ साध्याभावाधिकरणनिरूपितवृत्तितात्वावच्छिन्नप्रतियोगितानिरूपकमेवास्तु लक्षणमभावत्वेन प्रवेशो व्यर्थ इति चेन्न। घटवृत्तिताभिन्नं वृत्तितात्वादित्यत्रातिव्याप्त्यापत्तिः साध्याभावाधिकरणघटवृत्तितानिरूपितवृत्तितात्वावच्छिन्नप्रतियोगितानिरूपकावच्छेदकत्वस्य वृत्तितात्वे सत्त्वात्। न चावच्छेदकत्वस्याप्यवच्छेदकत्वाभावाभावत्वेनाऽभावरूपतयाऽतिव्याप्तितादवस्थ्यमिति वाच्यम्। अभावत्वस्य भावत्वविरुद्धतयाऽवच्छेदकत्वे तद्विरहात्। तादृशप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपिताभावत्वावच्छिन्ननिरूपकतावत्त्वमेव वा व्याप्तिः। इत्थं च प्रतियोगित्वाभावाभावस्य प्रतियोगितारूपतया तन्निरूपितप्रतियोगित्वस्योक्तप्रतियोगित्वाभावे सत्त्वेपि वह्निमान् वन्ह्यभावाधिकरणनिरूपितवृत्तितात्वावच्छिन्नप्रतियोगित्वाभावादित्यत्र नातिव्याप्तिरिति। वृत्तित्वाभावश्च स्वरूपेण बोध्यः, तेन कालिकेन वृत्तित्वाभावमादाय व्यभिचारिणि नातिव्याप्तिरित्यलं बहुना।

**न क्षतिः**—नातिव्याप्तिः। वृत्तित्वसामान्याभावश्च वृत्तितात्वेतरधर्मानवच्छिन्नवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाव एव। तथाच धूमाभाववद्ह्रदादिनिरूपितवृत्तित्वाभावप्रतियोगिताया वृत्तित्वात्वेतरेण निरूपितत्वसंबन्धेन ह्रदेनावच्छिन्नत्वात्तमादाय नातिव्याप्तिः। एवं वृत्तित्वजलत्वोभयत्वावच्छिन्नाभावीयवृत्तितानिष्ठप्रतियोगिताया वृत्तितात्वेतरेणोभयत्वेन जलत्वेन वाऽच्छिन्नत्वात्तादृशाभावमादायापि नातिव्याप्तिः(१)।

नन्वेवं वह्निमान् धूमादित्यादावसम्भवः, वन्ह्यभावाधिकरणवृत्त्यभावप्रतियोगिताया वृत्तितात्वेतरेण निरूपितत्वसम्बन्धेन वन्ह्यभावाधिकरणेनावच्छिन्नतया तादृशाभावस्य लक्षणाघटकत्वात्। न च वृत्तितात्वनिष्ठावच्छेदकताभिन्ना सती अधिकरणनिष्ठावच्छेदकताभिन्ना या तदनिरूपिका अथ चेदृशावच्छेदकताद्वयनिरूपिका या वृत्तित्वनिष्ठप्रतियोगिता तन्निरूपकाभावस्य विवक्षितत्वात्, न चेदृशावच्छेदकताद्वयनिरूपकत्वं व्यर्थमिति वाच्यम्। तद्व्यक्तेः स्वरूपतो भानमते तद्व्यक्तिर्नास्तीत्यभावमादाय धूमाधिकरणनिरूपितात्ववद्व्यक्तिर्नास्तीत्यभावमादाय वाऽतिव्याप्तिवारणाय वृत्तितात्वनिष्ठावच्छेदकतानिरूपकत्वं देयम्, एवं वृत्तितात्ववत्तद्व्यक्तिर्नास्तीत्यभाववारणायाऽधिकरणनिष्ठावच्छेदकतानिरूपकत्वं देयम्, तथाच तद्व्यक्तेः स्वरूपतो भानमते तद्व्यक्तिर्नास्तीत्यभावप्रतियोगितायां तादृशावच्छेदकताद्वयनिरूपकत्वविरहान्न तादृशाभावो लक्षणघटक इति चेन्न। धूमाभावाधिकरणह्रदनिरूपितवृत्तित्वाभावमादाय धूमवान् वन्हेरित्यादावातिव्याप्तितादवस्थ्यात्। धूमाभावाधिकरणह्रदनिष्ठावच्छेदकताभिन्ना वृत्तितात्वनिष्ठावच्छेदकताभिन्ना च याऽवच्छेदकता तदनिरूपकत्वस्य प्रतियोगितायां सत्त्वात्। साध्याभावाधिकरणनिष्ठावच्छदकताभिन्नत्वानुक्तौ च वन्हिमान्

---

(१) अत्र प्रथमं वृत्तित्वसामान्याभावानुक्तौ प्रथमोपस्थितस्यापि साध्यतावच्छेदकावच्छिन्नत्वस्य व्यावृत्तिर्न संभवतीति व्युत्क्रमेण व्यावृत्तिदानमिति ध्येयम्।

धूमादित्यादावसम्भवतादवस्थ्यमिति चेत् । सत्यम् । अधिकरणत्वनिष्ठावच्छेदकताभिन्ना सती साध्याभावनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तदनिरूपकत्वस्य, अथ चेदृशावच्छेदकताद्वय निरूपकत्वस्याधिकरणनिष्ठावच्छेदकतायां निवेशान्न दोषः । धूमाभावाधिकरणह्रदवृत्तित्वाभावप्रतियोगितावच्छेदकतायाः साध्याभावाधिकरणनिष्ठायाः साध्याभावाधिकरणत्वाभिन्नेन ह्रदत्वरूपधर्मेणानवच्छिन्नतया तादृशावच्छेदकताकप्रतियोगिताकाभावमादाय नातिव्याप्तिः । अत्र तद्व्यक्तिपदेन ह्रदव्यक्तिमादाय तद्व्यक्तिवृत्तित्वाभाववारणाय एवमधिकरणत्ववत्तद्व्यक्तिवृत्तित्वाभाववारणायाभावनिष्ठाच्छेदकतानिरूपकत्वं धूमाभाववत्तद्व्यक्तिवृत्तित्वाभाववारणायाधिकरणत्वनिष्ठावच्छेदकतानिरूपकत्वं चाधिकरणनिष्ठावच्छेदकतायां निवेशितम् ।

नन्वेवमपि ह्रदनिरूपितत्वत्वाविशिष्टं यद् धूमाभावाधिकरणनिरूपितत्वं तादृशनिरूपितत्वसम्बन्धेन धूमाभावाधिकरणविशिष्टवृत्तितात्वमात्रावच्छिन्नप्रतियोगिताकाभावस्य वह्नौ सत्त्वादतिव्याप्तितादवस्थ्यमिति चेन्न । निरूपितत्वसंबन्धनिष्ठप्रतियोगितावच्छेदकतायां निरूपितत्वत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकत्वस्य विवक्षितत्वात् । तथाच ह्रदनिरूपितत्वत्वाविशिष्टधूमाभावाधिकरणनिरूपितत्वनिष्ठप्रतियोगितावच्छेदकतायां धूमाभावाधिकरणनिरूपितत्वत्वनिष्ठावच्छेदकताभिन्नेन ह्रदनिरूपितत्वत्ववैशिष्ट्यनिष्ठावच्छेदकत्वेन निरूपिततया तादृशवृत्तितामादाय नातिव्याप्तिः ।

नन्वेवमपि ह्रदवृत्तित्वविशिष्टो यो धूमाभावस्तदधिकरणवृत्तित्वाभावस्य वह्नौ सत्त्वादतिव्याप्तितादवस्थ्यमिति चेन्न । साध्याभावनिष्ठावच्छेदकतायां प्रतियोगित्वसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकताभिन्ना सती अभावत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकत्वमथ चेदृशावच्छेदकताद्वयनिरूपकत्वं विशेषणीयम् । तथाच ह्रदवृत्तित्वविशिष्टधूमाभावाधिकरणनिरूपितवृत्तित्वाभावीयधूमाभावनिष्ठावच्छेदकतायाः धूमाभावत्वनिष्ठावच्छेदकताभिन्नेन ह्रदवृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकत्वेन निरूपितत्वात्तादृशाभावमादायातिव्याप्तिविरहात् । अत्र तद्व्यक्तिपदेन विषयितासम्बन्धव्यक्तिमादाय धूमप्रतियोगिकतद्व्यक्तिमद्वृत्तित्वाभाववारणायाऽभावत्वनिष्ठावच्छेदकतानिरूपकत्वं निवेशितम् । एवमभावत्ववत्तद्व्यक्तिमद्वृत्तित्वाभाववारणाय साध्यनिष्ठावच्छेदकतानिरूपकत्वं चेति ।

इत्थं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या प्रतियोगिता तादृशप्रतियोगित्वसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकताभिन्ना सती स्वरूपसम्बन्धावच्छिन्नाऽभावत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिकाऽथेदृशावच्छेदकताद्वयनिरूपिका याऽभावनिष्ठाऽवच्छेदकता तद्भिन्ना सती स्वरूपसम्बन्धावच्छिन्नाधिकरणत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिकाऽथेदृशावच्छेदकताद्वयनिरूपिका याऽधिकरणनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नाऽवच्छेदकता तद्भिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिकाऽथ चेदृशावच्छेदकाताद्वयनिरूपिका या वृत्तित्वनिष्ठप्रतियोगिता तन्निरूपकोऽभाव इति फलितार्थः ।

अथ तद्व्यक्तेः स्वरूपतो भानस्वीकारे धूमाभावाधिकरणत्ववत्तद्व्यक्तिनिरूपितवृत्तित्वाभावं

धूमाभावाधिकरणनिरूपितवृत्तितात्ववत्तद्व्यक्तिमद्वृत्तित्वाभावं चादाय न्यूनवारकपर्याप्तिनिवेशेऽपि अतिव्याप्तिरिति चेन्न । साध्याभाववद्वृत्तितात्वगतविलक्षणसमुदायत्ववृत्तिप्रतियोगिताकाभावस्य निवेशात् । तादृशसमुदायत्ववृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन अवच्छेदकतावच्छेदकसाधारणावच्छेदकत्वं स्वीक्रियत इति न दोषः ।

केचित्तु सामान्यपदस्य व्यापकतावाचित्वेन वृत्तितात्वव्यापकप्रतियोगिताकाभाव इति तदर्थः । तथाच धूमाभावाधिकरणह्रदनिरूपितवृत्तित्वाभावीयप्रतियोगितायाः वास्तविकधूमाभावाधिकरणनिरूपितवृत्तितात्वाऽव्यापकत्वान्नातिव्याप्तिः । एतेन वृत्तितात्वस्य–धर्ममात्रस्य वा–प्रतियोगितावच्छेदकत्वे (१)मानाभावेन वृत्तितात्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धिः । न चैवं सति घटो नास्तीति बुद्धेः केवलघटप्रतियोगिकाभाववत्तानिश्चयत्वेनैव प्रतिबन्धकत्वे तद्घटो नास्तीत्यादिनिश्चयस्यापि घटवत्ताबुद्धिविरोधित्वापत्तिरतः प्रतिबध्यप्रतिबन्धकभावान्यथानुपपत्त्या वृत्तितात्वे–धर्ममात्रे वा–प्रतियोगितावच्छेदकत्वं कल्पनीयमिति वाच्यम् । घटवद्भूतलमितिबुद्धिं प्रति घटाभावद्भूतलमिति निश्चयस्य (२)प्रतियोगित्वसम्बन्धावच्छिघटत्वमात्रावच्छिन्नप्रकारतानिरूपिताऽभावत्वावच्छिन्नविशेष्य(३)त्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैव प्रतिबन्धकत्वसम्भवादुक्ताप्रसिद्धिरिति निरस्तम् । कथंचिद् घटत्वादेः प्रतियोगितावच्छेदकत्वसिद्धावपि तद्घटो नास्तीति प्रतीतेः प्रतिबन्धकत्वापत्तिवारणासम्भवाच्च । तस्या अपि घटत्वावच्छिन्नप्रतियोगिताकत्वादिति(४) । वृत्तितात्वव्यापकत्वं च वृत्तितात्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम्(५) । तथाच तद्वृत्तित्वं नास्तीत्यभावप्रतियोगिताया वृत्तितात्वव्याप-

(१) मानाभावेनेति । अवच्छिन्नत्वसंबन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितप्रमीयविशेष्यतावत्त्वसम्बन्धावच्छिन्नस्वाभावस्य प्रतियोगितामात्रे सत्त्वेनेत्यर्थः, व्यधिकरणसंबन्धावच्छिन्नाभावस्य केवलान्वयित्वात् तथाच वृत्तितात्वविशेष्यकप्रतियोगितावच्छेदकत्वप्रकारकप्रमित्यभावेन वृत्तितात्वावच्छिन्नप्रतियोगित्वाप्रसिद्धिः प्रमितेरेव विषयसाधकत्वात् प्रतियोगिता घटत्वावच्छिन्ना न वेति विप्रतिपत्तिश्चात्र सम्भवति प्रकारत्वे घटत्वावच्छिन्नत्वं सर्वसम्मतमेव घटत्वावच्छिन्नत्वाभावश्च विशेष्यत्वसंबन्धावच्छिन्नप्रतियोगिताकः तेन सिद्ध्यसिद्धिभ्यां व्याघातः । न वा सिद्धसाधनम् ।

(२) अभावांशेऽन्वयितावच्छेदकावच्छिन्नप्रतियोगित्वमेवाऽन्वयिनः संसर्ग इति नियमो नाङ्गीक्रियते अन्यथा केवलप्रतियोगित्वस्य संसर्गत्वानुपपत्तेरिति ध्येयम् ।

(३) अन्तराभासमानविषयतयोरवच्छेद्यावच्छेदकभाव इत्येकेषां मतम् परस्परमभेदस्तयोरित्यपरेषां मतम् तत्राद्यमतमेव सम्यगित्यन्यत्र विस्तरः ।

(४) न च मात्रपदेनैव तद्वारणमिति वाच्यम् । एवमपि यत्र तद्घटो नास्तीति निश्चये तत्त्वस्योपलक्षणतया भानं तदा तन्निश्चयस्य तस्याः प्रतिबन्धकत्वमिष्टमेव परन्त्विदानीं प्रतिबन्धकत्वानुपपत्तिस्तन्निश्चयस्य घटत्वमात्रावच्छिन्नप्रकारताकत्वाभावात् तत्त्वस्योपलक्षणतया प्रतियोगितानवच्छेदकत्वेन घटत्वमात्रावच्छिन्नप्रतियोगिताकत्वमनुमतमेवेति नानुपपत्तिः । उपलक्षणत्वं च प्रतियोगितानवच्छेदकत्वे सति प्रतियोगिनिष्ठविशेष्यतानिरूपितप्रकारत्वम् । अवच्छेदकत्वसंबन्धावच्छिन्नस्वाभाववन्निष्ठत्वस्वाश्रयवृत्तिविशेष्यतानिरूपितत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टप्रकारत्वमिति यावत् ।

(५) वृत्तितात्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वन्नास्तीति प्रतीतिसिद्धः वृत्तितात्वनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकाधेयत्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपक-

वृत्तिश्च हेतुतावच्छेदकसंबन्धेन विवक्षणीया, तेन वन्ह्यभाववति धूमावयवे जलहृदादौ च समवायेन कालिकाविशेषणतादिना च धूमस्य वृत्तावपि न क्षतिः ।

---

क्त्वविरहात्तस्य वारणमित्याहुः ।

तदसत्। घटत्वेन पटो नास्तीत्यादि (१)प्रतीत्या प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वे घटत्वेन तादृशवृत्तित्वाभावस्य वृत्तितात्वेन तद्वृत्तित्वतदन्यवृत्तित्वोभयाभावस्य च हेतौ तादृशवृत्तितात्वगतसमुदायत्ववृत्तिप्रतियोगितायास्तादृशवृत्तितात्वव्यापकत्वादिति । अस्माकन्तु—तादृशवृत्तितात्वगतसमुदायत्ववृत्तिप्रतियोगिताकाभावो व्याप्तिः । वृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व–स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेनेति नोक्तदोषः(२) । व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वेऽपि अनुयोगितानिरूपितनिरूपकतानवच्छेदकत्वादिति ।

न क्षतिः–नाव्याप्तिः, आत्मभिन्नं घटत्वादित्यत्राऽऽत्मत्वरूपसाध्याभावाधिकरणे आत्मनि सम्बन्धसामान्येन घटत्वस्यावृत्त्या लक्षणसमन्वयान्नासम्भव इति ।

अथात्र वह्निमान् धूमादित्यादौ वह्न्यभावाधिकरणधूमावयवनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितामादायाव्याप्तिवारणार्थं तन्निवेशव्यावृत्तिसम्भवे कालिकानुधावनं व्यर्थमिति चेन्न । प्रसिद्धविपक्षस्थलमादायाव्याप्तिसम्भवे तदप्रदर्शने न्यूनता स्यादतो हृदादिपर्यन्तानुधावनम् । यद्वा साध्याभावाधिकरणे हेतुभिन्नत्व–हेत्ववयवभिन्नत्व–निवेशे समवायसम्बन्धमादाय पूर्वोक्त-

---

तियोगित्वानिष्ठावच्छेदकतानिरूपकावच्छेदकत्वानिष्ठप्रतियोगिताकाभाव इत्यर्थः । सर्वत्रेतरवारकपर्याप्तिर्निवेश्येति न दोषः । तद्यक्तेः स्वरूपतो भानमते न्यूनवारकपर्याप्तिश्च निवेश्येति । प्रमेयत्वेन सर्वासां प्रतियोगितानां व्यापकत्वापत्तिवारणाय वृत्तितात्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपव्यापकता परित्यक्ता । तादृशवृत्तितात्वव्यापकतावच्छेदकं यदभावप्रतियोगितात्वमित्युक्तौ तु गौरवमिति ध्येयम् । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वं स्वव्यापकत्वमिति फलितार्थः ।

(१) व्यधिकरणधर्मावच्छिन्नाभावे प्रतीतिरेव मूलमिति भावः। वक्ष्यति च शिरोमणिः–यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिप्रत्ययो न तदा तादृशाभावनिवारणं गीर्वाणगुरूणामपि शक्यमिति ।

(२) ईदृशपरम्परयाः संसर्गत्वानुपगमे तु तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकत्वे सति तादृशसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपकनिरूपकतानिरूपितानुयोगितानिरूपिता या प्रतियोगिता तादृशप्रतियोगिताकाभाव एव लक्षणार्थः । अत्रेदं बोध्यम् । घटत्वादेः प्रतियोगितानवच्छेदकत्वेऽत्र घटो नास्तीति बुद्धेर्विशिष्टवैशिष्ट्यावगाहिता न स्यादिष्टापत्तौ च "प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते" इति नियमविरोधः स्यात्, प्रतियोगिविशेषिताभावज्ञानं, तादृशाभावलौकिकसाक्षात्कारः "विशिष्टवैशिष्ट्यबोधमर्यादां" अभावे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनः प्रतियोगिताख्यवैशिष्ट्यविषयतां "नातिशेते"न जहातीति तदर्थः तत्रापीष्टापत्तौ घटत्वनिर्विकल्पकानन्तरं घटो नास्तीति प्रत्ययापत्तेः, विशिष्टवैशिष्ट्यावगाहिबोध एव विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वादित्यलम् ।

स्थलीयदोषस्य न सम्भवोऽतः कालिकानुधावनम्। न च सत्तावान् प्रमेयादित्यत्र समवाय
सम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावस्य साध्यत्वे संयोगेन धूमहेतौ हेतुभिन्न–हेत्ववयवाभिन्न
साध्याभावाधिकरणाप्रसिद्ध्या तादृशनिवेशो न सम्भवतीति वाच्यम्। हेतुतावच्छेदकसम्बन्धेन
वृत्तितावद्धेतुभिन्नत्वेन साध्याभावाधिकरणस्य विशेषणीयत्वादिति।

ननु वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानुक्तौ सम्बन्धसामान्यावच्छिन्न
ग्रन्थकृतोऽभिप्रेतं यत्किञ्चित्सम्बन्धावच्छिन्नत्वं वा ? नाद्यः। सम्बन्धसामान्यावच्छिन्नवृत्तित्व
ऽप्रसिद्ध्याऽप्रसिद्धिनिबन्धनाऽव्याप्तिदानस्यैवोचितत्वात्समवायकालिकादिसम्बन्धावच्छिन्नवृत्ति
त्वनिबन्धनाऽव्याप्तिदानाऽसङ्गतिः। न द्वितीयः। यत्किञ्चित्सम्बन्धावच्छिन्नवृत्तित्वाभावनिवेशे
वन्ह्यभावाधिकरणसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य हेतौ सत्त्वेनाऽव्याप्तिविरहात्, धूमवा
वह्नेरित्यादौ धूमाभावाधिकरणनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तितामादायातिव्याप्तिसम्भ
वेपि अव्याप्तिदानपरग्रन्थस्याऽसङ्गतिरिति चेन्न। तदनुक्तौ यत्किञ्चित्सम्बन्धावच्छिन्नत्वमेव
निवेशनीयम्। अतिव्याप्तिवारणार्थं च सम्बन्धत्वसमानाधिकरणोभयावृत्तियावन्तो धर्मा
प्रातिस्विकरूपेण तत्तदवच्छिन्नसंसर्गताकानि यावन्ति साध्याभावाधिकरणवृत्तित्वानि तत्तद्व्यक्त
भावकूटवत्त्वं विवक्षणीयम्। तथाच सति तादृशाभावकूटवत्त्वस्य सद्धेतावसत्त्वादव्याप्तिः
स्यादतो वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम्। तथाच हेतुतावच्छेद
कसम्बन्धत्वसमानाधिकरणोभयावृत्तियावन्तो धर्माः प्रातिस्विकरूपेण तदवच्छिन्नसंसर्गता
कानि यावन्ति साध्याभावाधिकरणवृत्तित्वानि तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटव
त्वम् फलितम्, एवं च नाव्याप्तिरिति।

**वस्तुतस्तु** यत्किञ्चित्सम्बन्धावच्छिन्नत्वं सम्बन्धसामान्यावच्छिन्नत्वमित्यस्यात्राव
सर एव नास्ति, तथाहि धूमाभावाधिकरणनिरूपितसंयोगकालिकादिसम्बन्धावच्छिन्नवृत्ति
नास्तीति प्रतीतिसिद्धाऽभावो गृहीतुं नैव शक्यते तत्प्रतियोगितायाः साध्याभावाधिकरणनि
ष्ठावच्छेदकताभिन्नेन वृत्तितात्वनिष्ठावच्छेदकताभिन्नेन च समवायादिनिष्ठावच्छेदकत्वेन नि
रूपकत्वात्, किन्तु साध्याभावाधिकरणनिरूपितवृत्तित्वं नास्तीति प्रतीतिसिद्धसामान्याभावः
तथाच नातिव्याप्तिशङ्कापि, परन्तु धूमे तादृशवृत्तित्वसत्त्वे वृत्तित्वसामान्याभावस्य वृत्तित्वाभा
वकूटवत्त्वस्य च विरहादव्याप्तिरेवेति **श्रीचरणाः**।

अत्र वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशेऽपि संयोगेन धूमस्य साध्यतां
पर्वतानुयोगिकसंयोगेन वह्नेर्हेतुतायां वह्नौ धूमाभाववदयोगोलकनिरूपितहेतुतावच्छेदकीभूत
द्धसंयोगसम्बन्धावच्छिन्नवृत्तितामादायाव्याप्तिरतो हेतुतावच्छेदकसम्बन्धस्य न्यूनवारक
पर्याप्तिर्निवेश्या। न च तन्निवेशेपि धूमाभाववन्निरूपितानिरुक्तपर्याप्त्यधिकरणपर्वतानुयोगिकत्वसं
योगत्वरूपधर्मद्वयावच्छिन्नसंसर्गताकवृत्तित्वाप्रसिद्धिः, तादृशधर्मद्वयावच्छिन्नसंसर्गताकवृत्तिता
याः साध्यवन्निरूपितत्वनियमादिति वाच्यम्। सत्तावान् द्रव्यत्वादित्यत्राव्याप्तिवारणार्थं वक्ष्य
माणप्रकारस्यात्राप्यनुसन्धेयत्वात्। एवं वह्निमान् धूमादित्यत्र वन्ह्यभावाधिकरणहृदनिरूपित
संयोगकालिकान्यतरसम्बन्धावच्छिन्नवृत्तितामादायाव्याप्तिरतो हेतुतावच्छेदकसम्बन्धेतरसम

साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः । तेन वन्हिमान् धूमादित्यादौ समवायादिसम्बन्धेन वन्हिसामान्याभाववति संयोगसम्बन्धेन तत्तद्वान्हित्वजलत्वोभयत्वावच्छिन्नाभाववति च पर्वतादौ संयोगेन धूमस्य वृत्तावपि न क्षतिः ।

---

न्धानवच्छिन्नपरा इतरवारकपर्याप्तिर्निवेश्या । न चान्यतरत्वेन(१) संसर्गत्वे मानाभाव इति वाच्यम् । संयोगकालिकान्यतरसम्बन्धेन धूमवानिति प्रतीतेरेव मानत्वात् । अत एव समवायैकार्थसमवायान्यतरसम्बन्धावच्छिन्नसत्तात्वावच्छिन्नप्रतियोगिताकाभावोऽभावत्वमित्युक्तम् ।

**वह्निसामान्याभाववतीति** । अस्य पर्वतादावित्यनेन सहान्वयः । न क्षतिः—नाव्याप्तिः । न ह्यसम्भवसम्भवः, प्रमेयवान् जन्यद्रव्यत्वादित्यत्र लक्षणसमन्वयात्, हेत्वाधिकरणजन्यद्रव्ये प्रमेयाभावस्यावृत्तेः । इदं च विषयितायाः न संसर्गत्वं न वा विशेषरूपेण संसर्गत्वमित्यभ्युपेत्य ।

ननु साध्यसामान्याभावानिवेशे विशिष्टाभावोभयाभावमादाय प्रमेयसाध्यकस्थलेऽपि लक्षणसत्त्वानुपपत्तिरिति चेन्न । गगनहेतोर्लक्ष्यत्वमते तत्र लक्षणसमन्वयादिति । ननु साध्यनिष्ठप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वसामान्याभावस्य व्याप्तित्वेऽपि(२) वह्निसामा-

---

(१) अथान्यतरत्वेन संसर्गत्वेऽप्यन्यतरत्वं भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम् । एवं च भेदात्मकाऽन्यतरत्वप्रतियोगितावच्छेदकीभूतप्रतियोगिनि संयोगत्वस्य विशेषणतया वृत्तितायां हेतुतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नत्वविरहेणाऽव्याप्तिविरहादितरवारकपर्याप्तिनिवेशो व्यर्थः संसर्गे साक्षाद्विशेषणस्यैव संसर्गतावच्छेदकत्वात्परम्परया संसर्गविशेषणस्य संसर्गतावच्छेदकतायामेवावच्छेदकत्वादिति वाच्यम् । परम्परया संसर्गविशेषणस्य संसर्गतायां संसर्गतावच्छेदकतायां वाऽवच्छेदकत्वमित्यत्र विनिगमनाविरहेण परम्परया संसर्गविशेषणस्यापि संसर्गतावच्छेदकत्वम्, तथाच संयोगत्वस्यापि तादृशवृत्तितानिरूपितसंसर्गतावच्छेदकत्वसम्भवात्तादृशवृत्तितामादायाव्याप्तिवारणायेतरवारकपर्याप्तिनिवेशः ।

यदि च कालिकसंयोगान्यतरसम्बन्धेन धूमवान् पर्वत इति ज्ञाने संयोगसम्बन्धावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणत्वमेव विषयः, कालस्तादृशान्यतरसम्बन्धेन धूमवानिति ज्ञाने च कालिकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वं विषयः, तथाचान्यतरत्वेन संसर्गत्वे न किमपि मानमित्युच्यते, तदाऽन्यतरत्वेन संसर्गत्वे गुरुपादा एव शरणमिति ध्येयम् ।

एवमन्यतमत्वमपि भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम् । तथाच भेदरूपतयाऽन्यतरत्वाऽन्यतमत्वेऽव्यासज्यवृत्तिनी बोध्ये इत्यपि बोध्यम् ।

अत्र व्यासज्यवृत्तित्वमेकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम्, तद्विरहोऽव्यासज्यवृत्तित्वमिति तु न सम्यग् । वह्निधूमघटगतत्रित्वस्य वह्निधूमगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वरूपव्यासज्यवृत्तित्वाभावेनाऽव्यासज्यवृत्तित्वापातात् । अतो व्यासज्यवृत्तित्वमेकत्वावच्छिन्नानुयोगिताकपर्याप्तिकान्यत्वम् । एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगि यद्यत्तावदन्यतमत्वं वा । एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदवत्त्वमिति फलितम्, तद्विरहोऽव्यासज्यवृत्तित्वमिति ध्येयम् ।

(२) आधेयत्वसम्बन्धावच्छिन्नसाध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य व्याप्तित्वेपीत्यर्थः ।

न्याभाववद्वृत्तित्वसामान्याभावमादायैव लक्षणसमन्वयात्साध्यसामान्याभावनिवेशो व्यर्थ इति चेन्न। महानसीयवह्निमान् धूमादित्यादौ संयोगेन वह्न्यभावाधिकरणनिरूपितवृत्तित्वाभावस्य हेतौ सत्त्वेनातिव्याप्तिः। (१)एवं प्रतियोगितासंयोगान्यतरसम्बन्धेन वह्निसाध्यकपर्वतपर्वतीयवह्न्यभावान्यतरत्वहेतौ पर्वतीयवह्न्यभाववन्निरूपितवृत्तित्वाभावस्याऽन्यतरत्वहेतौ सत्त्वादत्रातिव्याप्तिश्चेत्यतो वृत्तित्वाभावकूटवत्त्वं हेतौ निवेशनीयम्। तत्त्वं च तादृशवृत्तित्वाभावत्वव्यापकत्वम्। हेतौ व्यापकता चाधेयतासम्बन्धेन तेन त्रितयाभावसत्त्वेपि न क्षतिः। एवं च तादृशकूटान्तर्गतमहानसीयवह्न्यभावाधिकरणनिरूपितवृत्तित्वाभावस्य धूमेऽसत्त्वादव्याप्तिः सङ्गतेति।

ननु तथापि महानसीयवह्न्यभावमादायाव्याप्तिवारणाऽसम्भवस्तत्प्रतियोगितायाः साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नत्वात्। न च साध्यतावच्छेदकेतरधर्मानवच्छिन्नत्वं प्रतियोगितायां निवेशनीयम्, तथा चोक्ताभावप्रतियोगितायां साध्यतावच्छेदकीभूतवन्हित्वेतरमहानसीयत्वावच्छिन्नत्वात्तदभाववारणमिति वाच्यम्। एवमपि विषयितया महानसीयवन्हेः साध्यतायां तज्ज्ञानत्वहेतौ महानसीयो नास्ति वन्हिर्नास्तीति प्रतीतिसिद्धाभावमादायाव्याप्तेः। न च साध्यतावच्छेदकीभूतयावद्धर्मावच्छिन्नत्वं प्रतियोगितायां निवेश्यमिति वाच्यम्। वन्हिमान् धूमादित्यादौ साध्यतावच्छेदकीभूतयावद्धर्माऽप्रसिद्ध्याऽव्याप्तेः। साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वस्य, स्वनिरूपितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकताव्यापकत्वस्य वा प्रतियोगितायां निवेशे विषयितासम्बन्धेन महानसीयवन्हिसाध्यकस्थले महानसीयाभावमादायाव्याप्तितादवस्थ्यम्। एवं साध्यतावच्छेदकेतरधर्मानवच्छिन्नत्वमित्यस्य यदि साध्यतावच्छेदकप्रतियोगिकभेदवद्धर्मानवच्छिन्नत्वमर्थस्तदा साध्याभावाप्रसिद्धिः, वह्न्यभावप्रतियोगितायामपि तादृशधर्मानवच्छिन्नत्वविरहात् वन्हित्वस्यापि साध्यतावच्छेदकघटोभयप्रतियोगिकभेदवत्त्वात्, तादृशभेदस्य च साध्यतावच्छेदकप्रतियोगिकत्वात्। साध्यतावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदवद्धर्मानवच्छिन्नत्वस्य तदर्थत्वे तद्दोषतादवस्थ्यम्। साध्यतावच्छेदकत्वेतरधर्मानवच्छिन्नप्रतियोगिताकभेदवद्धर्मानवच्छिन्नत्वोक्तौ तु व्यक्त्यैवानवस्थेति चेन्न।

(२)साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या प्रतियोगिता तादृशप्रतियोगिताकाभावस्य विवक्षितत्वात्। रूपवृत्तित्वं च प्रतियोगितायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन, तथा च वन्हिमान् धूमादित्यादौ साध्यो वन्हिः साध्यतावच्छेदकं वन्हित्वं साध्यतावच्छेदकता वन्हि-

---

(१) साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितानुयोगित्वनिष्ठावच्छेदकतानिरूपितपर्याप्तिनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावत्वेन प्रवेशे तु एवमिति।

(२) लक्षणमिदं गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमङ्गीकृत्य, तेन वह्नित्वनिष्ठसाध्यतावच्छेदकताया ऐक्येन तन्निष्ठसांसर्गिकप्रतियोगितावच्छेदकत्वस्य लाघवेन तद्व्यक्तित्व एव कल्पनीयतया साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि नाव्याप्तिः। न वा वह्निमान् धूमादित्यत्र साध्याभावाप्रसिद्ध्याऽव्याप्तिश्चेति। तदनभ्युपगमे तु साध्यतावच्छेदकतात्वसमनियतप्रतियोगितेति तदर्थो बोध्यः।

स्वे पर्याप्तिसम्बन्धेन वर्त्तते साध्यतावच्छेदकतानिष्ठायाः सांसर्गिकप्रतियोगितायाः अवच्छेदकं यत्साध्यतावच्छेदकतात्वन्तदवच्छिन्ना या साध्यतावच्छेदकतानिष्ठा सांसर्गिकप्रतियोगिता तादृशप्रतियोगितानिरूपकपर्याप्त्यनुयोगिवन्हित्वन्तान्निष्ठानुयोगितावच्छेदकं यद्वह्नित्वगतैकत्वं तत्र वन्हिर्नास्तीत्यभावीयप्रतियोगितैव वर्त्तते न तु महानसीयवान्हिर्नास्तीत्यभावप्रतियोगिता, तथाहि स्वं वन्हिनिष्ठा प्रतियोगिता तन्निरूपितावच्छेदकतायाः पर्याप्तिसम्बन्धेन वह्नित्वनिष्ठायाः सांसर्गिकप्रतियोगितावच्छेदकीभूतप्रतियोगितावच्छेदकतात्वावच्छिन्ना या प्रतियोगितावच्छेदकतानिष्ठा सांसर्गिकप्रतियोगिता तन्निरूपिकपर्याप्त्यनुयोगितावच्छेदकत्वम् वन्हित्वगतैकत्वे इति तादृशरूपवृत्तिप्रतियोगिताकाभावो वन्ह्यभावः, महानसीयवह्न्यभावप्रतियोगिता तु तादृशसम्बन्धेन महानसीयत्ववन्हित्वगतद्वित्वे वर्त्तते, न तु साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतवन्हित्वगतैकत्वे इति महानसीयवन्ह्यभावो न लक्षणघटकः । महानसीयवन्हिसाध्यकस्थले तु साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतमहानसीयत्ववह्नित्वगतद्वित्वे महानसीयवन्ह्यभावप्रतियोगितैव वर्तते, न तु प्रत्येकाभावीयप्रतियोगिता, तत्र महानसीयाभावप्रतियोगिता महानसीयत्वगतैकत्वे, एवं वन्ह्यभावप्रतियोगिता वन्हित्वगतैकत्वे इति तयोर्व्युदासः ।

केवलन्यूनवारकपर्याप्तिनिवेशश्च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या प्रतियोगिता तादृशप्रतियोगिताकाभावः । रूपवृत्तित्वं च प्रतियोगितायां स्वनिरूपितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

केवलेतरवारकपर्याप्तिनिवेशप्रकारश्च साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या प्रतियोगिता तादृशप्रतियोगिताकाभावः । रूपवृत्तित्वं च प्रतियोगितायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेति ।

ईदृशपरम्परायाः संसर्गत्वानुपगमे तु साध्यतावच्छेदकता(१)त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं(२) तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकीभूतावच्छेदकतात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावत्प्रतियोगिताकाभाव एव साध्याभावपदार्थ इति ।

ननु महानसीयवह्निमान् तज्ज्ञानत्वादित्यादौ वह्निमहानसीयाभावस्यापि साध्यतावच्छेदकगतद्वित्ववृत्तिप्रतियोगिताकत्वेन साध्याभावतया तदधिकरणमहानसीयव-

---

(१) अत्रेदं बोध्यम् । महानसीयवह्न्यभावप्रतियोगितावच्छेदकता–साध्यतावच्छेदकता वा–तद्व्यक्तिवृत्तित्वेन प्रमेयत्वादिना वा न व्यासज्यवृत्तिरिति तद्दोषतादवस्थ्यमतोऽवच्छेदकतात्वावच्छिन्नत्वं प्रतियोगितायामुपात्तम्, तथाचावच्छेदकतात्वेन सा व्यासज्यवृत्तिरेवेति ।

(२) अत्रेदृशावच्छेदकत्वं रूपस्य परिचायकम् अन्यथा तादृशानुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभाववदवृत्तित्वनिश्चयस्य वह्नित्वगतैकत्ववृत्तिप्रतियोगिताकाभाववद्वृत्तित्वबुद्धौ प्रतिबन्धकत्वानुपपत्तेः । तथाच तादृशावच्छेदकत्वसमानाधिकरणरूपनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावो लक्षणार्थः । अभावप्रतीत्याकारश्च तादृशरूपवृत्तिप्रतियोगिताकाभावाधिकरणनिरूपितवृत्तित्वं नास्तीति ।

ह्निविषयकज्ञाने हेतोः सत्त्वादव्याप्तिरिति चेन्न । द्वित्वस्य धीविशेषविषयत्वरूपत्वेन धीभेदेन भिन्नत्वात्, धीभेदस्य विषयताभेदकत्वात् । महानसीयवह्निमान् वह्निमहानसीयवानिति ज्ञानयोर्वैलक्षण्यं च महानसीयवह्निमानितिज्ञाने वह्नित्वं धर्मितावच्छेदकीकृत्य महानसीयत्वं भासते, एवं धर्मिपारतन्त्र्येण वह्नित्वेपि सामानाधिकरण्यसम्बन्धेन महानसीयत्वं भासते । वह्निमहानसीयवानितिज्ञाने विपरीतमिति । अत एव सुन्दरपर्वतः पर्वतसुन्दर इति शाब्दधीः, अन्यथोद्देश्यतावच्छेदकगतरूपे विधेयतावच्छेदकरूपभेदस्य तन्त्रत्वेन तादृशशाब्दबोधो न स्यात्तादृशरूपयोरैक्यादिति । अनुव्यवसायानुरोधेन च तादृशद्वित्वं भिन्नमेवेति साध्यतावच्छेदकगतद्वित्वरूपवृत्तिर्न तादृशप्रतियोगितेति न तामादाय दोषः(१) ।

---

(१) अत्रेदं तत्त्वम् । महानसीयवह्निर्नास्तीत्यभावप्रतियोगितावच्छेदकता न महानसीयत्वमात्रे पर्याप्ता महानसीयघटादिमति वह्निशून्ये तादृशाभावस्याऽसत्त्वमसङ्गात्, नापि वह्नित्वमात्रे, पर्वतादौ वह्निमति तादृशाभावस्याऽसत्त्वप्रसङ्गात्, किन्तु महानसीयत्वे वह्नित्वे च, तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणमहानसीयत्ववह्नित्वोभयधर्मावच्छिन्नाधिकरणतायाः वह्निशून्ये महानसे वह्निमति पर्वतादौ चासत्त्वान्नानुपपत्तिः । एवं वह्निघटोभयं नास्तीत्यभावप्रतियोगितावच्छेदकताऽपि न वह्नित्वमात्रे, वह्निमति घटशून्ये तादृशाभावस्यासत्त्वप्रसङ्गात्, नापि घटत्वमात्रे, वह्निशून्ये घटवति तादृशाभावानुपपत्तिप्रसङ्गात्, नाप्युभयत्वमात्रे, यत्किञ्चिदुभयवति तादृशाभावानुपपत्तिप्रसङ्गात्, नापि घटपटवृत्तित्वविशिष्टद्वित्वे, तादृशविशिष्टानुपस्थितावपि तथाप्रत्ययात्, अत एव न सामानाधिकरण्यसम्बन्धेन घटत्वपटत्वविशिष्टद्वित्वेपि, तयोः साक्षात्प्रतियोगिविशेषणतया प्रतियोगितावच्छेदकत्वेन प्रतियोगितावच्छेदकतावच्छेदकत्वविरहाच्च, नापि एकविशिष्टापरत्वे, तादृशविशिष्टानुपस्थितावपि तथाप्रत्ययात् विरुद्धयोरपि जलत्वपृथिवीत्वयोर्द्वित्वेनाभावप्रत्ययाच्चेति, तस्मात् उभयत्वे तद्धर्मितावच्छेदकतापन्ने घटत्वे पटत्वे चाऽवच्छेदकता स्वीक्रियते । न च घटत्वपटत्वोभयस्मिन्नेवोभयाभावप्रतियोगितावच्छेदकता स्वीक्रियतां किमुभयत्वे प्रतियोगितावच्छेदकत्वाङ्गीकारेणेति वाच्यम् । घटपटोभयं नास्तीति प्रतीतेर्घटाभावपटाभावद्वयाविषयकत्वे केवलं घटसत्त्वे पटसत्त्वे वा तादृशप्रतीतिर्न स्यात्तत्राभावद्वयविरहादतो घटत्वपटत्वोभयधर्मितावच्छेदककस्य द्वित्वस्य प्रतियोगितावच्छेदकं विना तयोरेकस्याऽवच्छेदकत्वानुपपत्तिः, अवच्छेद्याधिकरणवृत्तिर्यादृशसमुदायस्तत्रैवावच्छेदकतापर्याप्तिनियमादिति प्रत्येकधर्मावच्छिन्नाभावाद्वैलक्षण्यमुभयाभावस्य न स्यात्, उभयत्वस्य प्रतियोगितावच्छेदकत्वे तु व्यधिकरणानामपि व्यासज्यवृत्त्यवच्छेदकान्तरधर्मितावच्छेदकतापन्नानामवच्छेदकत्वोपगमात् । अत एव यत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्मान्तरधर्मितावच्छेदकतया धर्मद्वयादेर्भानं तत्र विभिन्नधर्मिविशेषणतापन्नयोर्धर्मयोरेकस्यावच्छेदकत्वमन्यत्रैकस्मिन्धर्मिणि विशेषणतापन्नयोरेवेति पुष्पवन्तपदशक्तिविचारे गदाधरभट्टाचार्येण स्पष्टमभिहितमिति ।

तत्रोभयत्वं द्विविधं द्वित्वसङ्ख्यारूपमपेक्षाबुद्धिविशेषविषयत्वं च । सङ्ख्यारूपद्वित्वस्य महानसीयत्ववह्नित्वादिष्ववृत्तित्वप्रसङ्गात्, सङ्ख्याया द्रव्याश्रितत्वनियमात् । चतुर्विंशतिगुणा इत्यादिप्रतीतेरनुपपत्तिश्च, गुणे गुणानङ्गीकारात् अगुणवत्वं चेति भाष्यात् । अत्र किरणावल्यामुदयनाचार्याः—"गुणेषु समानजातीयगुणाऽसद्भावस्तावदनवस्थाप्रसङ्गात् रूपादौ रसादिवेगान्तानां सद्भावे मूर्त्तत्वप्रसङ्गात् बुद्ध्यादीनान्तु प्रतिसन्धातृगुणत्वव्यवस्थितेरप्रसक्तिरेव शब्दस्य नभोनियतत्वात् । गुणेषु गुणयोगे च समवायिकारणत्वप्रसक्तौ द्रव्यत्वापत्तेर्गुणत्वव्याघात एव रूपावयवी च रूपेष्वेव वर्त्तेत इति घटादेर्नीरूपत्वप्रसङ्ग" इत्यादि । एवं निर्गुणत्वानिष्क्रियत्वे च रूपादयो गच्छन्ति चतुर्विंशतिगुणा महाञ्छब्द इत्यादयो व्यवहारास्तदेकार्थसमवादिना साधर्म्येण गौणाः समर्थनीयाः । चकारात्समवायिकारणताविरह इति । किरणावलीरहस्ये मथुरानाथः—ननु रूपादीनां निर्गुणत्वे किम्मानमित्यत आह समानजातीयेति । रसादिवेगान्तानामिति । रसगन्धस्पर्शगुरुत्वद्रवत्वस्नेहस्थितिस्थापकवेगानां सद्भाव इत्यर्थः । बुद्ध्यादीनामिति । बुद्ध्यादीनामिति । बुद्धिसुखदुःखेच्छाऽदृष्टभावनानामित्यर्थः । ननु तथापि सङ्ख्यादिसत्त्वे बाधकाभाव इत्यस्वरसादाह

ननु पर्याप्तिनिवेशेऽपि वह्निमान् धूमादित्यत्र महानसीयवह्न्यभाववारणाऽसम्भवः । तादृशप्रतियोगितानिरूपितावच्छेदकताया अनवच्छेदकतात्वेन व्यासज्यवृत्तित्वेऽपि स्वनिरूपित-'वह्नित्ववृत्तित्वविशिष्ट'—तदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन महानसीयवह्न्यभावप्रतियोगितायाः वह्नित्वगतैकत्वे(१) सत्त्वात् । सम्बन्ध-कोटौ निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताभिन्ना सती अवच्छेदकतात्वनिष्ठावच्छे-दकताभिन्ना याऽवच्छेदकता तदनिरूपिका ईदृशावच्छेदकताद्वयनिरूपिका या अवच्छे-दकतानिष्ठसांसर्गिकप्रतियोगिता तन्निरूपकपर्याप्त्यादिविवक्षणे न दोषः । तदवच्छेदकता-त्वावच्छिन्नसांसर्गिकप्रतियोगितायाः निरूपितत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताभिन्नेन अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्नेन च तत्त्वतद्व्यक्तिवृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकत्वेन निरूपिततया धर्तुमशक्यत्वादिति वाच्यम् । तदवच्छेदकतानिष्ठसांसर्गिकप्रतियोगितायां तत्त्वतद्व्यक्तिवृत्तित्ववैशिष्ट्यनिष्ठावच्छेदकतानिरूपकत्वसत्त्वेपि तदवच्छेदकतानिरूपकत्वघटोभ-याभावमादाय तादृशावच्छेदकत्वानिरूपकत्वस्यापि सत्त्वात्तद्दोषतादवस्थ्यात् । यदि च तादृ-शावच्छेदकत्वानिरूपकेत्यनेन तादृशावच्छेदकतानिरूपकत्वत्वनिष्ठावच्छेदकताभिन्नावच्छेदक-

---

गुणेष्विति । गुणत्वव्याघात एवेति । गुणत्वाभावप्रसङ्ग एवेत्यर्थः । रूपादीनां गुणत्वाभावे कदाचिदि-ष्टापत्तिसम्भवात् । घटादेर्निरूपत्वप्रसङ्ग इति । रूपादेर्घटाद्यवृत्तित्वप्रसङ्ग इत्यर्थः । तस्यासमवाय्यवृत्ते-र्घटाद्यवृत्तित्वनियमादिति भावः । इत्येव तत्त्वं । इत्यादीनि गुणानां निर्गुणत्वे मानमिति बोधः । आदिपदात् गुणेषु योगे मानाभावस्य परिग्रहः । ननु गुणानां निष्क्रियत्वनिर्गुणत्वे रसादयो गच्छन्ति चतुर्विंशतिगुणा-इत्यादयो व्यवहाराः कथं स्युरित्यत आह एवमिति । एवं रूपेणेत्यर्थः । तदेकार्थसमवायादिनेति । सचलनै-कार्थसमवायत्वादिरूपधर्मप्रकारेणेत्यर्थः । आदिपदादपेक्षाबुद्धिविशेषविषयत्वशब्दनिष्ठतारत्वादिपरिग्रहः । समवायिकारणेति । समवायिकारणावृत्तिनित्यवृत्तिजातिमत्त्वमित्यर्थः, तेन कर्मादौ नातिव्याप्तिः कर्मत्वादेर्नि-त्यावृत्तित्वात्सामान्यादेर्जातिमत्त्वविरहादिति भावः ।

तदयं निर्गलितार्थः । रूपादयः स्वात्मनि रूपाद्यनारम्भकाः रूपान्तरानुपलब्धेः, अनवस्थानाच्च ।
२ एवं रूपादिकं यदि रूपादिमत्स्यादिति मूलोक्ततर्काच्च रूपादीनां रूपादिमत्त्वविरहः । न च तथापि गुणे सं-ख्यासत्त्वे किं बाधकमिति वाच्यम् । संख्या न रूपाश्रिता गुणत्वाद्रूपवदित्यनुमानस्य, गुणो यदि समवायेन संख्यावान् स्यात्तदा द्रव्यं स्यात्समवायिकारणं वा स्यादिति तर्कस्य सद्भावाच्च, इष्टापत्तावन्त्यावयविसमवेतत्वा भावापत्तिरेव बाधिका । 'यद्द्रव्यन्तदन्त्यावयविनं न समवैतीति' व्याप्तेः । तस्मादेकं रूपमित्यत्र ज्ञानीय-प्रकारतायास्तद्व्यक्तित्वे द्वे रूपे इति ज्ञानीयप्रकारताया विशेष्यत्वे-अपेक्षाबुद्धिविशेषविशेषविषयत्वे-सम्भ-वात्सर्वं समञ्जसम् । न च संख्यात्मकद्वित्वादेः प्रकारत्वमपेक्षाबुद्धिविशेषविषयत्वस्य वेत्यत्र विनिगमनावि-रह इति वाच्यम् । गुणे संख्यायास्तस्या अनन्तधर्मसम्बन्धकल्पने च महागौरवात् । न च तथापि द्वित्वादिकारणतयाऽपेक्षाबुद्धेरावश्यकत्वेनोभयमत एवाऽपेक्षाबुद्धिविशेषविषयत्वमेव द्वित्वादिकमास्तां किं संख्यात्मकद्वित्वकल्पनेनेति वाच्यम् । व्यक्तिद्वयमात्रविशेष्यकबुद्धिविषयत्वं द्वित्वमेवं व्यक्तित्रयमात्रविशेष्य-कबुद्धिविषयत्वं त्रित्वमित्यादिकल्पने विषयताया अपेक्षाबुद्धीनां चाननुगतत्वादित्यन्यत्र विस्तरः ।

केचित्तु संख्यात्मकद्वित्वादेः समवायेन गुणादावृत्तित्वेऽपि पर्याप्तिसम्बन्धेन तत्र वृत्तौ बाधकाभावादि-त्यलमपेक्षाबुद्धिविशेषविषयत्वरूपत्वकल्पनेनेति प्राहुः । तच्चिन्त्यम् ।

(१) यद्यपि वह्नित्ववृत्तित्ववैशिष्ट्यअवच्छेदकतात्वोभयधर्मावच्छिन्नासांसर्गिकप्रतियोगिता नाव-च्छेदकतात्वावच्छिन्ना, तथापि वह्नित्ववृत्तित्ववैशिष्ट्यअवच्छेदकतात्वोभयपर्याप्ताया अपि प्रतियोगितावच्छे-दकताया अवच्छेदकतात्वपर्याप्तत्वमक्षतमेवेत्यवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं वह्नित्वगतैकत्वेऽस्तीति ।

त्वानिरूपकनिरूपकत्वनिष्ठप्रतियोगिताकाभावस्य विवक्षायां न दोषः, तादृशावच्छेदकतानिरूपकत्वघटोभयाभावीयप्रतियोगिताया निरूपकत्वत्वनिष्ठावच्छेदकताभिन्नेन घटत्वनिष्ठावच्छेदकत्वेन निरूपकत्वाद्वारणमित्युच्यते, तदाऽसम्भवः, निरूपकत्वत्वनिष्ठावच्छेदकताया अपि निरूपकत्वत्वनिष्ठावच्छेदकताघटोभयभेदवत्त्वात्। तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकभेदविवक्षणे त्वनवस्थेति चेन्न।

साध्यताविशिष्टप्रतियोगिताकाभाव एव साध्याभावपदार्थः। साध्यतावैशिष्ट्यं च प्रतियोगितायां स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन। स्ववृत्तित्वं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वसम्बन्धेन। उभयत्रावच्छेदकतावैशिष्ट्यं च स्वसामानाधिकरण्य–स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वानवच्छेदकानवच्छिन्नत्व–स्ववृतित्वैतचतुष्टयसम्बन्धेन। उभयत्र वैशिष्ट्यघटकस्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वरूपेणेति(१)। केवलन्यूनवारकपर्याप्तिनिवेशप्रकारश्च साध्यताविशिष्टा या प्रतियोगितेति। वैशिष्ट्यं च स्ववृत्तित्वसम्बन्धेन। स्ववृत्तित्वं च पूर्ववत्। केवलेतरवारकपर्याप्तिनिवेशश्च साध्यताविशिष्टा या प्रतियोगितेति। वैशिष्ट्यं च स्वनिरूपितावच्छेदताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसम्बन्धेन। अवच्छेदकतावैशिष्ट्यं च उक्तचतुष्टयसम्बन्धेन। स्वातन्त्र्येणेतरवारकपर्याप्तिनिवेशो नास्ति प्रयोजनविरहादिति।

अत्र न्यूनवारकपर्याप्तौ स्वसामानाधिकरण्यानुपादाने तार्णवन्हेः प्रतियोगितासम्बन्धेन

---

ननु स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकेत्यनेन स्वनिरूपिताऽवच्छेदकतात्वगतएकत्वरूपवृत्तिप्रयोगिताकपर्याप्तेरेव प्रवेशः कार्यः। रूपवृत्तित्वं च प्रतियोगितायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। एवं च स्वं महानसीयवन्ह्यभावप्रतियोगिता तन्निरूपितवह्नित्ववृत्तित्वविशिष्टाऽवच्छेदकतावृत्त्यवच्छेदकतात्वगतैकत्ववृत्तित्वं सांसर्गिक प्रतियोगितायां नास्ति किन्तु वह्नित्ववृत्तित्ववैशिष्टच अवच्छेदकतात्वगताद्वित्ववृत्तित्वमस्ति, तथाहि स्वं वह्नित्ववृत्तित्वविशिष्टावच्छेदकतानिष्ठसांसर्गिकप्रतियोगिता तन्निरूपितवह्नित्ववृत्तित्व वैशिष्टचअवच्छेदकतात्वोभयनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतावह्नित्ववृत्तित्ववैशिष्टचअवच्छेदकतात्वगतद्वित्वे इति तद्वारणेपि स्वनिरूपितावच्छेदकतापदेन तदवच्छेदकतात्वधारणे पुनर्दोषतादवस्थ्यं प्रकारान्तरेण कथंचिद्वारणेपि व्यक्तेवाऽनवस्थेति चेत्

अत्र केचित्। वह्नित्ववृत्तित्वविशिष्टाऽवच्छेदकतावद्वह्नित्वमिति प्रतीतावचच्छेदकतानिष्ठाधेयत्वं वह्नित्ववृत्तित्ववैशिष्टचावच्छिन्नमेव न त्ववच्छेदकतात्वावच्छिन्ना गौरवात्, नापि वह्नित्ववृत्तित्ववैशिष्टचअवच्छेदकतात्वोभयधर्मावच्छिन्ना, मानाभावात् गौरवाच्च। न च वह्नित्ववृत्तित्वावच्छिन्नाधेयतायास्तत्प्रतीतिविषयत्वे वह्नित्ववृत्तिमद् वह्नित्वं, वह्नित्ववृत्त्यवच्छेदकतावद्वह्नित्वमिति प्रतीत्योर्वैलक्षण्यानुपपत्तिरिति वाच्यम्। एकत्रावच्छेदकतात्वस्य प्रकारतया भासमानत्वमपरत्र नेति वैलक्षण्यसम्भवात्। तथा च साध्यतावच्छेदकगतरूपवृत्तिप्रतियोगिताकाभाव एव साध्याभावपदार्थः। रूपवृत्तित्वं च प्रतियोगितायां स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छेदकत्वसम्बन्धेनेति न काप्यनुपपत्तिरित्याहुः।

(१) न चैकधर्मिविशेषणतापन्नेषु नानाधर्मेष्वप्येकावच्छेदकता लाघवात्तथा च महानसीयत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताविशिष्टान्यत्वविरहेणाव्याप्तितादवस्थ्यमिति वाच्यम्। यथा नानाधर्मिविशेषणतापन्नेष्वेकाऽवच्छेदकता न स्वीक्रियते तथा नानासम्बन्धेन नानाधर्मप्रकारेण भासमानेष्वेकावच्छेदकता न स्वीक्रियते, अन्यथा सावच्छिन्नत्वनिरवच्छिन्नत्वरूपविरुद्धधर्मयोः सम्बन्धद्वयावच्छिन्नत्वस्य च समावेशापत्तेरिति ध्येयम्।

साध्यत्वे तदभावत्वहेतौ तार्णाभावं वह्न्यभावं चादायाव्याप्तिरतस्तदुपात्तम् । एवं स्वावच्छेदकसम्बन्धावच्छिन्नत्वानुपादाने समवायेन वह्नित्वविशिष्टत्वे सति तद्वह्न्यनुयोगिककालिकेन वह्नित्वविशिष्टं यत्तस्य प्रतियोगितासम्बन्धेन साध्यत्वे तदभावत्वहेतौ प्रत्येकं समवायेन वह्नित्वविशिष्टाभावं तद्वह्न्यनुयोगिककालिकेन वह्नित्वविशिष्टाभावं चादायाव्याप्तिः स्यात् । एवं वह्नित्वत्वेन वह्नित्वविशिष्टं यत्तस्य प्रतियोगितासम्बन्धेन साध्यत्वे तदभावत्वहेतौ स्वरूपतो वह्नित्वविशिष्टाभावमादायाव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वोपादानम् । स्ववृत्तित्वनिवेशस्तु स्वरूपतो वह्नित्वविशिष्टस्य प्रतियोगितासम्बन्धेन साध्यत्वे तदभावत्वहेतौ वह्नित्वविशिष्टाभावमादायाव्याप्तिवारणाय ।

एवमितरवारकपर्याप्तौ वह्निमान् धूमादित्यादौ तार्णवह्न्यभावमादायाव्याप्तिस्तार्णत्वनिष्ठावच्छेदकताया निरवच्छिन्नत्वेन समवायसम्बन्धावच्छिन्नत्वेन च त्रितयसम्बन्धेन साध्यतावच्छेदकताविशिष्टत्वादतः सामानाधिकरण्यनिवेशः ।

न च तथापि कालिकेन गन्धविशिष्टस्य समवायेन गुणविशिष्टस्य तादात्म्येन साध्यतायां जन्यद्रव्यत्वहेतौ समवायेन गन्धविशिष्टस्य कालिकेन गुणविशिष्टस्य भेदमादायाव्याप्तिर्गन्धनिष्ठभेदीयप्रतियोगितावच्छेदकताया गुणनिष्ठसाध्यतावच्छेदकताविशिष्टत्वाद् गुणनिष्ठभेदीयप्रतियोगितावच्छेदकताया अपि गन्धनिष्ठसाध्यतावच्छेदकताविशिष्टत्वादिति वाच्यम् । सामानाधिकरण्यपदेन व्यापकताया विवक्षणात्, तथाच गन्धनिष्ठतत्प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकताव्यापकत्वाभावेन साध्यतावच्छेदकताविशिष्टान्यतया तादृशभेदस्य लक्षणाघटकत्वान्नाव्याप्तिरिति । एवं समवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यत्वे धूमहेतौ समवायेन वह्नित्वविशिष्टत्वे सति तद्वह्न्यनुयोगिककालिकेन वह्नित्वविशिष्टं यत्तदभावमादायाव्याप्तिरतः स्वावच्छेदकसम्बन्धावच्छिन्नत्वप्रवेशः । एवं समवायेन स्वरूपतो वह्नित्वविशिष्टस्य विषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वहेतौ समवायेन स्वरूपतो वह्नित्वविशिष्टत्वे सति वह्नित्वत्वेन वह्नित्वविशिष्टं यत्तदभावमादायाव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वोपादानम् । तदर्थश्चाऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्मानवच्छिन्नत्वम्, तेन निरवच्छिन्नसाध्यकस्थले न दोषः । स्ववृत्तित्वदलं तु वह्नित्वत्वेन वह्नित्वविशिष्टस्य विषयितया साध्यत्वे तज्ज्ञानत्वहेतौ समवायेन स्वरूपतो वह्नित्वविशिष्टाभावमादायाव्याप्तिवारणायेत्यलम् ।

केचित्तु साध्यतावच्छदकव्यापकप्रतियोगिताकाभाव एव साध्याभावपदार्थः, तथाच महानसीयवह्न्यभावप्रतियोगितायाः साध्यतावच्छेदकव्यापकत्वविरहान्नाव्याप्तिः । न वा गुरुधर्मस्य प्रमेयवह्नित्वादेः प्रतियोगितानवच्छेदकत्वेऽपि तद्रूपेण साध्यतायामव्याप्तिः । न च वह्निघटोभयाभावमादायाव्याप्तिवारणासम्भवस्तत्प्रतियोगितायाः साध्यतावच्छेदकव्यापकत्वादिति वाच्यम् । साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावस्य विवक्षितत्वात् । प्रतियोगितायां समनैयत्यं चसाध्यतावच्छेदकविशिष्टत्वम् । वैशिष्ट्यं च स्वव्यापकत्वस्ववृत्तित्वोभयसम्बन्धेन । स्ववृत्तित्वं च व्यापकतासम्बन्धेन, तेन प्रमेयसाध्यकस्थले समनियतत्वघटक—प्रमेयत्वाभाववद्वृत्तित्वरूपप्रमेयत्वव्याप्यत्वाप्रसिद्धावपि न क्षतिः । स्वव्यापकत्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वम् । स्वं

साध्यतावच्छेदकम् , तेन व्यापकत्वस्य वृत्त्यनियामकतया तस्य प्रतियोगितानवच्छेदकत्वेपि न क्षितिरित्याहुः ।

तन्न । एवमपि वह्नित्वेन तार्णातार्णोभयं नास्ति वह्नित्वेन तद्वह्नितदन्यवह्निएतदुभयं नास्तीत्याद्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तितादवस्थ्यात् । न च तत्रापि वह्नित्वेन तार्णातार्णोभयं नास्ति वह्निघटोभयं नास्तीत्यभावमादायाव्याप्तिस्तत्प्रतियोगिताया वह्नित्वगतैकत्ववृत्तित्वादिति वाच्यम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकत्वस्य विवक्षितत्वात् । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व–स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन । तथाच निरुक्तोभयाभावप्रतियोगितायाः स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वह्नित्वगतैकत्वे सत्त्वेपि स्वनिरूपकानुयोगितानिरूपिततार्णातार्णोभयत्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तत्र विरहादुक्तोभयसम्बन्धेन प्रतियोगिताया वह्नित्वगतैकत्वेऽवृत्तित्वान्न दोषः । वह्निर्नास्तीत्यभावप्रतियोगिताया एवोक्तोभयसम्बन्धेन वह्नित्वगतैकत्वे सत्त्वात्तत्सङ्ग्रहः ।

अन्ये तु विलक्षणप्रतियोगितासम्बन्धेन साध्यविशिष्टाभाव एव साध्याभावपदार्थः । तथाच तादृशप्रतियोगितासम्बन्धेन वह्निविशिष्टत्वस्योभयाभावादौ विरहान्न कोपि दोष इति प्रवदन्ति ।

साध्यतावच्छेदकविशिष्टप्रतियोगिताकाभाव एव साध्याभावपदार्थं इत्यपि केचिद् । साध्यतावच्छेदकवैशिष्ट्यं च प्रतियोगितायां तादात्म्यसम्बन्धेन । सामान्याभा(१)वीयप्रति-

---

(१) तथा च स्वावच्छिन्नत्वस्वतादात्म्योभयसम्बन्धेन धर्मविशिष्टप्रतियोगिताकाभाव एव सामान्याभावः, सामान्याभावप्रतियोगिताऽवच्छेदकस्वरूपैवेति नातिरिक्ता, प्रतियोगित्वादिकं तु स्वरूपसम्बन्धविशेष इत्युत्तरग्रन्थविरोधाद् गौरवाच्च । न च प्रतियोगिताया अवच्छेदकस्वरूपत्वेऽवच्छेद्यावच्छेदकभावानुपपत्तिरवच्छेद्यावच्छेदकभावस्य भेदानियतत्वादिति वाच्यम् । केवलस्य वह्नित्वादेरवच्छेदकत्वमभावनिरूपितत्वविशिष्टस्य चावच्छेद्यत्वमित्यभ्युपगमात् । न च तथापि संयोगेन घटाभावात्समवायेन घटाभावस्य वैलक्षण्यं न स्यादभाववैलक्षण्यं हि प्रतियोगित्ववैलक्षण्याधीनं प्रतियोगितयोश्च घटत्वरूपत्वेनैक्यात्, संयोगेन घटवति समवायेन घटाभावानुपपत्तिश्च स्यादिति वाच्यम् । समवायेन घटाभावप्रतियोगित्वं संयोगावच्छिन्नमिति व्यवहारविरहात्प्रत्युत न संयोगावच्छिन्नमित्येव व्यवहारात्, प्रतियोगितायाः प्रतियोगितावच्छेदकरूपत्वेपि न निखिलसम्बन्धावच्छिन्नत्वं, समवायेन घटाभावीयप्रतियोगितात्वावच्छिन्ननिरूप्यतायां समवायत्वावच्छिन्नसंसर्गतावच्छिन्ननिरूपकतानिरूपितत्वमेव स्वीक्रियते, न तु संयोगत्वावच्छिन्ननिरूपकतानिरूपितत्वमिति तत्प्रतियोगित्वयोर्वैलक्षण्योपपत्तिः । न वा संयोगेन घटवति समवायेन घटाभावस्यानुपपत्तिरपि संयोगेन घटाभावप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावदच्छेदकतावतः सम्बन्धस्यैव प्रतियोगितावच्छेदकतया भानादिति । नापि प्रतियोगितदभावोभयस्वरूपा यत्किञ्चित्प्रतियोगिस्वरूपत्वे प्रतियोग्यन्तरे प्रतियोगित्वव्यवहारानुपपत्तिः विनिगमनाविरहश्च. निखिलप्रतियोगिस्वरूपत्वे आनन्त्यम् , अनन्तासु प्रतियोगितात्वसम्बन्धस्य प्रतियोगित्वधीविषयतायाश्च कल्पनापत्त्या गौरवञ्चेति । एवं प्रतियोगितायाः प्रतियोगिस्वरूपत्वे आधाराधेयभावानुपपत्तिरपि, कालिकेन जन्येतदुपपत्तावपि महाकालातिरिक्तनित्यानुयोगिककालिकानङ्गीकारेण गगनादौ तदनुपपत्तिरेव । तादात्म्यसम्बन्धस्य च वृत्त्यनियामकत्वात्तादात्म्येन घटे घट इति

योगिता च लाघवात्प्रतियोगितावच्छेदकस्वरूपैवेति वह्निसामान्याभावीयप्रतियोगितायां साध्यतावच्छेदकतादात्म्यमुपपन्नमिति । (१)सामान्यरूपेण विशेषाभावप्रतियोगिता च प्रतियोग्यंशे प्रकारीभूतधर्मस्वरूपा (२)व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगिता

---

प्रतीत्यभावादिति ध्येयम् । अत्रेदं बोध्यम् । प्राचीनमते सामान्याभावीयप्रतियोगिता प्रतियोगितदभावोभयस्वरूपा विशेषाभावीयप्रतियोगिता च केवलप्रतियोगिस्वरूपा उभयोरेव प्रतियोगिस्वरूपत्वे सामान्यभावप्रतियोगित्वं विशेषाभावप्रतियोगित्वाभिन्नमिति प्रतीत्यापत्तेः । अथ सामान्यभावप्रतियोगितात्वसामानाधिकरण्येन धूमविशेषाभावीयप्रतियोगितात्वावच्छिन्नप्रतियोगिकतादात्म्यसत्त्वादुक्तापत्तिस्तदवस्थैवेति चेन्न । असति बाधके उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदेन विधेयान्वयस्तथा च धूमसामान्याभावप्रतियोगितात्वावच्छेदेन विशेषाभावप्रतियोगितात्वावच्छिन्नप्रतियोगिकतादात्म्याविरहात् । न च तथापि तद्धूमाभावीयप्रतियोगितात्वावच्छेदेन धूमसामान्याभावीयप्रतियोगितात्वावच्छिन्नप्रतियोगिकतादात्म्यसत्त्वाद् विशेषाभावप्रतियोगित्वं सामान्याभावप्रतियोगित्वाभिन्नमित्यापत्तिस्तदवस्थैवेति वाच्यम् । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकतादात्म्यस्य व्यासज्यवृत्तिधर्मे एव स्वीकारान्न तु अव्यासज्यधर्मेपि, तथाच नोक्तापत्तिरिति । अत एव व्यासज्यवृत्तिधर्मावच्छिन्नभेदस्य केवलान्वयित्वमिति ध्येयम् ।

नन्वन्नाऽविशेषापत्तिभयेन सामान्याभावप्रतियोगित्वमभावस्वरूपमात्रमेव कल्पनीयम् विशेषाभावप्रतियोगित्वं प्रतियोगिमात्रस्वरूपमिति चेन्न । समनियताभावानामैक्यमते संख्याभावीयप्रतियोगित्वपरिमाणाभावप्रतियोगित्वयोरविशेषापत्तेः । तथा च संख्यातदभावोभयस्वरूपा त्वेका, परिमाणतदभावोभयस्वरूपा चापरेत्यभावाऽभेदेपि प्रतियोगितयोर्भेदः । ननु विशेषाभावप्रतियोगित्वमभावस्वरूपं सामान्याभावप्रतियोगित्वं प्रतियोगिस्वरूपमिति चेन्न । तद्रूपाभावप्रतियोगित्वतद्रसाभावप्रतियोगित्वयोरविशेषापत्तेः । ननु विशेषाभावप्रतियोगित्वं प्रतियोगितदभावोभयस्वरूपं सामान्याभावप्रतियोगित्वं प्रतियोगिमात्रस्वरूपमस्तु विनिगमनाविरहादिति चेन्न । विशेषाभावप्रतियोगित्वस्योभयस्वरूपत्वेऽनन्ताभावस्वरूपत्वकल्पने गौरवन्तदपेक्षया लाघवात्प्रतियोगिस्वरूपत्वम् । ननु सामान्याभावीयप्रतियोगित्वस्योभयरूपत्वे समनियताभावानामैक्यात्संयोगेन द्रव्याभावप्रतियोगित्व-संयोगेन प्रमेयाभावप्रतियोगित्वयोरविशेषापत्तिस्तत्र प्रमेयाभावप्रतियोगितात्वावच्छेदेनाऽविशेषापत्त्यसम्भवेपि द्रव्याभावीयप्रतियोगितात्वावच्छेदेनाभेदसत्त्वात्तादृशप्रतियोगित्वस्य द्रव्ये द्रव्याभावे च सत्त्वेन तत्र प्रमेयप्रमेयाभावात्मकप्रतियोगितातादात्म्यसत्त्वादिति चेन्न । संयोगेन प्रमेयसामान्याभावप्रतियोगितावच्छेदकत्वस्य नानाविधप्रमाविषयत्वे कल्पनापेक्षया लघोर्द्रव्यत्वस्य कल्पनीयत्वान्नोक्तदोषावकाश इति दिक् । एवमवच्छेदकत्वमपि स्वरूपसम्बन्धविशेषः । तत्र लघौ धर्मेऽवच्छेदकत्वस्वीकारेऽतिप्रसङ्गाद्यभावश्चेद् गुरुधर्मेऽवच्छेदकता नाङ्गीक्रियते इति नियमः । एतन्मते ज्ञानभेदेन विषयताभेदोऽभ्युपेयते तथा चैकदेशविषयत्वादीनामवच्छेदकत्वेपि क्षत्यभाव एव । अनतिरिक्तवृत्तित्वमपि तत् । तच्च प्रतियोगितावच्छेदकमित्यत्र न प्रतियोगिताऽनतिरिक्तवृत्तित्वं प्रतियोगितायाः प्रतियोगिस्वरूपत्वेन धूमत्वादेस्तदनवच्छेदकत्वापत्तेरतः प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वरूपन्तत्, तद्घटकं चावच्छेदकत्वं स्वरूपसम्बन्धविशेष इत्यन्यत्र विस्तरः ।

(१) सामान्यरूपेणेति । वह्नित्वेन महानसीयवह्निर्नास्तीत्यभावप्रतियोगिता महानसीयवह्निस्वरूपेत्यर्थः । तत्त्वं च धर्मविशिष्टप्रतियोगिताकाभाववत्त्वम् । वैशिष्ट्यं स्ववृत्तित्व-स्वाश्रयसामानाधिकरण्य-स्वावच्छिन्नानुयोगितापर्याप्तिनिरूपकताकाधिकरणतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसम्बन्धेन । स्ववृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसम्बन्धेन, तादृशधर्मः प्रतियोगितावच्छेदकीभूतसामान्यधर्मनिष्ठमेकत्वमिति । प्रतियोगितावच्छेदकस्वरूपत्वे वह्निमति पर्वते वह्नित्वेन महानसीयवह्निर्नास्तीति प्रतीतिर्न स्यात्स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सममभावस्य विरोधित्वादिति ध्येयम् ।

(२) ननु किं नाम व्यधिकरणधर्मावच्छिन्नाभावत्वम्? न तावत्स्वप्रतियोगिस्वाधिकरणनिरूपितवृत्तित्वा-

(१)चातिरिक्तैवेत्यन्यत्र विस्तरः ।

एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वांमित्यस्यापि साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या प्रतियोगितेत्यर्थः । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । ईदृशपरम्परायाः संसर्गत्वानुपगमे तु साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितावच्छेदकीभूतावच्छेदकतात्वावच्छिन्ननिरूप्यतानिरूपितानिरूपकतावत्संसर्गतानिष्ठावच्छेदकताकप्रतियोगितेत्यर्थः ।

पर्याप्तावनवस्थादिदोषपक्षे अव्यासज्यवृत्तिधर्मस्यैकत्वादेः पर्याप्त्यनभ्युपगमे वा साध्यतानिरूपितसंसर्गतासमनियतसंसर्गताकत्वं विवक्षणीयम् । समनैयत्यं च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन, अवच्छेदकतावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्योभयसम्बन्धेनेति ।

ननु महानसीयवह्न्यभाववारणार्थं यदि साध्यतावच्छेदकेतरधर्मानवच्छिन्नत्वं निवेश्यते, तदा साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनं व्यर्थं साध्यतावच्छेदकेतरानवच्छिन्नत्वनिवेशेनैव समवायादिना वन्ह्यभावस्य वारणात्, तथाहि वन्हिमान् धूमादित्यत्र साध्यतावच्छेदकं वह्नित्वं संयोगश्च तदितरसमवायावच्छिन्नत्वमेव तत्प्रतियोगितायामिति चेन्न । समवायिनः संयोगेन साध्यतायां घटत्वहेतौ संयोगिनः समवायिनाऽभावमादायाव्याप्तेः । न च तन्निवेशेऽपि समवायस्य साध्यतावच्छेदकत्वात्सम्बन्धत्वाच्च–वृत्तिमत्त्वरूपधर्मत्वस्य सम्बन्धे, विशिष्टधीनियामकत्वरूपसंबन्धत्वस्य धर्मेऽपि सत्त्वेन तदवच्छिन्नत्वयोर्वैलक्षण्यविरहादव्याप्ति

---

भाववान्यो धर्मः स एव व्यधिकरणधर्मस्तदवच्छिन्नप्रतियोगिताकाभावत्वं, गुणकर्मान्यत्वविशिष्टसत्तया गुणाभावस्य व्यधिकरणधर्मावच्छिन्नाभावत्वानुपपत्तिप्रसङ्गात्। न च प्रतियोगित्वाधिकरणनिरूपितवृत्तितानवच्छेदकीभूतधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वं तत्, गुणान्यत्वस्य तादृशवृत्तितानवच्छेदकतया नानुपपत्तिरिति वाच्यम् । तथासति स्वरूपतो घटत्वेन वह्न्यभावस्य घटात्मकः पटो नास्तीत्यभावस्य च तादृशप्रतियोगितावच्छेदकतावच्छेदकाऽप्रसिद्ध्या व्यधिकरणधर्मावच्छिन्नाभावत्वानुपपत्तिप्रसङ्गादिति चेन्न । प्रतियोगिताविशिष्टप्रतियोगिताकाभावत्वं व्यधिकरणधर्मावच्छिन्नाभावत्वम् । वै० स्वतादात्म्य–स्वाश्रयनिष्ठाधिकरणतानिरूपितानिरूपकताविशिष्टान्याऽवच्छेदकताकत्वोभयसम्बन्धेन । निरूपकतावैशिष्ट्यं चावच्छेदकतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्व–स्वसामानाधिकरण्य–स्वानवच्छेदकानवच्छिन्नत्व–स्ववृत्तित्वैतचतुष्टयसम्बन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन । उभयत्रापि स्वानवच्छेदकत्वं न स्वावच्छेदकभिन्नत्वं यत्र स्वावच्छेदकाऽप्रसिद्धिस्तत्र तद्भिन्नत्वस्याप्यप्रसिद्धिरतोऽवच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वमेव तत्, एवं च न कोपि दोषः ।

नव्यास्तु प्रतियोगिताविशिष्टाभावत्वमेव तत् । वै० स्वाधिकरणानिरूपितवृत्तित्वाभाववद्धर्मावच्छिन्नप्रतियोगिताकत्वस्वाधिकरणानिरूपितवृत्तितानवच्छेदकीभूतधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकत्वान्यतरसंबन्धेनेति । सामान्यरूपेण विशेषाभावे विशेषरूपेण सामान्याभावे वा न किमपि मानमिति प्राहुः ।

(१) प्रतियोगितायाः प्रतियोगितावच्छेदकादिस्वरूपत्वे घटे पटत्वेन पटाभावप्रतियोगित्वव्यवहारापत्तिः स्यात् न स्याच पटे तादृशप्रतियोगित्वव्यवहारः । प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया समभावस्य विरोधाद् घटवति तादृशाभावस्यासत्त्वप्रसङ्गाच्चेति विरम्यते ।

ननु तथापि गुणत्ववान् ज्ञानत्वाद् सत्तावान् जातेरित्यादौ विषयित्वाऽव्याप्यत्वादिसम्बन्धेन तादृशसाध्याभाववति ज्ञानादौ ज्ञानत्वजात्यादेर्वर्त्तमानत्वादव्याप्तिः ।

---

तादवस्थ्यमिति वाच्यम् । अनवस्थाभयेन संबन्धसंबन्धभानस्यानभ्युपगन्तव्यतया संबन्धनिष्ठायाः अवच्छेदकतायाः संबन्धानवच्छिन्नत्वस्य सिद्धान्तसिद्धतया साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमित्यनेन साध्यतानिरूपिता या किंचित्संबन्धानवच्छिन्नाऽवच्छेदकता तदाश्रयनिष्ठकिंचित्सम्बन्धानवच्छिन्नावच्छेदकताकत्वं विवक्षणीयम्, तस्यैव प्रतियोगितायां निवेशात्। न च संयोगसमवायोभयसंबन्धेन वह्न्यभाववारणासंभव इति वाच्यम् । साध्यतानिरूपिता या किंचित्सबन्धानवच्छिन्नावच्छेदकता तदभाववन्निष्ठा या किंचित्सम्बन्धानवच्छिन्नावच्छेदकता तदनिरूपकत्वस्य प्रतियोगितायां निवेशात् । एवं च समवायिनः संयोगेन साध्यतायां साध्यतानिरूपिता या किञ्चित्सबन्धानवच्छिन्नावच्छेदकता—संयोगनिष्ठा न तु समवायनिष्ठा तदभाववान् समवायस्तन्निष्ठकिञ्चित्संबन्धानवच्छिन्नावच्छेदकत्वानिरूपकत्वमुक्तोभयाभावप्रतियोगितायां नास्ति । न च साध्यतानिरूपितावच्छेदकत्वाभाववन्निष्ठाकिञ्चित्सम्बन्धानवच्छिन्नावच्छेदकताकत्वमेवोच्यतां किं प्रथमावच्छेदकतायां यत्किंचित्सम्बन्धानवच्छिन्नत्वनिवेशेन समवायेन संयोगयभावस्य साध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वविरहेणैव वारणादिति वाच्यम् । विषयिताविशिष्टस्य कालिकेन साध्यत्वे घटत्वहेतौ विषयिताविशिष्टस्य विषयितयाऽभावमादायाव्याप्तिः । एवं द्वितीयावच्छेदकतायां किंचित्संबन्धावच्छिन्नत्वानुपादानेऽसंभवः स्यात् ।

एवं साध्यतावच्छेदकधर्मावच्छिन्नमित्यस्य साध्यतानिरूपिता या किञ्चित्संबन्धावच्छिन्नावच्छेदकता तदभाववन्निष्ठा या किञ्चित्सम्बन्धावच्छिन्नावच्छेदकता तदनिरूपकत्वमर्थः । अत्र प्रथमावच्छेदकतायां किञ्चत्संबन्धावच्छिन्नत्वानुक्तौ कालिकविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतौ विषयिताविशिष्टस्य विषयितयाऽभावमादायाव्याप्तिः । एवं द्वितीयावच्छेदकतायां तदनुपादानेऽसंभवः स्यादिति ।

साध्याभाववदित्यत्र सम्बन्धविशेषावच्छिन्नत्वं निवेशयितुमपक्रमते **नन्विति** । **तादृशसाध्याभाववतीति** । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववतीत्यर्थः । विषयितासम्बन्धेन गुणत्वाभावाधिकरणे—गुणत्वाभावविषयकज्ञाने ज्ञानत्वस्य वृत्तेरव्याप्तिरिति भावः । विषयितासम्बन्धस्य वृत्त्यनियामकत्वात्तेन सम्बन्धेनाधिकरणा(१)ऽप्रसिद्ध्या तत्सम्बन्धमादायाव्याप्त्यभावादाह **सत्तावान् जाते-**

---

(१) अत्रेदं बोध्यम्। वृत्त्यनियामकसम्बन्धावच्छिन्ना यथा निरूपकता न भवति तथा तत्सम्बन्धावच्छिन्ना प्रतियोगितापि न स्वीक्रियते । न च वृत्त्यनियामकसम्बन्धस्याऽप्यभावीयप्रतियोगितावच्छेदकत्वमस्तु संयोगादिवदिति वाच्यम् । स्वामित्वसम्बन्धेन धनाभावस्यातिरिक्तस्य कल्पने गौरवापत्तेः । यद्यपि धनस्वामित्वाभावस्वामित्वसम्बन्धेन धनाभावयोः समनियततया ऐक्ये नातिरिक्ताभावकल्पनाप्रयुक्तं गौरवम् । तथापि सम्बन्धभेदेन प्रतियोगिताभेदस्यावश्यकतया स्वरूपसम्बन्धावच्छिन्नधनस्वामित्वनिष्ठप्रतियोगितातो स्वामित्वसम्बन्धावच्छिन्नधननिष्ठप्रतियोगिताया अतिरिक्तत्वकल्पने गौरवमिति व्युत्पत्तिवादे स्पष्टम् ।

न च साध्याभावाधिकरणत्वमभावीयविशेषणताविशेषसम्बन्धेन विवक्षितमिति वाच्यम् । तथासति घटत्वात्यन्ताभाववान् घटान्योन्याभाववान्

रिति । अव्याप्यत्वं च स्वाभाववद्वृत्तित्वम् । अत्र स्वं सत्ताभावस्तदभावः सत्ताभावाभावः सत्तारूपस्तदधिकरणं द्रव्यं तन्निरूपितवृत्तित्वं जन्यद्रव्ये गुणे कर्मणि च तथाचैतत्सम्बन्धेन साध्याभावाधिकरणं जन्यद्रव्यं गुणादिकमपि तद्वृत्तित्वं जाताविति भवत्यव्याप्तिः।

अत्र वृत्तिनियामकसम्बन्धघटितस्यैवाऽव्याप्यत्वस्य वृत्तिनियामकत्वम् । न चैतादृशपरम्परासम्बन्धस्य वृत्तिनियामकत्वे मानाभावः । व्यभिचारित्वसम्बन्धेनेह हेतावुपाधिर्नेह हेताविति प्रतीतिबलात्तस्य वृत्तिनियामकत्वात् । वृत्त्यनियामकसम्बन्धघटितस्याव्याप्यत्वस्य तु न वृत्तिनियामकत्वम्, अत एव गुणत्ववान् ज्ञानत्वादित्यत्र गुणत्वाभावाभावस्य गुणत्वरूपतया तद्वान्यो गुणो विषयतया तद्वृत्तित्वस्य ज्ञाने सत्त्वात्साध्याभाववत्त्वं ज्ञानस्येति तद्वृत्तित्वस्य ज्ञानत्वे सत्त्वेऽप्यव्याप्तिर्नोक्ता तत्राव्याप्यत्वस्य विषयतारूपवृत्त्यनियामकसम्बन्धघटिततया तस्यापि वृत्त्यनियामकत्वादिति । एतेन जन्यमात्रस्य कालोपाधित्वानुपगमेपि अयं हेतुर्व्यभिचारी उपाधिमत्त्वादित्युपाधिग्रन्थालिखितप्रतीतेर्व्यभिचारित्वस्य वृत्तिनियामकतया तत्सम्बन्धावच्छिन्नाधिकरणतामादाय वह्निमान् धूमादित्यत्राव्याप्तिसम्भवे तत्परित्यागो न युक्तः, तथाहि स्वं वह्न्यभावः स्वाभावो वह्न्यभावाभावो वह्निरूपस्तद्वत्पर्वतनिरूपिततादात्म्यसम्बन्धावच्छिन्नवृत्तित्वं पर्वतेऽस्तीति साध्याभाववान् पर्वतस्तन्निरूपितवृत्तित्वस्य धूमे सत्त्वादिति निरस्तम् । तादात्म्यस्य वृत्त्यनियामकत्वादन्यथा तादात्म्येन घटो घटवानिति प्रतीत्यापत्तेः, निरवच्छिन्नाधिकरणताघटितव्यभिचारलक्षणमित्यस्मद्गुरुचरणाः । केचित्तु तत्राव्याप्तिरग्रेपि स्थास्यति नव्यमते द्रव्यमात्रस्याव्याप्यवृत्तित्वादतस्तत्परित्याग इत्याहुः । जन्यमात्रस्य कालोपाधित्वानुपगमे कालिकसम्बन्धमादाय वह्निमान् धूमादित्यत्राव्याप्त्यभावात्तत्परित्यागः । केचित्तु कालिकसम्बन्धेन साध्याभावादेरव्याप्यवृत्तितया विवक्षणीयनिरवच्छिन्नाधिकरणाऽप्रसिद्ध्या तत्सम्बन्धावच्छिन्नाधिकरणताया धर्तुमशक्यतया तत्परित्याग इत्याहुः । अत एव ज्ञानत्वहेतोः परित्यागः । अथ सत्तावान् ज्ञानत्वादित्यत्राप्यव्याप्तिसम्भवे ज्ञानत्वहेतुपरित्यागोऽनुचित इति चेत्सत्यम् । परस्परव्याप्त्यनुरोधेन । अथवा व्यधिकरणग्रन्थे गोमान् गोत्वाद् जन्यद्रव्यवान् महाकालत्वादित्यत्र जन्यद्रव्यत्वरूपेण घटादिसाधारणसाध्यकातिव्याप्तिप्रदर्शनार्थं पूर्वोक्तगोसाध्यपरित्यागवदत्रापि घटत्वादिसाधारणहेतुतालाभार्थं पूर्वोक्तहेतुपरित्यागः । ननु तथापि सत्तावान् जातेरित्यत्र कालिकसम्बन्धेन सत्ताभाववति महाकाले हेतोः सत्त्वात्कालिकसम्बन्धमादायैवाव्याप्तिसम्भवे गुरुतराऽव्याप्यत्वसम्बन्धानुधावनं व्यर्थमिति चेन्न । कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय साध्याभावाधिकरणतायां निरवच्छिन्नत्वनिवेशस्यावश्यकतया कालिकसम्बन्धेन महाकाले सत्ताभावस्य निरवच्छिन्नाधिकरणताविरहादिति । एतेन अव्याप्यत्वस्य वृत्त्यनियामकतया तत्सम्बन्धमादायाव्याप्तिर्न सम्भवतीत्यत आदिपदम् आदिपदेन कालिकसम्बन्धपरिग्रहः तत्र साध्याभाववति महाकाले जातेर्वर्त्तमानत्वादव्याप्तिर्दुर्वारैवेति वदन्तः परास्ताः ।

**अभावीयविशेषणताविशेषसम्बन्धेनेति** । स्वरूपसम्बन्धेनेत्यर्थः । घटत्वात्यन्ता-

वा पटत्वादित्यादौ साध्याभावस्य घटत्वादेर्विशेषणताविशेषसम्बन्धेनाधिकरणस्याऽप्रसिद्ध्याऽव्याप्तिरिति चेन्न । अत्यन्ताभावान्योन्याभावयोरत्यन्ताभावस्य सप्तमपदार्थस्वरूपत्वात् ।

अत्यन्ताभावान्योन्याभावयोरत्यन्ताभावस्य प्रतियोग्यादिस्वरूपत्वनये तु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभावाधिकरणत्वं वक्तव्यम् । वृत्त्यन्तं प्रतियोगिताविशेषणम् । तादृशसम्बन्धश्च वह्निमान् धूमादित्यादिभावसाध्यकस्थले विशेषणताविशेष एव घटत्वात्यन्ताभाववान् पटत्वादित्याद्यभावसाध्यकस्थले तु समवायादिरेव ।

---

भावसाध्यकस्थलेऽत्यन्ताभावाभावस्य प्रतियोगिरूपतया घटत्वरूपता घटान्योन्याभावसाध्यकस्थलेऽन्योन्याभावाभावस्य प्रतियोगितावच्छेदकरूपतया साध्याभावस्य घटत्वरूपतेति विशेष सूचनाय स्थलद्वयप्रदर्शनम् । **अप्रसिद्ध्येति** । जातेः स्वरूपसम्बन्धेनाऽवृत्तित्वादिति भावः । **सप्तमपदार्थस्वरूपत्वात्** । न भावोऽभाव इति व्युत्पत्त्याऽभावविशेष्यकभावभिन्नत्वप्रकारकप्रतीतिबलादिति शेषः ॥

ननु स्वरूपसमवायान्यतरसम्बन्धेन साध्याभावाधिकरणत्वविवक्षायान्न दोषः, अन्यतरान्तर्गतसमवायेन घटत्वरूपसाध्याभावाधिकरणे घटे पटत्वस्यावृत्तेरिति चेन्न । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावे साध्ये कपालत्वहेतौ घटात्मकसाध्याभावस्य समवायेनाधिकरणे कपाले कपालत्वस्य वृत्तेरव्याप्तेः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावे साध्ये आत्मत्वहेतावन्यतरघटकसमवायेनात्मत्वरूपसाध्याभावाधिकरणे आत्मनि हेतोरात्मत्वस्य वृत्तेरव्याप्तेश्च । तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावत्वावच्छिन्नस्य तेनैव सम्बन्धेनाधिकरणत्वस्वीकारपक्षे तु साध्याभावत्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिः कालिकसम्बन्धघटिताऽन्यतमसम्बन्धोपादाने तु वह्निमान् धूमादित्यादावव्याप्तिरिति ध्येयम् ।

**प्रतियोग्यादिस्वरूपनये तु इति** । भावेन—घटत्वादिनैव, घटे घटत्वाभावो नास्ति घटो न घटभिन्न इति प्रतीत्योर्निर्वाहेऽतिरिक्ताभावे तादृशाभावाभावत्वकल्पने गौरवमिति। अत एव वक्ष्यति—**'अभावत्वं चेदमिह नास्ति इदमिदन्न भवतीति प्रतीतिनियामको भावाभावसाधारणः स्वरूपसम्बन्धविशेष'** इति । **वक्तव्यमिति** । साध्याभावस्य यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावः साध्यात्मकस्तत्सम्बन्धेनेत्यर्थः । **विशेषणताविशेष एवेति** । वह्न्यभावस्य स्वरूपेण योऽभावस्तस्यैव वह्निरूपत्वात् । **समवायादिरेवेति** । तत्र साध्याभावस्य घटत्वादेर्यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावः साध्यं स एवेत्यर्थः ।

अत्र साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिवेशेपि समवायेन प्रमेयसाध्यकस्थलेऽव्याप्तिविरहेण सामान्यपदव्यावृत्त्यसङ्गतेः स्यात्कालिक—

समवायविषयित्वादिसम्बन्धेन प्रमेयादिसाध्यके ज्ञानत्वादिहेतौ साध्यतावच्छेदकसमवायादिसम्बन्धावच्छिन्नप्रमेयाद्यभावस्य कालिकादिसम्बन्धेन योऽभावः सोऽपि प्रमेयतया साध्यान्तर्गतस्तदीयप्रतियोगितावच्छेदककालिकादिसम्बन्धेन साध्याभावाधिकरणे ज्ञाने ज्ञानत्वादेर्वृत्तेरव्याप्तिवारणाय सामान्यपदोपादानम् ।

साध्यसामान्यीयत्वं च यावत्साध्यनिरूपितत्वं स्वानिरूपकसाध्यकाभिन्नत्वमिति यावत् । अस्यैकोक्तिमात्रपरतया गौरवस्याऽदोषत्वात् । अनुमितिकारणतावच्छेदके च भावसाध्यकस्थले अभावीयविशेषणताविशेषेण साध्याभावाधिकरणत्वम् , अभावसाध्यकस्थले च यथायथं समवायादिसम्बन्धेन साध्याभावाधिकरणत्वमुपादेयम् , साध्य(साधन)भेदेन कार्यकारणभावभेदात् ।

---

सम्बन्धावच्छिन्नप्रतियोगिताकस्य प्रमेयाभावाभावस्य साध्यरूपत्वेपि साध्यतावच्छेदकसमवायसम्बन्धेनाऽवृत्तित्वादतो विषयित्वानुधावनम् ।

केचित्तु गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे समवायेन प्रमेयाभावप्रतियोगितावच्छेदकत्वं लाघवात्समवाये एव कल्प्यते इति तादृशविशेषणसत्त्वेपि तत्र लक्षणाऽसत्त्वमतो विषयित्वानुधावनमित्याहुः ।

विषयिताया प्रमेयसाध्यकज्ञानत्वहेतोर्घटादिविषयकज्ञानान्तर्भावेण व्यभिचारित्वाद् ज्ञानत्वादीत्युक्तम् । आदिना तज्ज्ञानत्वपरिग्रहः, तथाच विषयितासंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य यः कालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावः सोपि प्रमेयतया साध्यान्तर्गतः साध्यतावच्छेदकीभूतविषयितासंबन्धेन वर्त्तमानोपि तत्प्रतियोगितावच्छेदककालिकसम्बन्धेन प्रमेयाभावाधिकरणे जन्यज्ञाने हेतोर्वृत्तेरव्याप्तिरेवं कालिकेन प्रमेयसाध्यककालत्वादावव्याप्तिश्च । **सामान्यपदोपादानमिति** । नन्वत्र वृत्त्यन्तदलस्य प्रथमोपात्ततया तस्य व्यावृत्तिमुक्त्वैव सामान्यपदव्यावृत्तिदानमुचितमिति चेन्न । सूचीकटाहन्यायेनादौ सामान्यपदव्यावृत्तिर्दत्ता । वस्तुतस्तु साध्यसामान्यीयत्वपदेन यावत्साध्यनिरूपितत्वस्य बोधनादात्मत्वप्रकारकप्रमाविशेष्यत्वाभावसाध्यकस्थले यावत्त्वाऽप्रसिद्ध्या वृत्त्यन्तदलदानेऽपि अव्याप्तिः स्थास्यतीत्यतः सामान्यपदस्यार्थान्तरमुक्त्वा वृत्त्यन्तदलव्यावृत्तिकथनमिति ध्येयम् । **यावत्साध्यनिरूपितत्वमिति** । तथाच प्रमेयाभावस्य यः कालिकेनाभावस्तस्य यावत्साध्यरूपत्वाभावात्तदीयप्रतियोगितायां यावत्साध्यनिरूपितत्वविरहान्न दोषः ।

ननु तद्रूपवान् तद्रसादित्यत्र यावत्साध्याऽप्रसिद्ध्याऽव्याप्तिरेवं समवायेन प्रमेयाभावाभावस्य लाघवेन सत्तारूपतया साध्ये यावत्त्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यं चेत्यतो व्याचष्टे **स्वानिरूपकेति** । स्वस्याऽनिरूपकं साध्यं यस्येति विग्रहः । यस्य स्वस्य अनिरूपकं साध्यमित्यर्थः । स्वं-प्रतियोगिता, तथाच यद्यत्प्रतियोगिताया अनिरूपकं साध्यं तत्तत्प्रतियोगिताभिन्नत्वमित्यर्थः । अत्र यद्यत्प्रतियोगितापदेन स्वरूपसम्बन्धावच्छिन्ना वन्ह्यभावनिष्ठा प्रतियोगिता नैव

न च तथापि घटान्योन्याभाववान् पटत्वादित्यत्रान्योन्याभावसाध्यकस्थले घटत्वादिरूपसाध्याभावे न साध्यप्रतियोगित्वं न वा समवायादिसम्बन्धस्तदवच्छेदकस्तादात्म्यस्यैव तदवच्छेदकत्वादित्यव्याप्तिस्तदवस्थेति

---

धर्त्तुं शक्यते साध्ये तादृशप्रतियोगितानिरूपकत्वस्यैव सत्त्वात्किन्तूदासीनघटादिनिष्ठप्रतियोगिता कालिकसम्बन्धावच्छिन्नवन्ह्यभावनिष्ठप्रतियोगिता वा धर्त्तव्या तत्प्रतियोगिताभेदस्य साध्याभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायां सत्त्वेन तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन साध्याभावाधिकरणतामादाय लक्षणसमन्वयः ।

अनुगमस्तु साध्यनिष्ठभेदप्रतियोगिताऽनवच्छेदिका या प्रतियोगिता सैव साध्यसामान्यीयप्रतियोगिता प्रतियोगितावच्छेदकता च निरूपकत्वसम्बन्धावच्छिन्ना ग्राह्या । यथा वह्निनिष्ठो यो भेदो निरूपकतासम्बन्धेन घटनिष्ठप्रतियोगितावान्नेत्याकारको भेदस्तदीया निरूपकत्वसम्बन्धावच्छिन्ना प्रतियोगितावच्छेदकता घटनिष्ठप्रतियोगितायान्तादृशावच्छेदकत्वाभावः वह्न्यभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगितायामस्तीति । साध्यवृत्त्यत्यन्ताभावप्रतियोगिताभिन्ना या प्रतियोगितेति विवक्षणे-ऽत्यन्ताभावनिवेशेऽवच्छेदकत्वाऽनिवेशप्रयुक्तलाघवेऽपि-वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वानुपगमे निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्धिः स्यादतो भेदनिवेशः । चैत्रो न पचतीत्यादिवाक्यप्रामाण्यानुरोधेन प्रतियोगितावच्छेदकतायां वृत्त्यनियामकसम्बन्धावच्छिन्नत्वं निर्विवादमेवेति ध्येयम् ।

प्रकारविधया निवेशश्च साध्यतावच्छेदकसमानाधिकरणाभावीयनिरूपकत्वनिष्ठप्रतियोगितानिरूपितावच्छेदकतानाश्रयप्रतियोगितेति । केचित्तु साध्यतावच्छेदकव्यापकानुयोगितानिरूपितप्रतियोगिता साध्यसामान्यीयप्रतियोगितापदेन विवक्षणीया, तेन नैकव्यक्तिसाध्यके साध्ये यावत्त्वाऽप्रसिद्धिः । कालिकसम्बन्धावच्छिन्नप्रमेयाभावनिष्ठप्रतियोगितानिरूपकत्वं नास्तीत्यभावस्य कालिकसम्बन्धावच्छिन्नप्रमेयाभावत्वावच्छिन्नप्रतियोगितानिरूपकप्रमेयाभावत्वरूपानुयोगितायाश्च साध्यतावच्छेदकीभूतप्रमेयत्वसमानाधिकरणत्वात्प्रमेयसाध्यकेऽव्याप्तितादवस्थ्यमतोऽभावेऽनुयोगितायां वा साध्यतावच्छेदकसामानाधिकरण्यमुपेक्ष्य साध्यतावच्छेदकव्यापकत्वमुक्तमिति । ननु तत्सम्बन्धावच्छिन्नाभावप्रतियोगित्वं तेन सम्बन्धेन वृत्तिमत्त्वस्यैव प्रतियोगिनि स्वीक्रियत इत्यनुरोधेनाऽसमवेतप्रमेयस्य समवायसम्बन्धावच्छिन्नप्रमेयाभावो नास्तीति प्रतीत्यविषयतया तस्य प्रमेयाभावाभावत्वे मानाभावेनाऽनन्तसमवेतप्रमेये प्रमेयाभावाभावत्वकल्पनापेक्षया सत्तायां तादृशाभावत्वकल्पने लाघवमिति पक्षे साध्यतावच्छेदकीभूतप्रमेयत्वव्यापकानुयोगित्वाऽप्रसिद्ध्याऽव्याप्तितादवस्थ्यमिति चेन्न । साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितेत्यर्थकरणे दोषाभावादिति प्राहुः ।

शङ्कते **नचेति** । न साध्यप्रतियोगित्वं किन्तु साध्यप्रतियोगितावच्छेदकत्वमिति शेषः । **तदवच्छेदक इति** । प्रतियोगितावच्छेदक इत्यर्थः । किन्तु तदवच्छेदकतावच्छेदक इति शेषः । तथाच साध्याभावो घटत्वरूपस्तत्र साध्यीयप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिरिति भावः । ननु घटत्वात्मकसाध्याभावे साध्यीयप्रतियोगित्वप्रसिद्धावेव नवेत्यादिना समवायस्य तदवच्छेदक-

वाच्यम् । अत्यन्ताभावाभावस्य प्रतियोगिरूपत्वेन घटभेदस्य घटभेदात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावरूपतया घटभेदात्यन्ताभावरूपस्य घटभेदप्रतियोगितावच्छेदकीभूतघटत्वस्यापि समवायसम्बन्धेन घटभेदप्रतियोगित्वात् ।

न चाऽन्यत्रात्यन्ताभावाभावस्य प्रतियोगिरूपत्वेऽपि घटभेदात्यन्ताभावत्वावच्छिन्नाभावो न घटादिभेदस्वरूपः किन्तु तत्प्रतियोगितावच्छेदकीभूतघटत्वात्यन्ताभावस्वरूप एवेति सिद्धान्त इति वाच्यम् । यथाहि घटत्वावच्छिन्नघटवत्ताग्रहे घटात्यन्ताभावस्याग्रहाद् घटात्यन्ताभावाभावव्यवहाराच्च घटात्यन्ताभावाभावो घटस्वरूपस्तथा घटभेदवत्ताग्रहे घटभेदात्यन्ताभावाऽग्रहाद् घटभेदात्यन्ताभावाभावव्यवहाराच्च घटभेद एव तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभाव इति तात्सिद्धान्तो न युक्तिसह इति ।

विनिगमकाभावेपि घटत्वत्वावच्छिन्नप्रतियोगिताकाभाववद् घटभेदस्यापि घटभेदात्यन्ताभावाभावत्वसिद्धेरप्रत्यूहत्वाच्च । अत एव तादृशसिद्धान्तो

---

त्वाऽप्रसिद्धिकथनं सङ्गच्छेत तदेव न, प्रथमतो निरुक्तप्रतियोगित्वस्यैवाऽप्रसिद्धेरिति चेन्न। घटान्योन्याभावाऽभावस्य प्रतियोगिरूपत्वे घटे प्रतियोगित्वप्रसिद्धिसम्भवात्, तथाच साध्याभावस्य घटात्मकत्वे तादृशप्रतियोगित्वस्य घटादौ प्रसिद्धिसम्भवेऽपि तदवच्छेदकसम्बन्धत्वस्य समवायेऽप्रसिद्ध्या घटान्योन्याभाववान् घटत्वत्वादित्यत्र तदवच्छेदकतादात्म्यसम्बन्धेन घटत्वात्मकसाध्याभावाधिकरणे घटत्वे घटत्वत्वस्य वृत्तेरव्याप्तिः स्यादिति भावः। समाधत्ते **अत्यन्ताभावाभावस्येति । घटभेदप्रतियोगित्वादिति ।** भेदाभावस्य भेदप्रतियोगितावच्छेदकरूपत्वमाधाराधेयभावानुरोधात् प्रतियोगिरूपत्वे घटो घटभेदाभाववानित्यबाधितप्रतीतिर्न स्यात्तच्चाग्रे स्फुटीभविष्यति। अत्यन्ताभावाभावस्तु प्रतियोगिरूपः प्रतियोगिमत्येव तत्प्रतीतेः, अतिरिक्तकल्पने गौरवं विनिगमनाविरहश्चेति, तथाच घटभेदस्य घटभेदात्यन्ताभावाभावरूपत्वं समनियताभावयोरैक्यादेवं च यथा तृतीयाभावप्रतियोगिता घटत्वरूपद्वितीयाभावे तथा घटभेदप्रतियोगित्वमपीति साध्याभावे घटत्वरूपे साध्यप्रतियोगित्वं प्रसिद्धं समवाये च तदवच्छेदकत्वं प्रसिद्धिमिति दिक्।

घटत्ववत्ताग्रहे घटान्योन्याभावस्याग्रहाद् घटान्योन्याभावाभावव्यवहाराच्च भेदाभावस्य प्रतियोगितावच्छेदकरूपतया तदभावो (भेदाभावाभावो) घटत्वाभाव एव, घटभेदस्वरूपत्वे न किमपि मानमित्याशङ्कते **नचेति** । अन्यत्र–भेदातिरिक्तस्थले, लाघवात्सर्वत्राभावाभावप्रतीतेरविशेषाच्चाऽभावाभावः प्रतियोगिरूप एवेति दृष्टान्तमुखेन द्रढयति **यथाहीति**। दार्ष्टान्तिके योजयति **तथेति । अप्रत्यूहत्वाच्चेति**। अतर्क्यत्वादित्यर्थः। घटभेदाभावाभावो घटत्वाभावरूपो घटभेदरूपो वेत्यत्र विनिगमनाविरहात्तस्य घटभेदरूपतायां बाधकाभावादिति भावः। अतएव–प्रतीतिबलादेव। न च यथा त्वन्मते विनिगमनाविरहस्तथा मन्मते विनिगमनाविरहाद्

नोपाध्यायसम्मतः । अत एव च **'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता'** इत्याचार्याः । अन्यथा घटभेदात्यन्ताभावप्रतियोगिनि घटभेदे तल्लक्षणाव्याप्तेः अन्योन्याभावप्रतियोगितावच्छेदकघटत्वात्यन्ताभावे तल्लक्षणस्यातिव्याप्त्यापत्तेश्च । न चैवं घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्यापि घटभेदस्वरूपत्वापत्तिरिति वाच्यम् । तदत्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावस्यैव तत्स्वरूपत्वाभ्युपगमात्तद्वत्ताग्रहे तादृशतदत्यन्ताभावाभावस्यैव व्यवहारात् । **उपाध्यायैर्**घटत्वत्वावच्छिन्नप्रतियोगिताकघटत्वात्यन्ताभावस्यापि घटभेदस्वरूपत्वाभ्युपगमाच्च ।

---

घटत्वाभावरूपतापि तस्य स्यादिति वाच्यम् । प्रतीतेरेव गमकत्वात् धर्मिभेदधर्मात्यन्ताभावयोः समनियततया लाघवाच्चैक्येनेष्टापत्तेश्च । अत एव वक्ष्यति **'उपाध्यायै'**रित्यादिनेति । ननु प्रतियोगिता यदि प्रतियोगिस्वरूपा तदा संयोगेन घटाभावात्समवायेन घटाभावस्य भेदो न स्यात्, समवायसंबन्धावच्छिन्नप्रतियोगिताया घटस्वरूपत्वेन तस्याः संयोगेनाऽप्यवच्छिन्नत्वात्तत्प्रतियोगिनो घटस्यैकत्वात्, अत एव न प्रतियोगितावच्छेदकस्वरूपा, नापि प्रतियोगितावच्छेदकभेदात्तयोर्भेदः उभयत्र प्रतियोगितावच्छेदकस्य चैक्यादित्यत आह **अभावविरहात्मत्वमिति** । आचार्याः–उदयनाचार्याः । कुसुमांजलाविति शेषः । प्रतियोगितालक्षणमिति शेषः । प्रतियोगितात्वमिति यावत् तत्प्रतियोगित्वं तदभाव इति मथुरानाथोक्तेरभावाभावस्यैव प्रतियोगितारूपत्वात् । अन्यथा–घटभेदाभावाभावस्य घटत्वाभावरूपत्वे । न चैवमाचार्यमते घटभेदप्रतियोगिनि घटतल्लक्षणाव्याप्तिर्भेदप्रतियोगितावच्छेदके घटत्वे तल्लक्षणस्यातिव्याप्तिश्चेति वाच्यम् । अभावविरहात्मत्वमित्यत्राभावपदस्यात्यन्ताभावपर(१)त्वात्, तथा चात्यन्ताभावाभावात्मत्वस्य प्रतियोगितालक्षणत्वे नापत्त्यनुपपत्तीति ।

---

(१) एतत्कारिकाव्याख्यानं जगदीशभट्टाचार्यैरुक्तम् । प्रतियोगिता वस्तुनिष्ठप्रतियोगिताव्यवहारप्रयोजको धर्मः । अभावपदमत्यन्ताभावपरन्तेन भेदाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वेपि न क्षतिरिति ।

ननु लाघवादभावाभावः प्रतियोग्येव एवं चान्योन्याभावाभावोपि प्रतियोगिस्वरूपः । न च घटान्योन्याभावाभावस्य घटस्वरूपत्वे घटे घटान्योन्याभावो नास्तीति प्रतीतिर्न स्यात्तादात्म्यसम्बन्धस्य वृत्त्यनियामकत्वात्तस्य वृत्तिनियामकत्वे घटो घटवानित्यपि प्रतीतिः स्यादिति वाच्यम् । घटे घटान्योन्याभावो नास्तीति प्रतीतिबलात्तादात्म्यसम्बन्धस्य घटान्योन्याभावात्यन्ताभावत्वावच्छिन्नवृत्तितानियामकत्वं न तु घटत्वावच्छिन्नवृत्तिनियामकत्वं घटो घटवानिति प्रतीतेरसत्त्वादिति चेन्न । तादात्म्यसम्बन्धस्याऽन्योन्याभावाभावत्वावच्छिन्नघटनिष्ठघटवृत्तित्वनियामकत्वे तादृशवृत्तितामादायैव तादात्म्यसम्बन्धेन घटो घटवृत्तिरिति प्रतीतेः प्रमात्वापत्तेर्दुर्वारत्वात्, अनन्तप्रतियोगिरूपत्वकल्पनामपेक्ष्य भेदाभावस्य प्रतियोगितावच्छेदकरूपत्वे लाघवाच्चेति । न चैवं यत्र प्रतियोगिनो नानात्वं प्रतियोगितावच्छेदकश्चैकस्तत्रात्यन्ताभावाभावोऽपि प्रतियोगितावच्छेदकस्वरूप एवास्तु लाघवात् स्वाश्रयवत्वरूपपरम्परासम्बन्धेन तस्य प्रतियोगितावच्छेदकसमनियतत्वाच्चेति वाच्यम् । तथासति घटशून्यदेशे घटात्यन्ताभावात्यन्ताभावो नास्तीति प्रतीत्यनुपपत्तेः, तादृशाभावस्य

न चैवं साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेनैव साध्याभावाधिक-
रणत्वं विवक्ष्यताम् किं साध्यतावच्छेदकसम्बन्धावाच्छिन्नप्रतियोगिताकसाध्या-

---

शङ्कते नचैवमिति। तृतीयार्थोऽवच्छिन्नत्वम् तस्य साध्याभावाधिकरणत्वघटकसा-
ध्याभावनिष्ठाधेयतायामन्वयः। तथाच साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभा-
वद्वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसंवन्धावच्छिन्नसाध्याभावनिष्ठाधेयतानिरूपिताधि-
करणत्वं वक्तव्यमिति फलितार्थः। अधिकरणतायां सम्बन्धावच्छिन्नत्वं न स्वीक्रियते एवं
विशेष्यतायामपीति बोध्यम्। एवकारव्यवच्छेद्यमाह किमिति। आत्मत्वप्रकारिका या
प्रमा अयमात्मा इत्याकारिका, तदीयविशेष्यता स्वरूपसंवन्धेनात्मनि वर्त्तते कालिकसंवन्धेन

---

स्वाश्रयवत्त्वरूपपरम्परासम्बन्धेन घटत्वाभावरूपतयाऽप्रसिद्धत्वात्तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धस्या-
भावप्रतियोगितानवच्छेदकत्वादिति ध्येयम्।

दीधितिकृतस्तु विरहपदं तज्ज्ञानप्रतिबन्धकज्ञानविषयपरम्। एवं चाभावबुद्धिप्रतिबन्धकज्ञानविषयत्वं
प्रतियोगित्वमिति फलितम्। समवायेन घटत्वप्रकारकज्ञानस्येव तादात्म्यसम्बन्धेन प्रतियोगिनिश्चय-
स्यान्योन्याभावबुद्धिप्रतिबन्धकत्वान्नान्योन्याभावप्रतियोगिन्यव्याप्तिः। न चैवमन्योन्याभावप्रतियोगितावच्छे-
दकेऽतिव्याप्तिरिति वाच्यम्। अभावपदेन स्वाभावस्य विवक्षणीयत्वात्। स्वाभावविरहरूपत्वं स्वनिष्ठप्रति-
योगित्वम्। एतेन वह्न्यादिव्याप्यस्य वह्न्यभावप्रतियोगित्वापत्तिः। वह्निव्याप्यवत्तानिश्चयस्यापि वह्न्यभाव-
वत्ताबुद्धिविरोधित्वादिति परास्तमिति प्राहुः।

नव्यास्तु भेदाभावः प्रतियोगितावच्छेदकात्मेति न नियमः किन्तु प्रतियोगिवृत्तिरसाधारणधर्ममात्रम्।
परन्तु यत्र प्रतियोगितावच्छेदकधर्मो लघुः स एव तत्रान्योन्याभावाभावः। यत्र प्रतियोगितावच्छेदका-
पेक्षया धर्मान्तरं लघु तदेव तत्रान्योन्याभावाभावः। यत्र तु प्रतियोगितावच्छेदको धर्मान्तरं च लघु तत्रो-
भयमेव तथेति विवेक इत्याहुः।

मिश्रास्तु प्रतियोगितावच्छेदकसम्बन्ध एव सर्वत्राभावाभावः। स चान्योन्याभावस्य तादात्म्यम्। अत्य-
न्ताभावस्य संयोगादिः, प्रतियोगितावच्छेदकतानियामकसम्बन्धेन तस्याऽभावविरोधितया न कोपि दोष
इत्याहुः। तन्न। संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावस्य संयोगरूपत्वे पटसंयोगवति तादृशा-
भावप्रसङ्गात्। एवं प्रतियोगितावच्छेदकसम्बन्धसामान्यस्यैवाभावाभावरूपत्वे संयोगेन घटाभावः कपालादौ
न स्यात्। घटसमवायस्य तत्र सत्वात्। स्वप्रतियोगिनिरूपितस्वप्रतियोगितावच्छेदकसम्बन्धस्य तथात्व
नानुगमसम्भावनापि। एवं संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावाभावस्य संयोगरूपत्वे घटाभावा-
भाववान् घट इति प्रत्ययः स्यात्, स्वसंयोगस्य स्वस्मिन्नपि सत्त्वात्। स्वप्रतियोगिनिरूपितस्वप्रतियो-
गितावच्छेदकसम्बन्धस्य तथात्वे विशिष्टस्याऽनतिरिक्ततया तद्दोषतादवस्थ्यम्। न च विशिष्टा-
धिकरणत्वस्य तत्रास्वीकारेण नोक्तप्रत्ययापत्तिरिति वाच्यम्। तथासति सर्वेषामेवाभावाभावानां
गगनाभावत्वस्वीकारेणैवोपपत्तौ प्रतियोगितावच्छेदकसम्बन्धरूपताभ्युपगमस्याऽन्याय्यत्वात्। एवं व्यधिकर-
णसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावोपि न सिद्ध्येत्, स्वप्रतियोगिनिरूपितप्रतियोगितावच्छेदक-
सम्बन्धस्याऽप्रसिद्धेरिति ध्येयम्।

इदमत्र बोध्यम्। स्वामित्वसम्बन्धेन धनं नास्तीत्याद्यभावानां धनस्वामित्वं नास्तीत्याद्यभावसमनिय-
तया स्वामित्वसम्बन्धेन धनाभावप्रतियोगित्वं धनस्वामित्वे एव स्वीक्रियते। वृत्त्यनियामकसम्बन्धावच्छि-
न्नप्रतियोगिताया अनङ्गीकारात्। धनस्वामित्वनिष्ठप्रतियोगिता तु स्वरूपसम्बन्धावच्छिन्ना। तथा चात्र
स्वामित्वसम्बन्धेन धनाभावाभावोपि धनस्वामित्वमेवेति।

भाववृत्तित्वस्य प्रतियोगिताविशेषणत्वेनेति वाच्यम् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य विशेषणताविशेषेण साध्यत्वे आत्मत्वादिहेतावव्याप्त्यापत्तेः, कालिकसम्बन्धावच्छिन्नसाध्याभावस्य विशेषणताविशेषसम्बन्धेन योऽभावस्तस्यापि साध्यरूपतया कालिकसम्बन्धवद्विशेषणताविशेषोऽपि साध्यीयप्रतियोगितावच्छेदकसम्बन्धस्तेन सम्बन्धेनात्मत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्याभाववति आत्मनि हेतोरात्मत्वस्य वृत्तेः ।

तु जन्यमहाकालयोरेव नित्येषु कालिकाऽयोगात् कालिकसम्बन्धावच्छिन्नप्रतियोगिताकतादृशविशेष्यत्वाभावस्य नित्यमात्रवृत्तेः स्वरूपेण साध्यत्वे इत्यर्थः । तथाच संसर्गघटकप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानुपादाने साध्यस्य—तादृशविशेष्यत्वाभावस्य—कालिकेन योऽभावस्तस्यातिरिक्ततया तस्य स्वरूपेण योऽभावस्तस्य साध्यरूपतया तृतीयाभावस्य प्रथमाभावरूपत्वात् तदीयप्रतियोगितावच्छेदकस्वरूपसंवन्धेन—लक्षणघटकतादृशप्रमाविशेष्यत्वरूपसाध्याभावाधिकरण आत्मनि हेतोर्वृत्त्याऽव्याप्तिरिति । तदुपादाने तु साध्यस्य कालिकेनाभावो गृहीतुं नैव शक्यते किन्तु साध्यतावच्छेदकीभूतस्वरूपेणैव, तथाच साध्यस्य स्वरूपेण योऽभावस्तस्य तादृशप्रमाविशेष्यत्वरूपस्य कालिकेन योऽभावस्तस्य साध्यरूपतया तदीयप्रतियोगितावच्छेदककालिकेन तादृशप्रमाविशेष्यत्वरूपसाध्याभावाधिकरणे जन्यमहाकालयोर्हेतोरवृत्त्या नाव्याप्तिरिति ।

न च कालिकसंबन्धावच्छिन्नप्रतियोगिताकविशेष्यत्वाभावसाध्यकस्थले व्यावृत्तिसंभवादात्मत्वप्रकारकप्रमापर्यन्तं विफलमिति वाच्यम् । साध्यसामान्यीयप्रतियोगितावच्छेदको यो यः संवन्धस्तेन तेन (१)संबन्धेन साध्याभावाधिकरणत्वोक्तावपि अव्याप्तिवारणसंभवात्तथाहि तादृशः सम्बन्धो यथा स्वरूपस्तथा कालिकोपि एतदुभयसम्बन्धेन साध्याभाववत्त्वं जन्यस्यैव तन्निरूपितवृत्तित्वाभावस्यात्मत्वहेतौ सत्त्वात् । आत्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य साध्यत्वे तु तदुभयसंवन्धेनात्मत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्याभावाधिकरणाऽप्रसिध्या गुरुतरनिवेशेऽपि अव्याप्तिवारणं न संभवतीति विशेषसूचनाय गुरुतरसाध्यानुसरणम् । न चाऽननुगमः इति वाच्यम् । साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धत्वव्यापकं यदाधिकरणं

(१) तेन तेनेति । सम्बन्धसामान्येनेत्यर्थः । ननु प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशापेक्षया सम्बन्धसामान्येनाधिकरणत्वनिवेशस्य गौरवभयेन कर्त्तुमशक्यतयोक्तस्थले एवाव्याप्तिसंभवेत्र प्रमापर्यन्तं व्यर्थमेवेति चेन्न । घटभिन्नं कपालत्वादित्यत्र घटत्वस्वरूपसाध्याभावनिष्ठप्रतियोगितावच्छेदकसमवायेन घटात्मकसाध्याभाववति कपाले हेतोर्वृत्तेरव्याप्तिवारणाय सम्बन्धसामान्येनाधिकरणत्वं विवक्षणीयम् । तथाच तादृशसम्बन्धः समवायस्तादात्म्यं चोभयसम्बन्धेन साध्याभाववति घटे हेतोरवृत्तेरव्याप्तिविरहात् । नचैवंसति घटभिन्नं घटत्वत्वादित्यत्राव्याप्तिविरहाद् वक्ष्यमाणात्यन्ताभावत्वनिरूपितत्वविशेषणं व्यर्थमिति वाच्यम् । अभावाऽनुयोगिकस्वरूपेण यत्र वाच्यत्वस्य साध्यता घटाभावत्वहेतौ वाच्यत्वाभिन्नभेदस्य वाच्यत्वस्वरूपतया साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकस्वरूपतादात्म्योभयसम्बन्धेन साध्याभावाधिकरणाऽप्रसिद्ध्याऽव्याप्तेः ।

तद्वृत्तित्वोक्तावनुगमसंभवात् । व्यापकता च स्वनिष्ठाधिकरणतानिरूपितसाध्याभावत्वावच्छिन्नाधेयतानिरूपितसांसर्गिकावच्छेदकत्वसंबन्धेन । स्वमधिकरणम् ।

न चैवमपि आत्मत्वस्य यः कालिकसंबन्धावच्छिन्नप्रतियोगिताकोऽभावस्तस्य स्वरूपेण साध्यत्वे कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वाभाववान् आत्मत्वादित्यत्र अप्रसिध्याऽव्याप्तिसंभवे गुरुसाध्यकानुसरणं व्यर्थमिति वाच्यम् । साध्यसामान्यीयप्रतियोगितावच्छेदको यः सम्बन्धस्तत्सम्बन्धावच्छिन्नप्रतियोगिताश्रयीभूतसाध्याभावस्य तेन संबन्धेनाधिकरणत्वस्य प्रवेशात् । तन्निवेशप्रकारश्च साध्यसामान्यीयप्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावद्वृत्तित्वाभावो व्याप्तिः । प्रतियोगितावैशिष्ट्यं च निरूपकतायां स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकस्वावच्छेदकधर्मावच्छिन्नत्वोभयसवन्धेन । यद्वा साध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नसाध्याभावनिष्ठनिरूपकताकाधिकरणतात्वव्यापकाधिकरणनिरूपितवृत्तित्वाभावो निवेश्यः । व्यापकता चाधेयतासम्बन्धेन । एवं चात्मत्वाभाववान् आत्मत्वादित्यादौ स्वरूपसम्बन्धावच्छिन्नाऽऽत्मत्वनिष्ठनिरूपकताया धर्तुमशक्यत्वान्न दोषः आत्मत्वप्रकारकभ्रमविशेष्यताया केवलान्वयितया तादृशस्वरूपकालिकोभयसम्बन्धेन साध्याभावाधिकारणत्वं जन्यस्यैवेति नाव्याप्तिरतः प्रमापदम् ।

साध्यतावच्छेकसम्बन्धस्य न्यूनवारकपर्याप्त्यनिवेशे अतीतघटस्य यः कालिकासम्बन्धावच्छिन्नत्वाभावस्तस्य तद्घटानुयोगिकस्वरूपेण साध्यतायां तद्घटत्वहेतावव्याप्तिः शुद्धस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्यातीतघटरूपतया तद्वृत्तिर्या कालिकसम्बन्धावच्छिन्नसाध्यसामान्यीयप्रतियोगिता तदवच्छेदककालिकसम्बन्धेन अतिरिक्तस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्याऽधिकरण एतद्घटे हेतोः सत्त्वात् ।

साध्यतावच्छेदकसम्बन्धस्येतरवारकपर्याप्त्यनिवेश आत्मानुयोगिकस्वरूपेण साध्याभावस्य स्वरूपेण योऽभावस्तस्य साध्यरूपतया स्वरूपस्यापिनिरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धत्वेन तेन सम्बन्धेन साध्याभावस्यात्मनि सत्त्वेन हेतोश्च तत्र सत्त्वेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभाववान् आत्मत्वादित्यत्राव्याप्तितादवस्थ्यम् ।

अभावे साध्यीयत्वानिवेशे कालिकसंबन्धावच्छिन्नघटाभावस्य कालिकसम्बन्धावच्छिन्नाभावे कालिकेन साध्ये जन्यत्वहेतावव्याप्तिः । निरुक्तघटाभावनिष्ठसाध्यसामान्यीयप्रतियोगितावच्छेदककालिकसम्बन्धेन साध्याभावाधिकरणे जन्ये हेतोर्वृत्तेः ।

तत्राप्यधिकवारकपर्याप्त्यनिवेशे प्रागुक्तविशेष्यत्वाभावसाध्यकाव्याप्तिर्दुर्वारैव । आत्मवृत्तित्वविशिष्टसाध्यस्य यः स्वरूपेणाभावः स्वरूपेण तदभावस्य साध्यरूपतया स्वरूपस्यापि निरुक्तप्रतियोगितावच्छेदकत्वात् ।

न्यूनवारकपर्याप्त्यनिवेशे अभावस्य यः कालिकसम्बन्धावच्छिन्नाभावस्तस्य कालिके योऽभावस्तस्य कालिकेन साध्यतायां जन्यत्वहेतावव्याप्तिः । अत्र साध्यतावच्छेदकमभावत्वमभावाभावप्रतियोगिकत्वं च, एवं च साध्यतावच्छेदकीभूतकेवलाऽभावत्वावच्छिन्नप्रतियोगिताकाऽभावाभावनिष्ठप्रतियोगितायाः साध्यसामान्यीयतया साध्यतावच्छेदकसम्बन्धावच्छि

साध्यतावच्छेदकेतरानवच्छिन्नप्रतियोगिताकाभावनिष्ठतया च तदवच्छेदककालिकसम्बन्धस्य निरुक्तसम्बन्धत्वात्तेन सम्बन्धेन साध्याभावाधिकरणजन्यनिरूपितवृत्तित्वस्य हेतौ सत्त्वात् ।

ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नो यस्तन्निरूपकाभाववृत्तीत्येवोच्यतां प्रतियोगितात्वेन प्रतियोगित्वोपादानं व्यर्थमिति चेन्न । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभाववान् आत्मत्वादित्यत्र साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नतादृशप्रमाविशेष्यत्वाभावत्वावच्छिन्नाधेयतानिरूपको यः कालिकसम्बन्धावच्छिन्नप्रतियोगिताको निरुक्तसाध्याभावस्तस्य स्वरूपेणाभावात्मकसाध्यनिरूपितप्रतियोगितावच्छेदकीभूतस्वरूपसम्बन्धमादायाऽव्याप्तेः ।

ननु साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकवृत्तित्वमेव निवेश्यतां किं तत्राभावत्वनिवेशेनेति चेन्न । विषयित्वस्य कालिकेन योऽभावस्तस्य विषयितया साध्यतायां तज्ज्ञानत्वहेतावव्याप्तिः । कालिकस्यापि साध्यनिरूपितं यद्विषयित्वनिष्ठं प्रतियोगित्वं तदवच्छेदकत्वात् । न च विषयित्वनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकवृत्तित्वन्नास्तीति वाच्यम् । तत्सम्बन्धावच्छिन्नाधेयता तत्संसर्गीयप्रतियोगित्वयोरैक्येन विषयितासंसर्गीयप्रतियोगितायां साध्यनिष्ठायां साध्यतावच्छेदकविषयित्वसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वयोः सत्त्वात् विषयितायां निरुक्तप्रतियोगिताकत्वस्य सत्त्वेन निरुक्तप्रतियोगितायां निरुक्तप्रतियोगिताकवृत्तित्वस्य सत्त्वादतोऽभावपदम् ।

श्रीगुरुचरणास्तु कालिकस्य यः कालिकसम्बन्धावच्छिन्नाभावस्तस्य कालिकेन साध्यतायां जन्यत्वहेतौ तत्सम्बन्धावच्छिन्नाधेयतायास्तत्संसर्गीयप्रतियोगितायाश्चैक्यमते कालिकस्यापि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकतया तद्वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदककालिकसम्बन्धेन साध्याभावाधिकरणे हेतोर्वृत्तेरव्याप्तिरतोऽभावपदमिति प्राहुः ।

केचित्तु वृत्तित्वस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावे कालिकेन साध्ये महाकालत्वहेतावव्याप्तिः, तादृशवृत्तित्वाभावत्वावच्छिन्नप्रतियोगिकवृत्तितावृत्तितादृशप्रतियोगितावच्छेदकसम्बन्धः कालिकोपि, तथाच तेन सम्बन्धेन साध्याभावाधिकरणे महाकाले हेतोर्वृत्तेरतोऽभावपदमित्याहुः

नन्वभावपदनिवेशेपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य कालिकेन साध्यतायां जन्यत्वहेतावव्याप्तिः, साध्यसामान्यीयं यत्प्रमेयनिष्ठं प्रतियोगित्वं तदवच्छेदककालिकसम्बन्धेन साध्याभाववति हेतोर्वृत्तित्वात्, साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तित्वं नास्तीति नाशङ्कनीयम् । प्रमेयमात्रे वृत्तितासत्त्वेन सुतरां तद्वृत्तित्वात् । निरुक्तसाध्याभावत्वव्याप्यत्वस्य प्रतियोगिताविशेषणत्वे तद्वारणेऽपि संयोगसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य स्वरूपेण साध्यतायां तत्सम्बन्धावच्छिन्नप्रतियोगिताकज्ञेयाभावहेतावव्याप्तिः । कालिकसम्बन्धावच्छिन्ननिरुक्तसाध्याभावस्य स्वरूपेण योऽभावस्तस्य साध्यरूपतया तदीयप्रतियोगितावच्छेदकस्वरूपेण साध्याभाववति ज्ञेयाभावरूपहेतोः सत्त्वात् । न च तदीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावत्वव्याप्यत्वं नास्तीति

प्रतियोगितावच्छेदकवत्प्रतियोग्यपि अन्योन्याभावाभावः, तेन तादात्म्येन

वाच्यम्। तादृशाभावस्य केवलान्वयित्वात्तद्व्याप्यत्वस्य निरुक्तप्रतियोगितायामपि सत्त्वात् इति चेन्न। निरुक्ताभावत्वसमानियतत्वस्य प्रतियोगितायां विवक्षणीयतया तत्राव्याप्तिवारणसम्भवात्। एवं चाभावपदानुपादाने तादृशप्रतियोगिताकत्वस्यावच्छेदकत्वादिसाधारणतया तादृशप्रतियोगिताकत्वसमनियतप्रतियोगित्वाप्रसिद्धिः स्यादिति। एतेन तादृशप्रतियोगिताकाभावत्वव्याप्यत्वनिवेशेऽभावपदं व्यर्थम्। कालिकसम्बन्धावच्छिन्नविषयितात्वावच्छिन्नप्रतियोगितायां कालिकसम्बन्धावच्छिन्नविषयितात्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नविषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभाववद्घटादिविषयितावृत्तित्वेन प्रतियोगित्वस्य तद्व्याप्यतया कालिकसम्बन्धावच्छिन्नप्रतियोगिताकविषयित्वाभावस्य विषयितया साध्यतायामव्याप्त्यभावादिति परास्तम्। वह्निमान् धूमादित्यत्राव्याप्तिः, स्वरूपसम्बन्धावच्छिन्नस्य साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वस्य निरुक्तप्रतियोगिताकत्वाऽव्यापकत्वात् तत्संसर्गीयप्रतियोगितायास्तत्सम्बन्धावच्छिन्नाधेयतास्वरूपतया वह्निसंयोगप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसाध्यतावच्छेदकावच्छिन्नत्वयोः सत्त्वेन तादृशप्रतियोगिताकत्वस्य संयोगेऽपि सत्त्वान्निरुक्तप्रतियोगितायाश्च तत्रासत्त्वादिति।

केचित्तु साध्यसामान्यीयप्रतियोगितायां साध्याभावत्वावच्छिन्नत्वमुपादेयम्। तथाच साध्यसामान्यीयनिरुक्तप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वमित्यर्थः। एवं च कालिकसम्बन्धावच्छिन्नप्रमेयाभावसाध्यकस्थले संयोगसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकस्थले च नाव्याप्तिः। प्रथमस्थले कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगितायां निरुक्तसाध्याभावत्वानवच्छिन्नत्वात्। द्वितीयस्थले च साध्यस्य कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगितायाः अभावत्वावच्छिन्नत्वेऽपि साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वाभावादित्याहुः। तच्चिन्त्यम्। अभावपदस्य वैयर्थ्यापत्तेः। प्रागुक्तविषयित्वाभावस्थले विषयितानिष्ठप्रतियोगितायां तादृशप्रतियोगितात्वावाच्छिन्नत्वाभावेनाऽव्याप्तिविरहात्।

वस्तुतः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वावच्छिन्नत्वमात्रोक्तौ कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्तासम्बन्धेन कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावस्य साध्यतायां निरुक्तसम्बन्धाभावस्यापि साध्यरूपतया तत्प्रतियोगितावच्छेदकस्वरूपसम्बन्धेन साध्याभावाधिकरणतामादायाव्याप्तिः। तत्सम्बन्धप्रतियोगित्वतत्सम्बन्धावच्छिन्नाधेयत्वयोरैक्येन तत्सम्बन्धवृत्तिप्रतियोगित्वस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वावच्छिन्नत्वादतोऽभावपदं विलक्षणानुयोगित्वावच्छिन्नप्रतियोगितालाभार्थमिति ध्येयम्।

अथात्र लक्षणे तादात्म्येन घटसाध्यके घटत्वहेतावव्याप्तिः, साध्यीभूतघटनिरूपितघटभेदात्मकसाध्याभावनिष्ठप्रतियोगित्वाप्रसिद्धेः घटभेदाभावस्य घटत्वरूपत्वादिति चेत्तत्राह **प्रतियोग्यपि अन्योन्याभावाभाव इति**। तथाच घटभेदाभावस्य घटत्वरूपतावत्

साध्यतायां साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वस्य नाप्रसिद्धिः । इत्थं चात्यन्ताभावत्वनिरूपितत्वेनाऽपि साध्यसामान्यीयप्रतियोगिता विशेषणीया, अन्यथा घटान्योन्याभाववान् घटत्ववत्त्वादित्यादावव्याप्तेः, तादात्म्यसम्बन्धस्यापि साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकत्वात् ।

यद्वा साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववृत्तिसाध्यसामान्यीयनिरुक्तप्रतियोगित्वतदवच्छेदकत्वान्यतरावच्छेदकसम्बन्धेनैव साध्याभावाधिकरणत्वं विवक्षणीयम् । वृत्त्यन्तमन्यतरविशेषणम् ।

---

(१)घटरूपत्वमपीति, तथाच घटभेदाभावस्य घटरूपतया घटभेदात्मकसाध्याभावे साध्यीयप्रतियोगित्वोपपत्तिरिति ।

नन्वेवं भेदाभावस्योभयरूपत्वे घटभिन्नं घटत्वत्वादित्यत्राव्याप्तिः, घटात्मकसाध्याभावनिष्ठसाध्यसामान्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन लक्षणघटकघटत्वात्मकसाध्याभाववति घटत्वे घटत्वत्वस्य वृत्तेरत आह **इत्थं चेति** । प्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वं तादात्म्यसम्बन्धानवच्छिन्नत्वं, तथाच घटभेदघटत्वात्यन्ताभावयोरैक्येपि साध्यनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगिताश्रयो न घटोऽपि तु घटत्वमेवेति नाव्याप्तिः ।

ननु घटभिन्नं कपालत्वादित्यादावव्याप्तिः घटत्वात्मकसाध्याभाववृत्त्यत्यन्ताभावत्वनिरूपितघटभेदात्मकसाध्यीयप्रतियोगितावच्छेदकसमवायसम्बन्धेन लक्षणघटकघटात्मकसाध्याभावाधिकरणे कपाले कपालत्ववृत्तेरिति चेन्न । यादृशसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदको यः सम्बन्धस्तेन तादृशसाध्याभाववत्त्वं विवक्षणीयम् । अनुगमस्तु साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगिताविशिष्टा या साध्याभावत्वावच्छिन्ननिरूपकता तन्निरूपिताधिकरणतावृत्तित्वाभाव इत्यर्थः । वैशिष्ट्यं च स्वसामानाधिकरण्य–स्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, तथाच घटत्वनिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगितावैशिष्ट्यस्य घटनिष्ठनिरूपकतायां विरहान्नाव्याप्तिः ।

अत्यन्ताभावत्वं भेदत्वविरुद्धमिति मते घटभेदाभावाभावस्य घटभेदरूपत्वानुपगमेन घटान्योन्याभाववान् पटत्वादित्यादौ साध्याभाववृत्त्यत्यन्ताभावत्वनिरूपितप्रतियोगित्वाऽप्रसिद्धिरत आह **यद्वेति** ।

केचित्तु नन्वत्यन्ताभावत्वनिरूपितत्वस्य तादृशप्रतियोगिताविशेषणत्वे तादात्म्येन घटविशिष्टस्य यो भेदस्तस्य साध्यतायां पटत्वहेतौ भेदाभावस्य प्रतियोगितत्त्वावच्छेदकान्यतररूपताया एव सिद्धान्तितत्वेनात्रोभयथैव तस्य घटरूपतया तदत्यन्ताभावस्य साध्यानात्मकत्वेन

---

(१) तादात्म्येन घटस्य साध्यतास्थले घटतादात्म्यस्यैव साध्यत्वमिति धर्मिणो धर्मव्यापकत्वानंगीकर्तृप्राचीनमते पूर्वग्रन्थे न दोषः । तन्मते भेदाभावस्य प्रतियोगिरूपत्वानङ्गीकारेपि क्षतिविरहात् । अत्रेयमनुपपत्तिः । घटो नेति प्रतीतेर्घटतादात्म्याभावविषयकत्वे नञो भेदबोधकत्वमनुपपन्नमिति तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे तु भेदाभावस्य प्रतियोगिरूपत्वमावश्यकम् ।

साध्याभाववृत्तिसाध्यीयप्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वाप्रसिद्ध्याऽव्याप्तिरत आह यद्वेतीति प्राहुः।

परे तु घटभिन्नं कपालत्वादित्यत्र निरुक्तप्रतियोगितावच्छेदकसमवायेन घटस्वरूपसाध्याभाववति कपाले हेतोर्वृत्त्याऽव्याप्तिः। न च यादृशसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेन तादृशसाध्याभाववत्त्वं विवक्षणीयमतो न घटत्वरूपसाध्यभावनिष्ठप्रतियोगितावच्छेदकसमवायेन घटाधिकरणतामादाय दोष इति वाच्यम्। समवायावच्छिन्नघटभेदाभावत्वावच्छिन्नप्रतियोगिताया घटत्वे इव घटेऽपि सम्भवेन दोषसम्भवादित्यत आह यद्वेति। तथाच निरुक्तप्रतियोगितातदवच्छेदकताऽन्यतरविशिष्टा या साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकता तन्निरूपिताधिकरणतावद्वृत्तित्वाभावो व्याप्तिः। वै० स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन, एतन्मते घटभेदाभावाभावो न घटभेदरूपः किन्त्वतिरिक्त एव नहि घटभेदाभावे साध्यीयात्यन्ताभावत्वनिरूपितप्रतियोगिता घटत्वरूपसाध्याभावे भेदत्वनिरूपितसाध्यीयप्रतियोगितावच्छेदकत्वसत्त्वेपि घटभेदाभावत्वावच्छिन्ननिरूपकताया निरूपकभेदेन भिन्नतया घटनिष्ठायां तस्यां न साध्यीयप्रतियोगितावच्छेदकतासामानाधिकरण्यं किन्तु घटत्वनिष्ठायामेवेति तादृशनिरूपकतानिरूपितत्वं न कपाले इति नाव्याप्तिः। अत्र निरूपकतावच्छेदकाभावत्वनिरूपितप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वानुपादाने विशिष्टसत्ताभाववान् गुणत्वादित्यत्र निरुक्तसम्बन्धेन तादृशनिरुक्तप्रतियोगिताविशिष्टा या सत्ताभावाभावत्वावच्छिन्ननिरूपकता तन्निरूपिताधिकरणत्वस्य गुणे सत्त्वादव्याप्तिरतस्तदुपात्तम्। साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानुपादाने कालिकावच्छिन्नप्रतियोगिताककालिकावच्छिन्नमहाकालवृत्तित्वविशिष्टाभावस्य स्वरूपेण साध्यतायां घटत्वहेतौ कालिकावच्छिन्ना या कालिकावच्छिन्नप्रतियोगिताकसाध्याभावत्वाच्छिन्ननिरूपकता तामादायाऽव्याप्तिस्तन्निरूपिताधिकरणताया हेतुमति सत्त्वात्, तन्निवेशे च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्ना या निरूपकता तन्निरूपिताधिकरणत्वं महाकाल एवास्तीति वैशिष्ट्यप्रतियोग्यन्यतरघटकप्रतियोगितायां साध्यनिष्ठप्रतियोगिताकाभावत्वावच्छिन्नत्वमात्रनिवेशे कालिकावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य स्वरूपेण साध्यतायामात्मत्वहेतावव्याप्तिः। स्वरूपावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपकताकाधिकरणताया आत्मनि सत्त्वात्। तादृशनिरूपकतायां साध्यनिरूपिता या कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावत्वावच्छिन्नप्रतियोगिता या च पूर्वक्षणवृत्तित्वविशिष्टं नास्तीति सिद्धाभावत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना साध्यीयप्रतियोगिता तयोर्वैशिष्ट्यसत्त्वादतः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकेतरानवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वनिवेश इत्याहुः। तच्चिन्त्यम्। पूर्वकल्पेपि घटभिन्नं कपालत्वादित्यत्राव्याप्तिवारणसम्भवात्, तथाहि समवायेन घटाधिकरणतायाः कपाले सत्त्वेऽपि साध्याभावत्वावच्छिन्नाधिकरणताया एव विवक्षिततयोक्तस्थले कपाले घटभेद इति प्रतीतिबलेन घटभेदत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाधिकरणत्वस्य तत्र सत्त्वेन तादृशभेदाभावत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाधिकरणतायाः स्तत्राऽसत्त्वात् "कपाले घटभेदाभाव इति प्रतीतिविरहा"दिति।

एवं च घटान्योन्याभाववान् पटत्वादित्यादौ साध्याभावस्य घटत्वादेः साध्यीयप्रतियोगित्वविरहेऽपि न क्षतिः, तादृशान्यतरस्य साध्यीयप्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वात् ।

---

तथा चैतत्कल्पस्य साध्यविशिष्टं(१) यन्निरुक्तसाध्याभावत्वावच्छिन्नान्यन्ताभावत्वनिरूपितप्रतियोगित्वनिरुक्तसाध्याभाववृत्तिभेदत्वनिरूपितप्रतियोगितावच्छेदकत्वैतदन्यतरत्तद्विशिष्टसाध्याभावत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावद्वृत्तित्वाभाव इत्यर्थः । प्रथमवैशिष्ट्यमन्यतरस्मिन् स्वनिरूपितत्वस्वनिरूपितनिरूपितत्वान्यतरसम्बन्धेन । द्वितीयवैशिष्ट्यं च निरूपकतायां स्वावच्छेदकसम्बन्धावच्छिन्नत्वसम्बन्धेन । एवं च घटान्योन्याभावसाध्यकस्थले घटत्वरूपे साध्याभावे साध्यीयप्रतियोगित्वाप्रसिद्धावपि साध्यीयप्रतियोगितावच्छेदकत्वमादाय लक्षणसमन्वय इत्याह **एवञ्चेति** । तादात्म्येन घटविशिष्टभेदसाध्यकस्थले च निरुक्तप्रतियोगित्वाप्रसिद्धावपि तादात्म्यसंबन्धावच्छिन्नघटनिष्ठावच्छेदकतामादाय लक्षणसमन्वयः । तस्या निरुक्तसाध्याभाववृत्तित्वान्निरुक्तान्यतरेण सम्बन्धेन साध्यविशिष्टत्वाद्भेदत्वनिरूपितप्रतियोगितानिरूपितत्वाच्च ।

अत्यन्ताभावत्वनिरूपितप्रतियोगितायां निरुक्तसाध्याभावत्वावच्छिन्नत्वानिवेशे प्रागुक्तक्रमेण कालिकसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य कालिकेन साध्यतायां जन्यत्वहेतौ कालिकसम्बन्धावच्छिन्नप्रतियोगितामादाय तस्य स्वरूपेण साध्यतायामात्मत्वहेतौ कालिकसम्बन्धावच्छिन्नतदभावनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगितामादाय वाऽव्याप्तिरतस्तदुपात्तम् ।

अत्यन्ताभावत्वनिरूपितत्वं ग्रन्थकारोक्तदोषवारणाय, अन्यथा घटात्मकसाध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटत्वरूपसाध्याभावाधिकरणे हेतोर्वृत्तेर्घटान्योन्याभाववान् घटत्वत्वादित्यत्राव्याप्तिः ।

भेदत्वनिरूपितप्रतियोगितावच्छेदकतायां साध्याभावत्वावच्छिन्नत्वं न निवेशनीयं प्रयोजनविरहादप्रसिद्धत्वाच्च अवच्छेदकतायां भेदत्वनिरूपितप्रतियोगितानिरूपितत्वानिवेशे कालिकेन संयोगविशिष्टस्य समवायावच्छिन्नाभावे साध्ये रूपत्वादिहेतावव्याप्तिः, संयोगस्यापि साध्याभावतया साध्याभावस्य जन्यरूपत्वात् तद्वृत्तिसाध्यीयप्रतियोगितावच्छेदकतायाः कालिकेनावच्छेद्यतया तेन सम्बन्धेन साध्याभावस्य रूपेऽपि सत्त्वादतस्तन्निवेशः । इत्थं च साध्यीया या भेदत्वनिरूपितप्रतियोगिता तदवच्छेदकत्वन्तत्राऽप्रसिद्धमिति भावः ।

ननु तादृशप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्ष्यतां किं प्रतियोगिताघटितान्यतरावच्छेदकसम्बन्धानुधावनेन, वह्निमान् धूमादित्यादौ साध्याभाववद्भेदस्य साध्यरूपतया साध्याभावे साध्यप्रतियोगितावच्छेदकत्वं वर्त्तत एवेति घटत्वात्यन्ताभावस्य घटभेदात्मकतया न घटत्वरूपसाध्याभावे साध्यीयप्रतियोगितावच्छेदकत्वहानिरिति चेन्न । कपिसंयोगसाध्यकस्थले साध्याभाववद्भेदाप्रसिद्ध्याऽव्याप्तिः स्यादिति ।

---

(१) प्रतियोगितावच्छेदकतायां साध्यीयत्वाभावादेतावान्प्रयासः ।

अथात्र कालिकसम्बन्धेन प्रमेयवद्भेदस्य विषयितया साध्यतायां तद्व्यक्तित्वहेतौ विषयितासम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य प्रमेयतया तद्वृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकतावच्छेदककालिकसम्बन्धेन साध्याभाववति तज्ज्ञाने तद्व्यक्तित्वहेतोर्वृत्त्याऽव्याप्तिः। न च साध्याभावमात्रवृत्तितादृशान्यतरावच्छेदकसम्बन्धेन साध्याभाववत्त्वं वक्तव्यं तावतैव नाव्याप्तिः तादृशप्रतियोगितावच्छेदकतायाः प्रमेयमात्रे सत्त्वेन तादृशसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावेतरघटादावपि वृत्तेरिति वाच्यम्। यत्र समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावस्य साध्यता, तत्र साध्याभावेतराप्रसिद्ध्याऽव्याप्त्यापत्तेः। अवच्छेदकभेदेनावच्छेदकताभिन्नत्वमते साध्याभावात्मकप्रमेयवृत्त्यवच्छेदकतायाः साध्याभावमात्रवृत्तित्वेन प्रागुक्ताव्याप्तितादवस्थ्यात्। घटाभिन्नं पटत्वादित्यादौ कालिकसम्बन्धेन घटवृत्तित्वविशिष्टो यो घटभेदाभावस्तद्वद्भेदस्यापि लाघवाद् घटभेदरूपतास्वीकारात् साध्यसामान्यीयकालिकसम्बन्धावच्छिन्नावच्छेदकत्वस्य साध्यभावमात्रवृत्तित्वेनाव्याप्त्यापत्तेश्चेति चेत्।

तत्र केचित्। स्वावच्छेदकसम्बन्धेन साध्यवद्वृत्त्यवृत्तित्वअभावत्वमात्रनिष्ठत्वान्यतरवत्साध्यसामान्यीयप्रतियोगितावच्छेदकताया विवक्षितत्वादेव न पूर्वोक्तदोषाणामवसरः। अभावत्वमात्रनिष्ठत्वोपादानादेकधर्मावच्छिन्नावच्छेदकताया ऐक्यमते निरुक्तावच्छेदकतायां प्रमेयान्तर्गताऽभावत्वनिष्ठत्वेऽपि नोक्तस्थलेऽव्याप्तिः।

अभावत्वेत्याद्युपादानाद् यत्राभावत्वस्य साध्यत्वं तत्र तादृशावच्छेदकताया नाऽप्रसिद्धिः। इत्थं च पूर्वोक्तस्थले प्रतियोगितावच्छेदकताया अवच्छेदकीभूतकालिकसम्बन्धेन साध्यवद्वृत्तिप्रमेयवृत्तितयाऽन्यतरत्वाभावात् लक्षणाऽघटकत्वान्नाव्याप्तिरिति।

यदि चाभावत्वसाध्यकस्थले स्वाभाववद्भेदस्य स्वस्वरूपतया स्वाभावे एव तादृशावच्छेदकत्वप्रसिद्धिरित्युच्यते, तदाऽभावत्वनिष्ठत्वं नोपादेयमेव। एतेन तादात्म्येनाभावत्वविशिष्टस्य कालिकसम्बन्धावच्छिन्नाभावे साध्येऽभावत्वत्वादिहेतावभावत्वमात्रनिष्ठत्वोपादानेऽपि अव्याप्तिरित्यादिकं समाहितमित्याहुः। तदसत्। गुणकर्मान्यत्वविशिष्टसत्तावद्भिन्नं गुणत्वादित्यादौ गुणकर्मान्यत्वविशिष्टसत्तारूपसाध्याभावनिष्ठावच्छेदकतायां स्वावच्छेदकीभूतसमवायेन साध्यवद्वृत्तिसत्तानतिरिक्तविशिष्टसत्तावृत्तितया निरुक्तान्यतरत्वाभावेन धर्तुमशक्यत्वेनाऽव्याप्त्यापत्तेः। न च स्वावच्छेदकसम्बन्धेन साध्यवद्वृत्त्यवृत्ति इत्यत्र अवृत्तित्वपदेन तादृशसम्बन्धेन साध्यवद्वृत्तितावच्छेदकीभूतधर्मानवच्छिन्नत्वं निवेशनीयं तावतैव नोक्तदोष इति वाच्यम्। कालिकसम्बन्धेन जन्यवृत्तित्वविशिष्टप्रमेयवद्भेदस्य विषयितासम्बन्धेन साध्यतायां तज्ज्ञानत्वहेतावव्याप्त्यापत्तेः। साध्याभाववृत्तिकालिकसम्बन्धावच्छिन्नावच्छेदकतायाः जन्यवृत्तित्वविशिष्टप्रमेयत्वावच्छिन्नतया साध्यवद्वृत्तितावच्छेदकधर्मावच्छिन्नत्वाभावेनान्यतरत्वेन धर्तुं शक्यत्वात्स्वावच्छेदककालिकसम्बन्धेन साध्याभाववति जन्यज्ञाने हेतोर्वृत्तित्वादिति ध्येयम्।

ननु तथापि घटवदभाववान् जन्यरूपत्वादित्यादौ कालिकेन घटवतः संयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य विशेषणतया साध्यत्वे समवायसम्बन्धेन जन्यरूपत्वहेतावव्याप्तिः। घटवदभावीयप्रतियोगितावच्छेदकस्य घटस्य कालिकेन घटवत्तया साध्याभावेन

तद्वृत्तिनिरुक्तान्यतरीभूतं यत्कालिकसम्बन्धावच्छिन्नघटवदभावीयप्रतियोगितावच्छेदकत्वं प्रागुक्तोभयसम्बन्धेन तद्विशिष्टकालिकसम्बन्धावच्छिन्नघटनिष्ठनिरूपकतामादाय तादृशनिरूपकताकाधिकरणतावति जन्यरूपे हेतोर्वृत्तेः ।

अत्र केचित् । प्रागुक्तसाध्याभाववृत्ति यत्साध्यनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगितासाध्यनिष्ठभेदत्वनिरूपितप्रतियोगितावच्छेदकत्वान्यतरत्प्रागुक्तोभयसम्बन्धेन तद्विशिष्टनिरूपकताया एव लक्षणे प्रवेश्यत्वेन घटवदभावरूपसाध्यनिष्ठभेदत्वनिरूपितप्रतियोगितावच्छेदकतात्वविरहेण न तमादायाऽव्याप्तिसम्भव इति ।

न चैवमपि कालिकसम्बन्धावच्छिन्नभेदत्वनिष्ठप्रतियोगिताकाभावत्वनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य विशेषणतया साध्यत्वे स्वरूपेण भेदत्वाभावत्वस्य हेतुत्वे भेदत्वाभावत्वाभाववान् भेदत्वाभावत्वादित्यत्राऽव्याप्तिः, भेदत्वाभावत्वाभावस्यापि स्ववद्भिन्नभेदरूपतया तन्निष्ठभेदत्वस्यापि निरुक्तभेदत्वाभावस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य भेदत्वसामान्यान्तःपातितया विशेषणतया भेदत्वाभावो नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितायां भेदत्वसामान्यनिरूपितायां साध्यनिष्ठभेदत्वनिरूपितत्वस्यापि सत्त्वेन तादृशप्रतियोगितानिरूपितस्वरूपसम्बन्धावच्छिन्नावच्छेदकतायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावरूपे भेदत्वाभावत्वे सत्त्वेन प्रागुक्तोभयसम्बन्धेन तादृशावच्छेदकताविशिष्टभेदत्वाभावत्वनिष्ठस्वरूपसम्बन्धावच्छिन्ननिरूपकतामादाय तादृशनिरूपकताकाधिकरणतावति भेदत्वाभावे हेतोर्वृत्तेरिति वाच्यम् । अत्राव्याप्तिसम्पादिकायाः भेदत्वनिरूपितायाः प्रतियोगिताया अत्यन्ताभावविधयैव भेदत्वसामान्यनिरूपित्वं न तु भेदविधया, तथाच भेदत्वीयविलक्षणनिरूपितत्वनिवेशात् प्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वस्य निवेशाद्वाऽव्याप्त्यसम्भवात् । न च साध्याभावनिष्ठानिरूपकतायां प्रागुक्तोभयसम्बन्धेन साध्याभाववृत्तिसाध्यनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगितावैशिष्ट्यनिवेशसाध्यनिष्ठभेदत्वनिरूपितप्रतियोगितावच्छेदकतावैशिष्ट्यनिवेशयोर्लाघवेन प्रथमवैशिष्ट्यनिवेश एवोचितः न तु साध्यनिष्ठभेदत्वनिरूपितप्रतियोगितावच्छेदकतामपि तादृशान्यतरत्वेन संगृह्य तद्वैशिष्ट्यनिवेश इति वाच्यम् । **मथुरानाथेन** भेदात्यन्ताभावाभावस्य भेदत्वमङ्गीकृत्यैव प्रथमकल्पप्रणयनात् । द्वितीयकल्पादरे तु भेदात्यन्ताभावाभावस्य भेदीयप्रतियोगितावच्छेदकघटत्वाभावरूपत्वस्यैवानुमततया भेदात्यन्ताभावाभावस्य भेदरूपत्वमननुमतमेव । ततश्च घटभिन्नं पटत्वादित्यादौ साध्याभावे साध्यनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् । न च न निवेश्यतामपि प्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वं तदा लघुतरं भवति, न भवति च घटभिन्नं पटत्वादित्यादावव्याप्तिः, साध्यनिरूपिततादात्म्यसम्बन्धावच्छिन्नघटनिष्ठप्रतियोगित्वस्यैव तत्र सुलभत्वादिति वाच्यम् । प्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वानिवेशे स्वरूपसम्बन्धेन सप्तमपदार्थतावच्छेदकीभूताभावत्वसाध्यकेऽभावत्वाभावत्वहेतौ अभावत्ववान् अभावत्वाभावत्वादित्यादौ अव्याप्तिः, तत्राभावत्वाभावरूपसाध्याभावभेदस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वेनाभावत्वनिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतियोगित्वस्यापि सत्त्वेन निरुक्तोभयसम्बन्धेन

तत्प्रतियोगिताविशिष्टाभावत्वाभावनिष्ठतादात्म्यसम्बन्धावच्छिन्ननिरूपकतामादाय तादृशनिरूपकताकाधिकरणतावति अभावत्वाभावे हेतोर्वृत्तेः। न च प्रागुक्तोभयसम्बन्धेन तादृशप्रतियोगितावन्निरूपकताकाधिकरणतावद्वृत्तित्वस्य व्याप्तिस्वरूपस्य प्रतियोगितावच्छेदककोटिप्रविष्टनिरूपकताविशेषणतापन्नप्रतियोगितानिष्ठावच्छेदकतायाः प्रतियोगितानिष्ठत्वेनैव निवेशः क्रियतां न तादृशप्रतियोगितात्वावच्छिन्नत्वेन, तथाचाऽस्योपलक्षणतया निवेशेऽभावत्वाभावेऽभावत्वनिरूपितस्वरूपसम्बन्धावच्छिन्नैका प्रतियोगिता वर्तते तत्प्रतियोगितावन्निरूपकताकाधिकरणतावद्वृत्तित्वं नास्तीति प्रतीतिसिद्धाभावस्यापि निरुक्तरूपाक्रान्ततया धर्तुं शक्यत्वेन तादृशाभावस्य निरुक्तहेतौ सत्त्वान्नाव्याप्तिरिति वाच्यम्। तादृशरीत्योपलक्षणतया निवेशे घटाभाववान् महाकालत्वादित्यादौ कालिकसम्बन्धावच्छिन्नघटनिष्ठप्रतियोगिताकाभावस्य स्वरूपेण साध्यत्वे महाकालत्वहेतावतिव्याप्तिः, तत्र घटे साध्यनिरूपितकालिकसम्बन्धावच्छिन्नप्रतियोगित्ववत्साध्यस्य स्वाभाववद्भेदरूपत्वेन घटरूपस्य साध्याभावस्यपि कालिकसम्बन्धेन स्वाभाववत्तया साध्यनिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताप्येका वर्त्तते प्रागुक्तोभयसम्बन्धेन तत्प्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावति घटे महाकालत्वहेतोरवृत्तेः।

नन्वत्र साध्याभाववृत्तिसाध्यनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगितासाध्यनिष्ठभेदत्वनिरूपितप्रतियोगितावच्छेदकताऽन्यतरविशिष्टसाध्याभावत्वावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वसामान्याभावो व्याप्तिरिति पर्यवसितार्थः। तथाच आत्मत्वप्रकारकप्रमाविशेष्यत्वाभाववान् आत्मत्वादित्यादौ साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्य व्यावृत्तिर्न संगच्छते तदनिवेशे साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभाववृत्तिसाध्यनिरूपितस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताया धर्त्तुं शक्यत्वेपि आत्मत्वप्रकारकप्रमाविशेष्यत्वरूपसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावनिष्ठस्वरूपसम्बन्धावच्छिन्ननिरूपकतायां प्रागुक्तोभयसम्बन्धेन तद्वैशिष्ट्यविरहादव्याप्त्यभावादिति चेन्न। तत्राव्याप्त्यसम्भवेऽपि अभावाभाववान् आत्मत्वादित्यादौ अभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य विशेषणतया साध्यत्वे समवायेनात्मत्वहेतावव्याप्तिः, तत्र साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यापि अभावसामान्यरूपसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावान्तःपातितया तन्निष्ठस्वरूपसम्बन्धावच्छिन्ननिरूपकतायां प्रागुक्तोभयसम्बन्धेन तन्निष्ठायाः साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नसाध्यनिरूपितस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताया एव वैशिष्ट्यसम्भवात्तादृशनिरूपकताकाधिकरणतावत्यात्मनि हेतोर्वृत्तेः। न च साऽव्याप्तिः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे तवापि दुरुद्धरा तत्र साध्यनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यापि साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावान्तःपातितया तन्निष्ठप्रतियोगिताया वारयितुमशक्यत्वादिति वाच्यम्। साध्याभावत्वव्यापकं यत्साध्यनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगित्वसाध्यनिष्ठभेदत्वनिरूपितप्रतियोगितावच्छेदकत्वान्यतरत्तद्विशिष्टनिरूपकताकाधिकरणतावन्निरूपितवृत्तित्वाभावस्य विवक्षितत्वात्। एतेनात्मत्वप्रकारक-

प्रमाविशेष्यत्वाभाववान् आत्मत्वादित्यादौ मथुरानाथोक्तसन्दर्भविरोध इति परास्तम् । तत्र व्याप्यतावच्छेदककोटौ साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे तादृशविशेष्यत्वरूपसाध्याभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगितायाः अपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावान्तर्भावेण व्यभिचाराद् व्यापकत्वासम्भवान्नाव्याप्तिः तत्रापि व्यावृत्तिसम्भवात् (१) ।

---

(१) अत्र स्वरूपसम्बन्धेन साध्याभावत्वनिरूपिततादृशान्यतरत्वावच्छिन्नव्यापकतानिवेशेऽभावाभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावनिष्ठसाध्यनिरूपितस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताया वारयितुमशक्यत्वात्, कालिकेनाऽभाववद्भेदस्याऽपि साध्यरूपतया निरुक्तान्यतरत्वत्त्वावच्छिन्नस्य निरुक्तसाध्याभावत्वव्यापकत्वात्तादृशप्रतियोगितात्वतादृशप्रतियोगितावच्छेदकतात्वैतत्प्रत्येकरूपेण साध्याभावत्वव्यापकत्वनिवेशे च घटभिन्नं पटत्वादित्यादौ घटभेदाभावत्वस्य घटघटत्वयोरुभयोः सत्त्वेन प्रत्येकरूपेण घटभेदीयप्रतियोगितायां तदवच्छेदकतायां च घटभेदाभावत्वव्यापकत्वासम्भवादव्याप्तिः स्यादतः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववृत्तीत्यनेन साध्यतानवच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावेतरवृत्तित्वस्य विवक्षितत्वान्न प्रागुक्ताभावाभाववान् आत्मत्वादित्यादावव्याप्तिरिति । अत्र च साध्यसामान्यीयप्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नत्वेन विशेषणीया नातोऽभावनिष्ठकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य कालिकेन साध्यतायां कालत्वादिहेतौ साध्यतानवच्छेदकस्वरूपसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावेतराऽप्रसिद्ध्याऽव्याप्तिरिति चिन्त्यम् । न च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वाश्रयनिष्ठत्वोभयसम्बन्धेन निरुक्तान्यतरवैशिष्ट्यस्यैव साध्याभावनिष्ठनिरूपकतायां निवेशे तादृशनिरूपकतायां मूलोक्तलक्षणप्राप्तस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावनिष्ठत्वविशेषणस्य निष्प्रयोजनकत्वान्महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकाभावनिष्ठनिरूपकतायाः समवायादिसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकाभावनिष्ठनिरूपकतायाश्च प्रागुक्तोभयसम्बन्धेन तादृशान्यतरवैशिष्ट्यविरहादेव धर्त्तुमशक्यतया वह्निमान् धूमादित्यादावव्याप्त्यसम्भवादिति वाच्यम् । तादृशार्थ एव मूलस्य तात्पर्यवर्णनेन निरूपकतायां तादृशविशेषणानुपादानस्यैव स्वीकारात् । उपादेयत्वे तु एकधर्मावच्छिन्नप्रतियोगिताया ऐक्यमते कालिकेन घटसाध्यकमहाकालत्वहेतावव्याप्तिवारणमेव तत्प्रयोजनम्, तथाहि कालिकत्वविषयितात्वान्यतररूपावच्छिन्नसंसर्गताकघटत्वावच्छिन्नप्रतियोगिताकाभावो नास्तीतिप्रतीतिसिद्धाभावस्य घटरूपत्वमेवाङ्गीक्रियत इति तादृशप्रतीतिसिद्धाभावस्य विषयित्वकालिकोभयसम्बन्धेनैव स्वप्रतियोगितावच्छेदकावच्छिन्नेन सार्द्धं विरोधित्वकल्पनया वृत्तिविरहेणातिरिक्तकल्पनापेक्षया तद्रूपत्वकल्पनस्यैवोचितत्वात्, तथा च तादृशान्यतररूपावच्छिन्नसंसर्गताकघटत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ना घटसामान्यनिरूपिता या प्रतियोगिता साध्यतावच्छेदकीभूतकालिकसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावे वर्त्तते तस्या एव विषयित्वावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावेऽपि वर्त्तमानतया तादृशाभावान्तर्भावेण प्रागुक्तोभयसम्बन्धेन तादृशप्रतियोगिताविशिष्टविषयित्वावच्छिन्नघटाभावनिष्ठस्वरूपसम्बन्धावच्छिन्ननिरूपकतामादाय तादृशनिरूपकताकाधिकरणतावति महाकाले हेतोर्वृत्तेरव्याप्तिः सम्भवति, तदुपादाने तु निरूपकताया अपि आश्रयभेदेन भिन्नतयां विषयित्वसम्बन्धावच्छिन्नघटाभावनिष्ठनिरूपकताया साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्याभावनिष्ठत्वविरहेण तादृशनिरूपकानिरूपकताया धर्त्तुमशक्यत्वादव्याप्तिविरह इति ध्येयम् ।

न च भेदत्वनिरूपितप्रतियोगितावच्छेदकतावैशिष्ट्यं निवेश्यतां किं साध्यनिष्ठात्यन्ताभावत्वनिरूपितप्रतियोगिता अन्यतरत्वेन संगृह्य तद्वैशिष्ट्यनिवेशेनेति वाच्यम् । घटत्वाधिकरणत्वाभावसाध्यकस्थले घटत्वाधिकरणत्वाभावस्य घटत्वाधिकरणत्वाभावाभाववद् भेदरूपत्वेऽपि तादृशभेदत्वनिरूपितप्रतियोगितावच्छेदकताया गौरवेण घटत्वाधिकरणत्वे स्वीकर्त्तुमशक्यतया गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वमते सा-

ध्याभाववृत्तिसाध्यनिष्ठभेदत्वानिरूपितप्रतियोगितावच्छेदकत्वाप्रसिद्धिनिबन्धनाऽव्याप्तिः, अन्यतरनिवेशे च साध्यनिरूपितप्रतियोगितायाः निरुक्तान्यतरस्या एव प्रसिद्ध्याऽव्याप्तिविरहात् । वस्तुतस्तु कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिरित्युक्तं प्रागिति विभावनीयम् ।

नन्वधुना धर्मिभेदस्य धर्मात्यन्ताभावस्यानैक्ये घटभिन्न पटत्वादित्यादौ साध्यनिष्ठाऽत्यन्ताभावत्वनिरूपितप्रतियोगित्वाऽप्रसिद्ध्या निरुक्तान्यतराप्रसिद्धिनिबन्धनाऽव्याप्तिः पुनरुदेति । न च कालिकसम्बन्धावच्छिन्नघटभेदनिष्ठप्रतियोगिताकाभावाभावत्वं घटभेदे कल्प्यते, तथाच कालिकसम्बन्धावच्छिन्नघटभेदाभावनिष्ठप्रतियोगित्वमादायान्यतरत्वप्रसिद्धिः सम्भवतीति वाच्यम् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभावत्वस्य तत्र कल्पने विशेषणताविशेषसम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभावाभावत्वमपि कल्पयितुं शक्यते, तथाच साध्याभाववृत्तिसाध्यीयभेदत्वनिरूपितप्रतियोगितावैशिष्ट्यनिवेशेनोपपत्तौ निरुक्तान्यतरवैशिष्ट्यनिवेशवैयर्थ्यापत्तिरतो भेदत्वमत्यन्ताभावत्वं च परस्परविरुद्धमिति सिद्धान्तस्यैवावलम्बनीयत्वादिति चेन्न । अन्यतरपदेन साध्यनिरूपितवृत्तित्ववद्धर्मस्यैव विवक्षितत्वात्तथाच पर्यवसितोऽयमर्थः--साध्यतानवच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावेतरवृत्तिर्यः साध्यवृत्तिधर्मस्तदवच्छेदकसम्बन्धावच्छिन्नसाध्याभावनिष्ठनिरूपकताकाधिकरणतावन्निरूपितवृत्तित्वाभावो व्याप्तिरिति । अत्रेतरवृत्तित्वं स्वरूपसम्बन्धेन, साध्यवृत्तित्वं च स्वनिरूपकतावच्छेदकात्यन्ताभावत्ववत्त्व, स्वस्वनिरूपकप्रतियोगितानिरूपकतावच्छेदकभेदत्ववत्त्वान्यतरसम्बन्धेन । अत्र सम्बन्धघटकतयाऽत्यन्ताभावत्वानिवेशे द्रव्यवद्भिन्नं घटत्वादित्यत्र समवायसम्बन्धावच्छिन्नद्रव्यत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य स्वरूपसम्बन्धेन साध्यतायां समवायेन घटत्वहेतावव्याप्त्यापत्तेः, द्रव्यवद्भेदस्य विषयित्वसम्बन्धावच्छिन्नद्रव्यवद्भेदनिष्ठप्रतियोगिताकाभाववद्भेदस्य चैक्येन घटस्यापि विषयित्वसम्बन्धावच्छिन्नद्रव्यवद्भेदनिष्ठप्रतियोगिताकाभावत्वेन साध्यीयप्रतियोगितावत्त्वात् द्रव्यवद्भेदाभावस्य द्रव्यरूपतया घटस्यापि साध्याभावत्वेन तन्निष्ठप्रतियोगितायाश्च निरूपकत्वसम्बन्धेन साध्यवृत्तितया तादृशप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घटात्मकसाध्याभावाधिकरणे घटे हेतोर्वृत्तेः ।

द्वितीयसम्बन्धघटकतया भेदत्वानिवेशे च प्रागुक्तघटवदभाववान् जन्यरूपत्वादित्यादौ विषयवदभाववान् अभावत्वादित्यादौ च कालिकसम्बन्धेन विषयवतः समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य स्वरूपेण साध्यतायामभावत्वहेतावव्याप्त्यापत्तेः । तत्र घटादेरपि विषयत्वेन साध्याभावरूपतया साध्यीयप्रतियोगितावत् साध्यीयप्रतियोगितावच्छेदकत्वस्यापि तत्र सत्त्वेन तस्य च स्वनिरूपकप्रतियोगितानिरूपकत्वसम्बन्धेन साध्यनिष्ठतया तदवच्छेदककालिकसम्बन्धेन घटादिरूपविषयवति ध्वंसे हेतोर्वृत्तेः । निरूपकतावच्छेदकभेदत्वनिवेशे चैतन्मते प्रकृतसाध्यीभूतेऽत्यन्ताभावे कस्यचिदपि भेदत्वानङ्गीकारान्न दोषः ।

एतेन निरुक्तान्यतरसम्बन्धद्वयं तदन्तःपातिप्रथमसम्बन्धघटकमत्यन्ताभावत्वं चापहाय स्वनिरूपकतावत्त्वसम्बन्धेन साध्यवृत्तिधर्मविशिष्टनिरूपकताकाधिकरणतावद्वृत्तित्वाभावो निवेश्यतां तावतैव स्वनिरूपकतावत्त्वसम्बन्धावच्छिन्नसाध्यनिरूपितवृत्तित्वपुरस्कारेण प्रतियोगितारूपधर्ममादायैव सर्वत्राऽव्याप्तिवारणसम्भवे व्यर्थं तादृशान्यतरत्वावच्छिन्नसम्बन्धघटकसाध्यनिरूपितवृत्तित्वपुरस्कारेण निवेशनामिति परास्तम् । प्रागुक्तद्रव्यवद्भिन्नं घटत्वादित्यादौ प्रागुक्तरीत्या सम्पादितां घटनिष्ठां साध्यनिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतियोगितामादायाव्याप्त्यापत्तेः । अत एव घटभिन्नं कपालत्वादित्यत्राव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्व--स्वसामानाधिकरण्योभयसम्बन्धेन निरुक्तान्यतरवैशिष्ट्यनिवेशस्याऽवश्यकतया निरुक्तान्यतरावच्छेदकसम्बन्धावच्छिन्ननिरूपकतायां मूलोक्तलक्षणपरिप्राप्तसाध्याभावनिष्ठत्वविशेषणस्य वैयर्थ्यदानफक्किकापि नावतरति विशिष्टसत्ताभाववान् गुणत्वादित्यादौ विशिष्टसत्तारूपसाध्याभावनिष्ठनिरूपकताकाधिकरणतावति गुणे हेतोर्वर्त्तमानतयाऽव्याप्तिवारणाय निरुक्तनिरूपकतायां साध्याभावत्वावच्छिन्नत्वनिवेशे एव मूलतात्पर्यात् । विषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याभावस्तु न प्रतियोगिस्वरूपः किन्त्वतिरिक्त एव ( स्वरूपसम्बन्धावच्छिन्नवृत्तिमान् ) तस्य विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्तु स्वप्रतियोगिस्वरूप इति तेन च विषयित्वसम्बन्धावच्छिन्नप्रतियोगिताकघ-

न च तथापि कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरिति वाच्यम् । निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या निरुक्तसंसर्गकानिरवच्छिन्नाधिकरणता तदाश्रयाऽवृत्तित्वस्य विवक्षितत्वात्, गुणकर्मान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादौ सत्तात्मकसाध्याभावाधि

---

अथ कालिकसम्बन्धेन गुणविशिष्टस्य गुणस्य भेदे साध्ये पटत्वादिहेतावव्याप्तिः । साध्याभावस्य गुणस्वरूपतया तद्वृत्तिभेदत्वनिरूपितप्रतियोगितावच्छेदकतावच्छेदकः कालिकसम्बन्धस्तेन सम्बन्धेन साध्याभावाधिकरणे पटे हेतोर्वृत्तेरिति चेन्न । गुणविशिष्टगुणभेदाभावो गुणगुणत्वैतदुभयरूपस्तथाच तदुभयवृत्तितादृशप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धः समवायः कालिकेपि उभयसम्बन्धेन साध्याभावाधिकरणे गुणे पटत्वहेतोरवृत्तेः । अत्र साध्यध्याभावः प्रतियोगितत्वावच्छेदकोभयस्वरूपस्तद्वृत्तिनिरुक्तसम्बन्धः तादात्म्यसम्बन्धः कालिकोपि, उभयसम्बन्धेन साध्याभावाधिकरणं गुणादिरेव तत्र पटत्वहेतोरवृत्तेर्न दोष इत्यपि कश्चित् ।

**न चेति** । प्राचीनमते द्रव्ये संयोगसामान्याभाववाऽसत्त्वात् कपीति । वृक्षमात्रे कपिसंयोगाभावादेतदिति । (१) **अव्याप्यवृत्तिसाध्यकेति** । हेत्वधिकरणेऽवच्छिन्नवृत्तिकमात्रवृत्तिधर्मावच्छिन्नसाध्यकेत्यर्थः । संयोगाभाववान् गुणत्वादित्यादिव्युदासाय हेत्वधिकरणेति । अत एव व्यभिचारिणि प्रकृतलक्षणासत्त्वस्याऽदूषणत्वात्सद्धेतावित्युक्तम् । अवृत्तिगगना-

---

टाभावस्य साध्यत्वे स्वरूपसम्बन्धेन घटाभावाभाव इत्याकारकज्ञानव्यक्तित्वस्य हेतुत्वे घटाभाववान् तज्ज्ञानत्वादित्यादौ नाव्याप्तिः । विषयित्वसम्बन्धावच्छिन्नघटाभावाभावस्य प्रतियोगिरूपत्वं तु गुणे विशिष्टसत्ताभावो नास्तीत्यादिनञुल्लेखिप्रतीतेरप्रामाण्यरक्षार्थं, विशिष्टानुयोगिकवैशिष्ट्यावगाहिबोधमर्यादया धर्मितावच्छेदकनञर्थतावच्छेदकांशे नियतप्रकारीभूतवृत्तितावच्छेदकत्वावगाहित्वोपगमे घट इत्याकारकज्ञाने प्रागुक्तघटाभावो नास्तीति प्रतीतेरप्रामाण्यापत्तेः पूर्वोक्तघटाभावाभाव इत्याकारकज्ञाने तादृशघटाभावो नास्तीति प्रतीतेः प्रामाण्यापत्तिः स्वीकर्तुं न शक्यते इत्यभिनवः पन्थाः ।

(१) अत्र यदि साध्यतावच्छेदकत्वरूपेण यावद्धर्माननुगमय्य तद्विशिष्टावच्छिन्नप्रतियोगिताकाभावो निवेश्यते, तदाऽसिद्धिः जगति सर्वस्यैव साध्यतावच्छेदकतया सर्वस्यैव यत्किञ्चित्साध्यतावच्छेदकत्वात् । यदि च साध्यतावच्छेदकात्मकं वह्नित्वादिकं विशिष्योपादाय नानालक्षणमभिप्रेतं तदा लक्ष्यभेदस्यावश्यकत्वम् अन्यथा सर्वलक्षणस्यैवाऽव्यवस्थापत्तेः, तथाच कपिसंयोगी एतत्वादित्यादिस्थलीयस्य कपिसंयोगत्वावच्छिन्नाभाववदवृत्तित्वरूपस्य लक्षणस्य सम्भवेनाऽव्याप्तिदानमसंगतं स्यात् । अत्रेदं समाधानम् । साध्यतावच्छेदकत्वमुपलक्षणविधया वह्नित्वाद्यनुगमकं तच्च प्रकृतानुमितिविधेयतावच्छेदकत्वं प्राचां मते प्रकृतत्वमनुगतो धर्मो विशेषणम्, तथाच प्रकृतानुमितिविधेयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभाववदवृत्तित्वस्याऽनुगतस्य लक्षणत्वाद् लक्ष्यभेदकल्पनाविरहेणाऽव्याप्तिदानं संगतमेवेति । न चाऽभावप्रतियोगितावच्छेदककोटौ उपलक्षणविधया भानं नाङ्गीक्रियते इति वाच्यम् । साध्याभावप्रतियोगितावच्छेदकांशे साध्यतावच्छेदकत्वं न निवेश्यते अपि तु साध्यतावच्छेदकानिष्ठाऽवच्छेदकतायां सामानाधिकरण्यसम्बन्धेन तादृशावच्छेदकतायाः साध्याभावप्रतियोगिताऽनवच्छेदकतया अभावप्रतियोगितावच्छेदककोटौ उपलक्षणतया नाप्रसक्तेः । न च तथापि साध्याभावप्रतियोगितायाः साध्याभावप्रतियोगिताऽनवच्छेदकत्वेऽपि तादृशवृत्तित्वाभावप्रतियोगितावच्छेदकतया तत्र सामानाधिकरण्यसम्बन्धेन साध्यतावच्छेदकत्वस्य कथमुपलक्षणघटकतेति वाच्यम् । सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धेन साध्यतावच्छेदकानिष्ठाऽवच्छेदक-

देरपि कपिसंयोगादिव्याप्यतया तत्राव्याप्त्यसंभवेन तद्व्युदासाय सद्धेताविति हेतुतावच्छेदकसम्बन्धेन वृत्तिमदर्थकमित्यपि वदन्ति । साध्यनिष्ठाऽव्याप्यवृत्तितानिरूपकाधिकरणवृत्तिहेताविं.. निष्कर्षः । अव्याप्यवृत्तित्वं च निरवच्छिन्नवृत्तिकान्यत्वम् । स्वप्रतियोगित्वस्वसामानाधिकरण्यस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसम्बन्धेन यत्किञ्चिदभावविशिष्टत्वमिति यावत् । **अव्याप्तिरिति** । तथाच साध्याभावः कपिसंयोगाभावस्तदधिकरणं मूलावच्छिन्नो वृक्षस्तन्निरूपितवृत्तित्वस्यैतद्वृक्षत्वे सत्त्वादिति शेषः । **विवक्षितत्वादिति** । निरुक्तसाध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकत्वोपलक्षितसम्बन्धावच्छिन्नसाध्याभावत्वावच्छिन्नाधेयतानिरूपितनिरवच्छिन्नाधिकरणताश्रयाऽवृत्तित्वस्य विवक्षितत्वादित्यर्थः । एवं चात्र वृक्षनिष्ठकपिसंयोगाभावाधिकरणता मूलावच्छिन्ना निरवच्छिन्नकपिसंयोगाभावाधिकरणता तु गुणादावेव तत्र हेतोरवृत्तित्वान्नाव्याप्तिः । निरवच्छिन्नत्वं च अव्याप्यवृत्तितानियामकीभूताऽवच्छेदत्वानिरूपकत्वम् । तेन गुणनिष्ठाधिकरणताया गुणत्वावच्छिन्नत्वेऽपि न क्षतिः । आधेयतायां साध्याभावत्वावच्छिन्नत्वनिवेशस्य फलमाह गुणकर्मान्यत्वविशिष्टेति । अत्र सत्तायां गुणकर्मान्यत्ववैशिष्ट्यं सामानाधिकरण्यसंबन्धेन ।

ननु निरवच्छिन्नत्वनिवेशेऽपि कालिकसंबन्धावच्छिन्नप्रतियोगिताकात्मत्वप्रकारकप्रमाविशेष्यत्वाभावसाध्यकस्थले कालिकसम्बन्धेन साध्याभावस्य निरवच्छिन्नाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिर्दुर्वारैव । न च निरवच्छिन्नत्वपदेनाऽवच्छिन्नत्वहेतुमन्निष्ठत्वोभयाभाववत्त्वमेव विवक्षणीयम् तथाच न दोषः, कालिकसंबन्धेन तादृशप्रमाविशेष्यत्वरूपसाध्याभावाधिकरणतायामवच्छिन्नत्वसत्त्वेपि हेतुमन्निष्ठत्वविरहेणोभयाभावसत्त्वादिति वाच्यम् । तथासति कपिसंयोगरूपसाध्याभावस्य निरवच्छिन्नाधिकरणत्वाऽप्रसिद्धिमाशङ्क्य कपिसंयोगिभिन्नं गुणत्वादित्यत्र तादृशभेदाभावस्यातिरिक्तत्वाभ्युपगमविरोधः स्यात् । न चावच्छिन्नत्वनिरवच्छिन्नवृत्तितावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकत्वोभयाभाववत्त्वमेव विवक्षणीयमिति वाच्यम् । कालिकस्वरूपोभयसम्बन्धावच्छिन्नप्रतियोगिताकविशेष्यत्वाभावस्य स्वरूपेण साध्यतायामा-

---

तानिष्ठाऽवच्छेदकतायामुपलक्षणविधया निवेशेनाऽनुपपत्त्यभावात्, तथाच सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धेन साध्यतावच्छेदकनिष्ठा याऽवच्छेदकत्वनिष्ठाऽवच्छेदकता तन्निरूपिता या प्रतियोगितावृत्त्यवच्छेदकता तन्निरूपिता याऽनुयोगिवृत्त्यवच्छेदकता तन्निरूपिताऽभाववृत्त्यवच्छेदकता तन्निरूपिता याऽधिकरणवृत्त्यवच्छेदकता तन्निरूपिता या सामानाधिकरण्यसम्बन्धावच्छिन्ननिरूपितत्वनिष्ठाऽवच्छेदकता तन्निरूपिता या वृत्तित्वत्वनिष्ठावच्छेदकता तन्निरूपकप्रतियोगिताकाभावत्वेन निखिलसाध्याभाववद्वृत्तित्वाभावानुगमय्य लक्षणकरणे न कोऽपि दोषः । न चैवं वह्निमानित्यनुपपत्तिः, परामर्शे वह्नित्वानवगाहनेऽपि अनुमितेस्तत्प्रकारकत्वोपगमे नियमेन उपस्थितसर्वधर्मप्रकारकत्वस्य दुर्वारत्वाऽनुपपत्तेरिति वाच्यम् । अवच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नवह्नित्वादिप्रकारतानिरूपिताऽभावप्रकारतानिरूपितप्रकारता इत्यादिक्रमेण परामर्शस्य वह्नित्वावच्छिन्नविधेयताकाऽनुमितिं प्रति कारणत्वात् । न चैवमननुगम इति वाच्यम् । अनुमितिपरामर्शकारणत्वाननुगमस्य सर्वैरेव स्वीकारात् । न च कपिसंयोगी एतत्वादित्यादावपि द्रव्यत्वाभाववद्वृत्तित्वाभावमादाय लक्षणगमनसम्भवात् कथमव्याप्त्यभिधानमिति वाच्यम् । द्रव्यत्वाभाववद्वृत्तित्वाभावीयाऽवच्छेदकतावृत्त्यवच्छेदकताया सामानाधिकरण्यसम्बन्धेन प्रकृतसाध्यतावच्छेदकत्वविशिष्टत्वाभावाल्लक्षणसमन्वयसम्भवः । प्रकृतसाध्यतावच्छेदकत्वं चानुगतं विशेषविश्रान्तमित्युक्तमधस्तादधिकं स्वयमूहनीयम् ।

करणत्वस्य गुणादिवृत्तित्वेऽपि साध्याभावत्वविशिष्टनिरूपिताधिकरणाद्यवृत्तित्वान्नाव्याप्तिः। न चैवं कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणाऽप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवाऽस्य दोषस्य वक्ष्यमाणत्वात्।

न च तथापि कपिसंयोगिभिन्नं गुणत्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिः, अन्योन्याभावस्य व्याप्यवृत्तित्वनियमवादिनये तस्य केवलान्वय्यनन्तर्गतत्वादिति वाच्यम्। अन्योन्याभावस्य व्याप्यवृत्तितानियमवादिनयेऽन्योन्याभावान्तरात्यन्ताभावस्य प्रतियोगितावच्छेदकस्वरूपत्वेऽपि अव्याप्यवृत्तिमदन्योन्याभावाभावस्य व्याप्यवृत्तिस्वरूपस्यातिरिक्तस्याभ्युपगमात्, तच्चाग्रे स्फुटीभविष्यति।

---

त्मत्वहेतावव्याप्तिः। तादृशोभयसंबन्धस्यैव साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकतया तादृशोभयसम्बन्धावच्छिन्नाधिकरणतायां तदुभयाभावासत्त्वात्तद्वारणार्थं निरवच्छिन्नवृत्तितानवच्छेदकसम्बन्धानवच्छिन्नत्वस्य निरूपकताविशेषणत्वे कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिर्दुर्वारैव, वृक्षनिष्ठसाध्याभावाधिकरणतायामवच्छिन्नत्वसत्त्वेऽपि निरवच्छिन्नवृत्तितानवच्छेदकवृक्षानुयोगिककपिसंयोगाभावप्रतियोगिकस्वरूपानवच्छिन्ननिरूपकताकत्वाभावादुभयाभावसत्त्वादिति चेन्न। केवलान्वयितावच्छेदकानवच्छिन्ननिरवच्छिन्नवृत्तितावच्छेदकतानवच्छिन्नसंसर्गताकनिरूपकताकान्यत्वघटितोभयाभावस्य विवक्षणीयत्वान्नोक्तदोषाणामवकाशः। कालिकत्वस्यापि प्रमेयत्वावच्छिन्नवृत्तितावच्छेदकत्वात्कालिकसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नवृत्तितायाः निरवच्छिन्नत्वानुभवेन पुनरप्रसिद्धिरतः केवलान्वयितावच्छेदकानवच्छिन्नत्वनिवेश इति ध्येयम्।

**वक्ष्यमाणत्वादिति**। केवलान्वयित्वं च निरवच्छिन्नवृत्तिमदभावप्रतियोगितानवच्छेदकधर्मवत्साध्यकत्वम्। एवं च गुरुधर्मावच्छिन्नसाध्यकहेतोः केवलान्वयिसाध्यकत्वाक्रान्तत्वं गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वात्। एतेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव इत्यत्रावच्छिन्नत्वं न स्वरूपसम्बन्धविशेषो गुरुरूपेण साध्यतास्थले तदवच्छिन्नाभावाप्रसिद्ध्याऽव्याप्तेः, किन्तु साध्यव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाव एव साध्यभावपदार्थः। तत्र व्यापकतायां प्रतियोगिवैयधिकरण्यानिवेशेन संयोगाभावस्य लक्षणाघटकतया द्रव्यत्वाभावस्य तादृशतयाऽव्याप्तिविरहेण व्यर्थमेव निरवच्छिन्नत्वविशेषणमिति निरस्तम्। वह्नित्वेन घटाभावमादाय वह्निमान् धूमादित्यादावव्याप्तेश्चेति।

पुनः शङ्कते **तथापीति**। कपिसंयोगाभाववान् सत्त्वादित्यस्य केवलान्वय्यन्तर्गतत्वेपीत्यर्थः। साध्याभावस्य "कपिसंयोगिभेदाभावस्य" कपिसंयोगरूपतया तस्य निरवच्छिन्नाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिरित्यर्थः। न तस्यापि केवलान्वयित्वमित्याह **व्याप्यवृत्ति-**

त्वनियमवादिनये इति। व्याप्यवृत्तित्वं च निरवच्छिन्नाधिकरणताकत्वम्। **केवला-न्वय्यनन्तर्गतत्वादिति।** प्रतियोगितावच्छेदकीभूतकपिसंयोगवति कपिसंयोगिभेदस्या-ऽसत्त्वेनेति यावत्। तच्च—अतिरिक्तत्वं च, अग्रे—चतुर्थलक्षणे। **स्फुटीभविष्यति-**मूलावच्छेदेन कपिसंयोगिभेदाभावभानानुपपत्तेरिति ग्रन्थेनेति शेषः।

ननु कपिसंयोगिभिन्नं गुणत्वादित्यत्र कपिसंयोगरूपसाध्याभावाधिकरणतायां निरवच्छिन्न-त्वविरहादव्याप्तिमांशक्यातिरिक्तत्वेन समाधानं कृतं तत्कथं सङ्गच्छते यद्वाकल्पेऽतिरिक्ते साध्या-भावे साध्यीयभेदत्वनिरूपितप्रतियोगितावच्छेदकताया असत्त्वात्। न च तस्यातिरिक्तत्वेपि तद-भावस्य कपिसंयोगिभेदरूपतया साध्यीयप्रतियोगित्वमक्षतमेवेति वाच्यम्। तत्रातिरिक्त-साध्याभावेऽत्यन्ताभावनिरूपितप्रतियोगितायाः सत्त्वेपि एतत्कल्पे भेदत्वात्यन्ताभावत्वयोर्वि-रोधेन साध्यीयत्वस्य तत्रासत्वात्। न च साध्याभावसमनियतवृत्तित्वस्यावच्छेदकतायां निवेशान्नासङ्गतिरिति वाच्यम्। तादृशावच्छेदकतायाः प्रसिद्धत्वेऽपि समवायस्यैव तदवच्छे-दकतया तेन सम्बन्धेनाऽतिरिक्तसाध्याभावाधिकरणत्वाऽप्रसिद्धेः। न चातिरिक्तपदार्थस्या-पि समवायेन वृत्तित्वं स्वीक्रियते अत एव स्वत्वमातिरिक्तं समवेतमित्युक्तं दायभागटिप्पण्यां श्रीकृष्णतर्कालङ्कारमहाशयेनेति वाच्यम्। तत्र समवेतशब्दस्य वृत्तित्वमात्रार्थकतयैवोपपत्तेरति-रिक्तपदार्थस्य समवेतत्वस्वीकारानौचित्यात्। न हि सर्वत्र समेवतशब्दस्य समवायावच्छि-न्नवृत्तित्वमर्थः, अपि तु कदाचित् यथाकथंचित्सम्बन्धेन वृत्तित्वमपि, अत एव 'समवेता युयुत्सवः, इत्यत्र समवेतशब्दस्य मिलिता इत्यर्थोपि सङ्गच्छते सामीप्यसम्बन्धेन सम्बन्धिन इत्यर्थः। न च कपिसंयोगिभेदाभावस्य प्रतियोगितावच्छेदकीभूतकपिसंयोगरूपता न स्वी-क्रियते कपिसंयोगिरूपतास्वीकारे क्षत्यभावोऽन्यथा तादात्म्येन कपिसंयोगिनः साध्यतायामे-तद्वृक्षत्वहेतावव्याप्तिः साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगित्वाऽप्रसिद्धेस्तथाचाऽन्योन्या-भावाभावस्य प्रतियोगिरूपतया तत्प्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन निरवच्छिन्नाधिक-रणत्वप्रसिद्धिसम्भवान्नाऽप्रसिद्धिरिति वाच्यम्। तावतापि साध्याभावे कपिसंयोगिनि सा-ध्यीयभेदत्वनिरूपितप्रतियोगितावच्छेदकताया दौर्लभ्यादिति चेन्न। कपिसंयोगिभेदाभावव-द्भेदस्यापि कपिसंयोगिभिदात्मकतया साध्याभावे साध्यीयभेदत्वनिरूपितप्रतियोगितावच्छे-दकत्वसत्त्वात्तदवच्छेदकस्वरूपसम्बन्धेनातिरिक्तसाध्याभावाधिकरणत्वप्रसिद्ध्या नाव्याप्तिरिति बोध्यम्।

वस्तुतस्तु कपिसंयोगिभेदाभावस्य कपिसंयोगिरूपत्वे तत्र साध्यीयभेदत्वनिरूपितप्रति-योगितावच्छेदकत्वविरहेऽपि अन्यतरान्तर्गतसाध्यीयप्रतियोगित्वं सुलभमेव। न चात्यन्ताभा-वत्वनिरूपितप्रतियोगित्वाऽप्रसिद्धिरिति वाच्यम्। घटाभिन्नं कपालत्वादित्यत्राव्याप्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्य—उभयसम्बन्धेन साध्याभाववृत्तिसाध्य-सामान्यीयप्रतियोगिताविशिष्टनिरूपकत्वस्यैव निवेश्यतयाऽत्यन्ताभावत्वनिरूपितत्वविशेषण-स्यापि तत्रैव तात्पर्यादिति।

वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं न निवेशनीयं किन्तु वृत्तित्वनिष्ठप्रतियो-गितायां वक्ष्यमाणसम्बन्धावच्छिन्नत्वं निवेशनीयमन्यथाऽऽपत्त्यनुपपत्ती स्यातामिति शङ्का-

ननु तथापि समवायादिना गगनादिहेतुके इदं बह्निमद् गगनादित्यादावतिव्याप्तिः, वह्न्यभाववति हेतुतावच्छेदकसमवायसम्बन्धेन गगनादेरवृत्तेः । न च तल्लक्ष्यमेव, हेतुतावच्छेदकसम्बन्धेन पक्षधर्मत्वाभावाच्चाऽसद्धेतुत्वव्यवहार इति वाच्यम् । तत्रापि व्याप्तिभ्रमेणैवानुमितेरनुभवसिद्धत्वात्, अन्यथा धूमवान् वह्नेरित्यादेरपि लक्ष्यत्वस्य सुवचत्वात् ।

एवं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादावव्याप्तिः, विशिष्टसत्त्वस्य केवलसत्त्वानतिरेकितया द्रव्यत्वाभाववत्यपि गुणादौ तस्य वृत्तेः. गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतेः सर्वजनसिद्धत्वात् । एवं सत्तावान् द्रव्यत्वादित्यादावव्याप्तिश्च, सत्ताभाववति समान्यादौ हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरप्रसिद्धेरिति चेन्न ।

---

मुखेनाऽऽरभते **नन्विति** । **तल्लक्ष्यमेवेति** । साध्याभाववदवृत्तित्वादिति शेषः । तथाच व्याप्तिलक्षणलक्ष्यतया तत्रातिव्याप्तिरिष्टैवेति भावः । नन्वेवं समवायेन गगनादिहेतोः सद्धेतुतापत्तिरित्यत आह **हेतुतावच्छेदकसम्बन्धेनेति** । साध्याभाववति येन सम्बन्धेन हेतोरवृत्तित्वं गृह्यते तेन सम्बन्धेन पक्षे हेतुमत्तानिश्चयस्य कारणत्वेन विशेषदर्शिनस्तादृशनिश्चयाभावान्नानुमितिर्न वाऽवृत्तिगगनादौ वह्निव्याप्यत्वव्यवहार इति भावः । तथा चाऽवृत्तिगगनादौ साध्याभाववदवृत्तित्वरूपव्याप्तिसत्त्वेपि विशेषदर्शिनां पक्षधर्मताज्ञानविरहादेव नानुमितिर्व्याप्तिपक्षधर्मत्वोभयस्यैव सद्धेतुतानियामकत्वादिति फलितम्(१) । एवमपि व्याप्तिभ्रमं विना नावृत्तिहेतुकानुमितिरिति प्राचामनुभवो व्याहन्येतेत्याह **तत्रापीति** । अवृत्तिगगनादिहेतावित्यर्थः । प्रतिवन्धिमाह **अन्यथेति** । अन्यथा—तादृशानुभवाऽस्वीकारे । सुवचत्वात्, अत्रापि कारणान्तरविरहादेवानुमितेः प्रमात्ववारणसम्भवादिति । तथा चाऽस्यापि तुल्ययुक्त्याऽऽलक्ष्यतयेष्टापत्त्यसम्भवादिति भावः । अनुपपत्तिमप्याह **एवमिति** । **केवलसत्त्वानतिरेकितयेति**(२) । लाघवात् विशिष्टसत्तानिष्ठा-

---

( १ ) इदमत्रावधेयम् । यदि च गगनमवृत्तीत्याकारकविशेषदर्शनकाले पक्षविशेष्यकतादृशगगनादिप्रकारकस्य साध्याभाववदवृत्तिगगनवान् पर्वत इत्यकारकपरामर्शस्योत्पत्तौ बाधकाभावः अवृत्तित्वप्रकारकग्रहस्य वृत्तित्वप्रकारकग्रहं प्रत्येव ग्राह्याभावावगाहितया विरोधित्वात्तादृशपरामर्शं प्रति विरोधित्वे प्रमाणाभावात्, तदा तत्रानुमितेर्वारणाय साध्याभाववदवृत्तित्वविशिष्टवृत्तिमत्त्वं व्याप्तिरित्येवानुसरणीयम् । अत एव वक्ष्यति–'निवेशतां वा वृत्तिमत्त्वं' इत्यादि, तथाचतादृशव्याप्तिग्रहे चावृत्तित्वग्रहस्य विरोधित्वे न कस्यापि विप्रतिपत्तिरित्यतोऽलक्ष्यतैव युक्तेति चिन्त्यम् ।

( २ ) अयमाशयः । गुणादिवृत्तिसत्तातो गुणकर्मान्यत्वविशिष्टसत्तादेरतिरिक्तत्वेऽनुगतधर्ममात्रोच्छेदः स्यात्, एकव्यक्तिवृत्तित्वविशिष्टस्याऽपरव्यक्त्यन्यसत्त्वात् । न च तत्तद्व्यक्तिवृत्तित्वविशिष्टसत्तादीनां मिथो भेदेपि शुद्धसत्तादिकन्त्वनुगतमेवेति वाच्यम् । शुद्धसत्तादौ तद्व्यक्तिवृत्तित्ववैशिष्ट्याभ्युपगमे तदेकत्वाऽसम्भवात् । एवं सर्वेषामेवं वस्तूनां तत्तत्क्षणादिवृत्तित्वरूपविशेषणभेदाद्भेदप्रसक्त्या क्षणभङ्गापत्तिर्दोषः । तथाच विशिष्टं शुद्धान्नातिरिच्यत इति न्यायः समादरणीय एव । न च प्रत्यभिज्ञानुरोधेनै-

हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धेन निरुक्तसाध्याभाववत्त्वविशिष्टनिरूपितनिरुक्तसंसर्गकनिरवच्छिन्नाधिकरणताश्रयवृत्तित्वसामान्याभावस्य विवक्षितत्वात् ।

वृत्तित्वं च न हेतुतावच्छेदकसम्बन्धेन विवक्षणीयम् । अस्ति च सत्तावान्द्रव्यत्वादित्यादौ सत्ताभावाधिकरणताश्रयवृत्तित्वस्य हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धेन सामान्याभावो द्रव्यत्वादौ. समवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावाधिकरणताश्रयवृत्तित्वाभाव-

---

धेयतायाः शुद्धसत्तानिष्ठाधेयताऽनतिरिक्तत्वेनेत्यर्थः । अनतिरिक्तत्वे युक्तिमप्याह गुणे इति । विशेष्यवृत्तिधर्मस्य विशिष्टाऽनुयोगिकाभावानङ्गीकारादिति नियमादिति भावः । एवं वह्निमान् धूमादित्यत्र वह्न्यभावाधिकरणधूमावयवनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितामादायाऽव्याप्तिवारणाय वृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेश आवश्यकस्तथा चाऽव्याप्तिमाह एवमिति ।

**हेतुतावच्छेदकेति । विशेषणताविशेषसम्बन्धेनेति ।** तृतीयार्थोऽवच्छिन्नप्रतियोगित्वम् प्रतियोगित्वमात्रं वा तदाऽवच्छिन्नत्वसम्बन्धेन तृतीयाप्रकृतेरन्वयः । अवच्छिन्नत्वं चावच्छेदकतानिरूपकत्वम् । प्रतियोगित्वस्य च निरूपकतासम्बन्धेनाऽभावेऽन्वयः। **निरुक्तेति ।** साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकेत्यर्थः। **निरुक्तसंसर्गकेति ।** साध्याभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धसंसर्गकेत्यर्थः । तथाच वह्निमान् धूमादित्यादौ धूमत्वावच्छिन्नाधेयतानिरूपिताऽधिकरणतानिरूपितसंयोगसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण धूमाधिकरणतानिरूपितसंयोगसम्बन्धावच्छिन्नाधेयतैव धूमे वर्त्तते साध्याभावाधिकरणजलह्रदनिरूपिताधेयता कुत्रापि न वर्त्तते येन सम्बन्धेन यस्य न वृत्तित्वं तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य केवलान्वयितया जलह्रदनिरूपितवृत्तित्वाभावस्य तदभावस्य धूमे सत्त्वाल्लक्षणसमन्वयः ।

---

कस्मिन्नानादेशकालवृत्तित्ववैशिष्ट्यं स्वीक्रियत एव परन्तु गुणे गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिविरहाद् गुणे गुणकर्मान्यत्वविशिष्टसत्ताभाववानिति प्रतीतिसद्भावाच्च विशिष्टस्यातिरिक्तत्वं स्वीकरणीयमिति वाच्यम् । विशिष्टाधिकरणत्वस्याऽतिरिक्तत्वकल्पनेनैव सर्वसामञ्जस्यात्. इत्थं च गुणे गुणकर्मान्यत्वविशिष्टसत्तेति प्रतीतिरुपपद्यते अनतिरिक्तत्ववादिनां मतेऽपि निरूपकभेदेन विशिष्टशुद्धाधिकरणत्वयोरतिरिक्तत्वमभ्युपेयम् । मम तु अवच्छेदकभेदेनेति विशेषः । इत्थं च द्रव्यं विशिष्टसत्तावदिति निश्चयस्य द्रव्यं सत्ताभाववदिति बुद्धिप्रतिबन्धकत्वं तत्रतत्रोक्तं सङ्गच्छत इति । न च द्रव्यं विशिष्टसत्त्वादिति विशिष्टसत्वहेतोर्द्रव्यत्वव्यभिचारिता स्यादिति वाच्यम् । विशिष्टाधिकरणताया गुणादावसत्त्वात् । वस्तुतस्तु विशिष्टसत्त्वं विशिष्टनिरूपिताधारतासम्बन्धेनैव द्रव्यत्वव्याप्यं न तु समवायेनेति स्वयमेव स्फुटयति ।

स्य व्याधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावतया संयोगसम्बन्धावच्छिन्नगुणाभावादेरिव केवलान्वयित्वात् । द्रव्यं सत्त्वादित्यादौ च द्रव्यत्वाभावाधिकरणगुणादिवृत्तित्वस्यैव समवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकविशेषणताविशेषसम्बन्धेन सत्तायां सत्त्वान्नातिव्याप्तिः ।

द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिवारणाय निरूपितान्तमाधेयताविशेषणम् ।

---

धूमवान् वह्नेरित्यादौ च नातिव्याप्तिः, तथाहि अत्र साध्याभावाधिकरणं हेत्वधिकरणं चैकमेवाऽयोगोलकम्, तथाच हेत्वधिकरणीभूततत्तदयःपिण्डनिरूपितसंयोगसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण साध्याभावाधिकरणीभूततत्–तदयःपिण्डनिरूपितवृत्तितायाः वह्नौ सत्त्वादिति ।

अत्र वृत्तितानिष्ठप्रतियोगितायां स्वरूपसम्बन्धावच्छिन्नत्वमात्रोक्तौ वह्निमान् धूमादित्यत्र साध्याभावाधिकरणह्रदनिरूपितसंयोगसम्बन्धावच्छिन्नाधेयतायाः कालिकेन धूमे सत्त्वेपि तादृशवृत्तितानिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य हेतौ सत्त्वेनाव्याप्तिविरहेऽपि ह्रदनिरूपितकालिकसम्बन्धावच्छिन्नाधेयतायाः स्वरूपसम्बन्धेन धूमे सत्त्वादव्याप्तितादवस्थ्यमतो वृत्तित्वनिष्ठप्रतियोगितायां हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नत्वं निवेशितम् ।

संसर्गघटकीभूताधेयतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानुक्तौ तद्दोषतादवस्थ्यम्, हेत्वधिकरणपर्वतनिरूपितकालिकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण साध्याभावाधिकरणह्रदनिरूपिताधेयतायाः धूमे सत्त्वात् । एवं धूमवान् वह्नेरित्यत्र महानसीयसंयोगेन हेतुतायां सद्धेतौ तदयःपिण्डनिरूपितशुद्धसंयोगसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण धूमाभावाधिकरणतदयःपिण्डनिरूपितवृत्तित्वस्य वह्नौ सत्त्वादव्याप्तिरतो न्यूनवारकपर्याप्तिर्निवेश्या । एवं हेत्वधिकरणमहानसनिरूपिततत्तद्वह्निप्रतियोगिकसंयोगसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण साध्याभावाधिकरणतदयःपिण्डनिरूपितवृत्तित्वाभावस्य वह्नौ सत्त्वादतिव्याप्तिवारणायेतरवारकपर्याप्तिर्निवेश्या ।

हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेणेत्येतावन्मात्रोक्तौ हेतुतावच्छेदकावच्छिन्नत्वानुक्तौ वाऽव्याप्तिमाह **द्रव्यमिति** । तथाच हेतुतावच्छेदकसमवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण साध्याभावाधिकरणीभूतगुणनिरूपितवृत्तितायाः विशिष्टसत्त्वे सत्त्वादव्याप्तिः स्यादिति तत्रापि न्यूनवारकपर्याप्त्यनिवेशे तद्दोषतादवस्थ्यम् । इतरवारकपर्याप्त्यनिवेशे द्रव्यं सत्त्वादित्यादौ विशिष्टसत्ताधिकरणद्रव्यनिरूपितसमवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण साध्याभावाधिकरणनिरूपितवृत्तित्वाभावस्य केवलान्वयितया हेतौ सत्त्वादतिव्याप्तिः स्यात् ।

तथाच स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन

हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति यन्निरूपकत्वं तन्निरूपिताधिकरणतानिरूपितहेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितसंसर्गतानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितवृत्तितानिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितस्वरूपत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितस्वरूपनिष्ठावच्छेदकतानिरूपितत्वेनैव 'प्रतियोगिता'संसर्गता निवेशनीयेति । अत्र तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वनिष्ठावच्छेदकताभिन्नेत्यनेन तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकसामान्यभेद एव निवेशनीयः । तेन धूमवान् वह्वेरित्यत्र महानसीयसंयोगेन हेतुतायां सद्धेतौ महानसीयत्वसंयोगत्वनिष्ठयोः संसर्गतावच्छेदकतयोस्तदवच्छेदकसम्बन्धभेदेनाऽश्रयभेदेन च भिन्नतया एकावच्छेदकताभेदस्यापरावच्छेदकतायां सत्त्वेऽपि नाव्याप्तिः ।

अथ तादृशरूपवृत्तिनिरूपकतानिरूपितत्वेनैवाऽधिकरणत्वप्रवेशोऽस्तु अधिकरणतात्वेन तत्प्रवेशो व्यर्थं इति चेन्न । स्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसम्बन्धेनाधिकरणताविशिष्टवृत्तित्वलाभायैव तत् । तेन वह्निमान् पर्वतवृत्तित्वविशिष्टवाच्यत्वादित्यत्र साध्याभावाधिकरणह्रदनिरूपितवृत्तिताया उक्तनिरूपकतानिरूपितसंसर्गतानिरूपितवाच्यत्वावच्छिन्नवृत्तित्वीयस्वरूपेण हेतौ सत्त्वेपि न क्षतिः । साध्याभावाधिकरणहेत्वधिकरणतात्मकाधिकरणनिरूपितवाच्यत्वत्वावच्छिन्नवृत्तितामादाय तद्दोषतादवस्थ्यमतः स्वनिष्ठाधिकरणतानिरूपितत्वं निवेशितम् ।

न च तथापि हेतुतावच्छेदकसम्बन्धावच्छिन्नो यस्तत्प्रतियोगिकस्वरूपेणेत्येव कथं नोक्तमिति वाच्यम् । द्रव्यत्वसाध्यके समवायेन प्रमेयविशिष्टस्य समवायेन हेतुतायामव्याप्तेः । हेतुतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणताविशिष्टप्रमेयत्वावच्छिन्नावच्छेदकतायाः स्वावच्छेदकप्रमेयत्वरूपायाः प्रमेयत्वात्मकप्रमेयत्वावच्छिन्नवृत्तितात्मकत्वेन तत्प्रतियोगिकस्वरूपेण साध्याभावाधिकरणनिरूपितप्रमेयत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नवृत्तित्वस्यैव हेतौ सत्त्वात् । वृत्तितात्वेन तत्प्रवेशे तु स्वनिष्ठनिरूपितवृत्तितात्वावच्छिन्ननिरूप्यत्वस्य तदर्थतया प्रमेयावच्छिन्नवृत्तितायामेवाऽधिकरणताविशिष्टत्वसत्त्वेन नाव्याप्तिरिति ।

अत्र हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण साध्याभावाधिकरणवृत्तित्वाभावस्य लघुतरस्य व्याप्तित्वं कथं नोक्तमिति तु विभावनीयम् ।

ननु वन्हिमान् धूमादित्यादौ कालिकसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताक–अधिकरणतानिरूपितहेतुतावच्छेदकीभूतसंयोगसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपेण वह्न्यभावाधिकरणनिरूपितवृत्तित्वस्य धूमे सत्तयाऽव्याप्तिः । हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वमवच्छेदकतायां निवेश्य तद्दोषवारणेऽपि महानसीयवह्निसाध्यके समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन धूमत्वविशिष्टो यस्तस्य संयोगेन हेतुतायामव्याप्तिः, कालिकसम्बन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतानिरूपितसमवायसम्बन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकवृत्तितायाः हेतौ सत्त्वादिति चेन्न । आधेयताया आधेयभेदेन भि-

वस्तुतस्तु एतल्लक्षणकर्त्तृमते विशिष्टसत्त्वं विशिष्टनिरूपिताधारता-सम्बन्धेनैव द्रव्यत्वव्याप्यं न तु समवायसम्बन्धेन, तथाच प्रतियोगिका-निरूपितान्तमाधेयताविशेषणमनुपादेयमेव । तदुपादाने च हेतुतावच्छेदकभेदेन कार्यकारणभावभेदापत्तेः ।

---

न्नत्वे मीनशैवालादिनिष्ठाधेयतायाः धूमे सत्त्वात् धूमत्वस्य कालिकेन धूमत्वाश्रयत्वेपि संयोगसम्बन्धावच्छिन्नतन्निष्ठवृत्तितायां ह्रदनिरूपितत्वविरहान्नाव्याप्तिः । सामान्यधर्मावच्छिन्नाधेयताया ऐक्यमिति मते हेतुतावच्छेदकावच्छिन्नत्वमित्यनेन हेतुतावच्छेदकताविशिष्टावच्छेदकतानिरूपकत्वमित्येव वाच्यम् । वैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेनेति ।

ननु धूमवान् वह्नेरित्यत्र धूमाभावाधिकरणनिरूपितवृत्तित्वाभावस्य पर्वतीयवह्न्यादौ सत्त्वादतिव्याप्तिरिति चेन्न । सामान्यधर्मावच्छिन्नाधेयताया ऐक्येनाऽदोषात् । वह्नित्वेन तस्याऽलक्ष्यत्वेपि महानसीयवह्नित्वेन लक्ष्यत्वमेवेत्यपरे । हेतुतावच्छेदकावच्छेदेनोक्तवृत्तित्वाभावो व्याप्तिरतो न दोष इति नव्याः । तादृशवृत्तितावच्छेदकहेतुतावच्छेदकवत्त्वं व्याप्तिरित्यपि केचित् ।

**वस्तुतस्त्विति** । विशिष्टनिरूपिताधारतासम्बन्धेन—समवायसम्बन्धावच्छिन्नविशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधारतासम्बन्धेनेत्यर्थः । एवकारव्यवच्छेद्यमाह **नत्विति** । समवायस्य चात्र व्यभिचारिताप्रयोजकत्वादित्यर्थः । एतत्तत्वमभिहितं प्राक् । **तदुपादाने चेति** । ननु वह्निमान् धूमादित्यादौ वह्न्यभावाधिकरणह्रदादिनिरूपितप्रमेयत्वावच्छिन्नवृत्तिताया धूमे सत्त्वादव्याप्तिः । न चाधेयताया आधेयभेदेन भिन्नत्वे मीनशैवालादिनिष्ठतादृशवृत्तितया धूमेऽसत्त्वात् धूमनिष्ठाधेयताया ह्रदनिरूपितत्वविरहान्नाव्याप्तिरिति वाच्यम् । एवमपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र द्रव्यत्वाभावाधिकरणगुणादिवृत्तितया विशिष्टसत्त्वे हेतौ सत्त्वादव्याप्तिः । उक्तयुक्त्या विशिष्टसत्तानिष्ठवृत्तित्वस्य सत्तानिष्ठवृत्तित्वस्य चैक्यात् । एवं द्रव्यं घटत्वपटत्वोभयस्मादित्यत्रातिव्याप्तिः, साध्यीभूतद्रव्यत्वसामानाधिकरण्यस्य द्रव्यत्वाभाववद्वृत्तित्वाभावस्य च हेतौ सत्त्वादतः साध्याभाववद्वृत्तितानवच्छेदकसाध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकवत्त्वस्य विवक्षणियतया हेतुतावच्छेदकभेदेन कार्यकारणभावभेदो दुर्वार एवेति चेन्न । यतः साध्यसामानाधिकरण्यावच्छेदकसाध्याभाववद्वृत्तितानवच्छेदकधर्मवत्त्वमेव व्याप्तिः । तथा च साध्यसामानाधिकरण्यावच्छेकत्वसाध्याभाववद्वृत्तितावच्छेदकत्वैतद्धर्मद्वयावच्छिन्नावच्छेदकतानिरूपितप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेन कारणतेति न कोपि दोषः । न च व्याप्यत्वव्यवहारापत्तिः । वह्निर्धूमव्याप्य इत्यत्र धूमसामानाधिकरण्यावच्छेदकधूमाभाववद्वृत्तितानवच्छेदकधर्मवदभिन्नो वह्निरिति शाब्दबोधः । तत्रोद्देश्यतावच्छेदकीभूतधर्मे विधेयतावच्छेदकीभूतधर्मस्य धर्मिपारतन्त्र्येणाभेदो भासत इति नापत्तिः ।

**इदमत्रावधेयम्** । साध्याभाववद्वृत्तित्वरूपव्याप्तेर्हेतुतावच्छेदकाघटितया हेतुतावच्छे-

आत्मानन्द अ[illegible]

दकविषयतामनिवेश्य वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवानित्याकारकबहुविधपरामर्शानां साध्याभाववदवृत्तित्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेनैकरूपेण कारणतासम्भवेन न हेतुतावच्छेदकभेदेन कारणताभेदप्रसङ्गः ।

ननु च हेतुतावच्छेदकं विशिष्याऽनिवेश्य धूमालोकादिपरामर्शसाधारणस्य निर्णयत्वस्य दुर्वचतया साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानहेतुतामतेऽपि हेतुतावच्छेदकभेदेन कारणताबाहुल्यमावश्यकम्,तथाहि वह्निव्याप्यप्रतियोगिकाऽभावाप्रकारकत्वे सति वह्निव्याप्यप्रकारकज्ञानत्वं न निश्चयत्वं, वह्निव्याप्यालोकाभाववान्न वा पर्वतः पर्वतो वह्निव्याप्यधूमवानित्याकारकांशिकनिर्णयाऽव्यापनात् । नापि वह्निव्याप्यत्वावच्छिन्नसामान्याभावाप्रकारकत्वे सति तदवच्छिन्नप्रकारकत्वं, पर्वतो वह्निव्याप्यधूमवान्न वेति संशयस्यापि तादृशसामान्यभावाप्रकारकत्वेन निश्चयत्वप्रसङ्गात्, तादृशसामान्यभावाप्रकारकत्वे सति शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारकत्वनिवेशेऽपि च वह्निव्याप्यधूमवान् पर्वत इति निश्चयस्याप्यसङ्ग्रहः स्यात्, तादृशज्ञानीयधूमत्वावच्छिन्नव्याप्यप्रकारतायाः केवलवह्निव्याप्यत्वावच्छिन्नत्वविरहात् । न च तादृशनिश्चये फलानुरोधेन वह्निव्याप्यवान् पर्वत इत्येतादृशनिर्णयसाधारणी शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारतापि स्वीक्रियतेऽतो न तदसङ्ग्रहः, वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशये च तादृशप्रकारतायाः कल्पकाभावान्नातिप्रसङ्गः, यत्र संशये तादृश्यपि प्रकारता प्रामाणिकी, स तावद् वह्निव्याप्यधूमवान्न वा पर्वतः, पर्वतो वह्निव्याप्यवानित्याकारक एव तस्य चानुमितिजनकत्वे न केचिदपि विप्रतिपद्यन्ते इति वाच्यम् । वह्निव्याप्यधूमवान् पर्वत इत्यादिसकलनिर्णयेषु शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारताया अनुभवविरुद्धत्वात्तत्स्वीकारे सर्वेषां तथाविधनिर्णयानां वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यवांश्चेत्याकारकताप्रसङ्गात् ।

वस्तुतस्तु शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारतायाः वह्निव्याप्यधूमवान्न वा पर्वत इत्याकारकसंशयसाधारण्यवारणाय तत्रानुगतनियामककल्पनमावश्यकम् ,एवं चोपदर्शितनिर्णयेषु तदभ्युपगमेन तन्निर्णयव्यक्त्युत्पादकानामनन्तानामननुगतहेतूनां तादृशविषयताप्रयोजकत्वकल्पने महागौरवम् । एवं विरोधिसामग्रीकालीनस्य वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकप्रत्यक्षं जायतामित्येतादृशेच्छाधीनवह्निव्याप्यधूमवानितिनिर्णयस्य तथाविधप्रकारताशालित्वं न संभवति तादृशप्रकारताशालिबोधे शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारताकप्रत्यक्षं जायतामित्येतादृशेच्छाविरहविशिष्टविरोधिसामग्र्याः प्रतिबन्धकत्वात् । न च पूर्वोपदर्शितानामपच्छिानां तत्रोत्तेजकत्वोपगमान्न तादृशेच्छाकालीननिर्णयस्य शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारताशालित्वानुपपत्तिरिति वाच्यम् । तथासति तादृशेच्छाभावैः सह वह्निव्याप्यत्वावच्छिन्नप्रकारताकप्रत्यक्षं जायतामित्येतादृशेच्छाया अभावस्य विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्यप्रसङ्गात्, तादृशेच्छाकाले धूमत्वादिभासकसामग्र्यसत्त्वे विरोधिसामग्रीदशायां वह्निव्याप्यवान् पर्वत इत्याकारकज्ञानापत्तेश्चेति चेद् । पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतान्या या पर्वतत्वावच्छिन्नविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारता तच्छालिज्ञानत्वमेव पर्वतत्वावच्छिन्नधर्मिकवह्निव्याप्यवत्ता-

निश्चयत्वम्(१)। एवं च वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशयीयपर्वतविशेष्यतानिरूपितधूमप्रकारकतायास्तादृशाभावविशेष्यतानिरूपितप्रकारत्वाभिन्नतया नातिप्रसङ्गः । वह्निव्याप्यालोकवान्नवा वह्निव्याप्यधूमवान् पर्वत इत्यादिसमूहालम्बने च तथाविधधूमप्रकारताया अभावविशेष्यतानिरूपितालोकादिप्रकारताभिन्नत्वान्न तदसङ्ग्रहः ।

यत्तु वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशयेऽपि पक्षविशेष्यतानिरूपितसंयोगसम्बन्धावच्छिन्नप्रकारताया अभावविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतातो भेद आवश्यकः । तदभेदे तादृशज्ञानस्य पर्वतविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नधूमप्रतियोगिताकधूमाभावप्रकारकपर्वतविशेष्यकपर्वतो न धूमीय इत्यादिबाधप्रतिबध्यत्वप्रसङ्गः तादृशधूमप्रकारताया एव तथाविधबाधादिप्रतिबध्यतावच्छेदकत्वादिति । तन्न । पर्वतविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नधूमप्रकारताकबुद्धित्वं न तथाविधबाधादिप्रतिबध्यतावच्छेदकं येनोक्तापपत्तिः स्यादपि तु पर्वतविशेष्यतानिरूपतप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितधूमप्रकारताकबुद्धित्वम्, उपदर्शितसंशये च प्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतायाः पर्वतनिष्ठविशेष्यतानिरूपितत्वेऽपि तादृशप्रकारतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयताया न तन्निरूप्यत्वमपि तु संयोगीयसांसर्गिकविषयताया एवेति नास्योपदर्शितप्रतिबध्यतावच्छेदकाक्रान्तत्वमिति तत्र प्रकारतैक्यं निराबाधमेवेति चेन्मैवम् । वह्निव्याप्यधूमवान् वह्निव्याप्यधूमाभाववान्वा पर्वत इत्याकारकसंशयीयपर्वतविशेष्यतानिरूपितधूमप्रकारतायाः स्वावच्छेदकतासमनियताऽवच्छेदकताकाभावविशेष्यतानिरूपितधूमप्रकारत्वाभेदोक्तिसम्भवेऽपि वह्निव्याप्यधूमवान् धूमाभाववान्वा पर्वत इत्येतादृशसंशयीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्नप्रकारतायाः अभावविशेष्यतानिरूपितशुद्धधूमत्वावच्छिन्नप्रकारत्वाभेदोक्तिर्न सम्भवति तथासति वह्निव्याप्यधूमावान् वह्निव्याप्यधूमाभाववान्वा पर्वत इति संशयात्तद्वैलक्षण्यापत्तेः तथाच तादृशसंशयसाधारण्यमुपदर्शितानिर्णयत्वस्य दुर्वारमेव ।

अथ तादृशसंशयेपि पर्वतविशेष्यतानिरूपितधूमप्रकारता—अभावविशेष्यतानिरूपितधूमप्रकारतयोरभेदः स्वीक्रियते । न चोपदर्शितसंशयात्तद्वैलक्षण्यप्रसङ्ग इति वाच्यम् । उपदर्शितसंशये अभावविशेष्यताधूमप्रकारतयोर्वह्निव्याप्यत्वविशिष्टधूमत्वावच्छिन्नप्रकारतात्वेन निरूप्यनिरूपकभावः, तादृशसंशये च केवलधूमत्वावच्छिन्नप्रकारतात्वेनेति प्रकारताविशेष्यतयोर्निरूप्यनिरूपकभाववैलक्षण्यादेव तद्वैलक्षण्यमुपपद्यते इति चेत् । वह्निव्याप्यनीलधूमाभाववान् पर्वतो वह्निव्याप्यधूमवांश्चेति समुच्चयीयतथाविधधूमप्रकारतातो भेदोप्यसिद्धः । तद्बीजस्य वह्निव्याप्यनीलधूमवान्नवा पर्वत इति संशयात्तादृशसमुच्चयवैलक्षण्यस्य तदभेदेऽपि त्वदुक्तरीत्योपपादयितुं शक्यत्वात्, तथाच तादृशसमुच्चयादप्यनुमित्यनुदयप्रसङ्गादिति ।

---

(१) वह्निव्याप्यत्वावच्छिन्नप्रकारताविशिष्टा या पर्वतत्वावच्छिन्नविशेष्यता तच्छालिनिश्चयत्वमित्यर्थः। वै० स्वनिरूपितत्वस्वान्यप्रकारत्वानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिज्ञानवृत्तित्वोपलक्षितत्वोभयसम्बन्धेन ।

यत्तु संशये भावाऽभावोभयकोटिप्रकारतानिरूपितविशेष्यता एकैव समुच्चये तु प्रकारताभेदेन विशेष्यताभेदः, एवं च व्याप्यप्रतियोगिकाभावप्रकारत्वानिरूपितव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकज्ञानत्वमेव व्याप्यवत्तानिर्णयत्वमिति। तदप्यसत्। वह्निव्याप्यधूमवह्निव्याप्यालोकाभावादिकमेकत्र द्वयमिति रीत्या पक्षांशेऽवगाहिज्ञानस्यापि तादृशधूमालोकाभावादिप्रकारतानिरूपितैकविशेष्यताकतया तदसङ्ग्रहप्रसङ्गः। तत्र विशेष्यताभेदे वह्निव्याप्यधूमवान् पर्वत आलोकाभाववान् पर्वत इत्येतादृशसमूहालम्बनज्ञानाद् वह्निव्याप्यधूमवान्पर्वतो वह्निव्याप्याऽऽलोकाभाववान्पर्वत इत्येतादृशस्यैकत्र द्वयमिति रीत्या धूमालोकाभावादिप्रकारताकतादृशज्ञानस्याऽवैलक्षण्यप्रसङ्गात्।

केचित्तु स्वावच्छेदकावच्छिन्नत्वस्वनिरूपकज्ञाननिरूपितत्वोभयसम्बन्धेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारताविशिष्टान्या या पर्वतत्वावच्छिन्नविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारता तन्निरूपकज्ञानत्वमेव प्रकृते निर्णयत्वम्, वह्निव्याप्यालोकाभाववान् पर्वतो वह्निव्याप्यधूमवांश्चेति ज्ञानीयपक्षविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारता नोपदर्शितोभयसम्बन्धेन कथञ्चिदपि तादृशाभावविशेष्यतानिरूपितप्रकारतया विशिष्टा तादृशज्ञानीयतथाविधालोकप्रकारतायास्तत्र स्वावच्छेदकावच्छिन्नत्वविरहात्। अन्यज्ञानीयतथाविधधूमत्वावच्छिन्नप्रकारतायाश्च स्वनिरूपकज्ञाननिरूपितत्वाभावात्। वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशयीयपक्षविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारता चोक्तोभयसम्बन्धेन तादृशज्ञानीयाऽभावविशेष्यतानिरूपितधूमत्वावच्छिन्नप्रकारताविशिष्टैवातो न तत्सङ्ग्रहः। सम्बन्धघटकदलद्वयप्रयोजनं तु स्फुटमेव। स्वावच्छेदकावच्छिन्नत्वं च स्वावच्छेदकताव्यापकावच्छेदकताकत्वमतो वह्निव्याप्यालोकाभाववान् वह्निव्याप्यधूमवांश्च पर्वत इत्येतादृशज्ञानीयपक्षविशेष्यतानिरूपितधूमप्रकारतायास्तज्ज्ञानीयाभावविशेष्यतानिरूपितालोकनिष्ठप्रकारतावच्छेदकीभूतव्याप्यत्वावच्छिन्नत्वेऽपि न क्षतिः, आलोकत्वसाधारणीं तादृशप्रकारतावच्छेदकतां प्रति तादृशधूमप्रकारतावच्छेदकताया अव्यापकत्वात्, स्वावच्छेदकताव्यापकतावच्छेदकताकत्वघटितोभयसम्बन्धेन तत्र तद्वैशिष्ट्याभावादित्याहुः।

तदप्यभद्रम्। तथासति जातिविशेषत्वादिना यत्राऽऽभावप्रतियोग्यंशे धूमत्वादिकं विशेषणतया ज्ञातं तत्र वह्निव्याप्यधूमवान् पर्वतो जातिविशेषवदभाववांश्चेत्याकारकतादृशज्ञानादनुमित्यनुदयापत्तेः। धूमत्वमात्रवृत्त्यभावविशेष्यतानिरूपितज्ज्ञानीयप्रकारतावच्छेदकतां प्रति पक्षविशेष्यतानिरूपितव्याप्यप्रकारतावच्छेदकताया व्यापकत्वात्। एवं ज्ञानव्यक्तिभेदेन विषयताभेदस्याप्रामाणिकत्वात् वह्निव्याप्यधूमवानित्याकारकनिश्चयीयव्याप्यप्रकारतायाः संशयात्मकज्ञानीयाऽभावविशेष्यतानिरूपितप्रकारताविशिष्टप्रकारत्वाभिन्नत्वात्तादृशप्रकारताविशिष्टाऽन्यप्रकारतैवाऽसिद्धेति न किञ्चिदेतत्।

केचित्तु विरोधानवच्छिन्नसंयोगादिनिष्ठसांसर्गिकविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नप्रकारताकज्ञानत्वमेव निश्चयत्वं संशयीयसंयोगादिनिष्ठसांसर्गिकविषयतायां विरोधावच्छिन्नत्वात्तद्व्यावृत्तिः। निश्चये च क्वचिदपि विरोधस्य संसर्गकोटिनिविष्टतया भानानभ्युपगमात्

दोषः । न च हेतुतावच्छेदकघटितस्य वह्निव्याप्यधूमाभाववद्वृत्तित्वरूपविरोधस्य निवेशे हेतुतावच्छेदकभेदेन परामर्शकारणत्वादिभेद आवश्यकः, वह्निव्याप्यत्वावच्छिन्नाभाववद्वृत्तित्वरूपविरोधानवच्छिन्नत्वमात्रस्य संसर्गविषयतायां निविशे च वह्निव्याप्यधूमवान्न वा पर्वत इत्येतादृशसंशयवारणासम्भवः, तत्र वह्निव्याप्यत्वावच्छिन्नाभावस्य कोटितया तदधिकरणावृत्तित्वरूपविरोधस्याभावादिति वाच्यम् । वह्निव्याप्यप्रतियोगिकाभावावच्छिन्नाधिकरणनिष्ठावच्छेदकतानिरूपिताधेयत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतात्वेन निखिलविरोधनिष्ठावच्छेदकता अनुगमय्य तदनिरूपकत्वस्यैव सांसर्गिकविषयतायां निवेशनानुपपत्त्यभावात् । न चैवं वह्निव्याप्यालोकाऽभावाधिकरणावृत्तित्वावच्छिन्नसंयोगादिसंसर्गकधूमादिनिर्णयाऽसङ्ग्रह इति वाच्यम् । धूमवत्ताज्ञाने आलोकाभाववदवृत्तित्वादेः संसर्गतया भाने मानाभावादित्याहुः । तदप्यसत् । विरोधावच्छिन्नसंयोगादिनिष्ठसांसर्गिकविषयताकत्वस्य निवेशेपि यत्र संशये अभावकोटेरेव संसर्गघटकतया विरोधस्य भानं, न तु धूमादेस्तादृशसंशयवारणासम्भवात् । न च सर्वत्रैव संशये उभयकोटिसंसर्गांशे विरोधो भासत इति वाच्यम् । विरोधावच्छिन्नसंयोगादिनिष्ठसंसर्गताकबुद्धिप्रतिबन्धकविरोधविशिष्टसंयोगादिसंसर्गावच्छिन्नप्रतियोगिताकधूमाद्यभावावगाहिबाधादकालीनसंशये विरोधावच्छिन्नसंयोगादिना धूमभानासम्भवात् । न च तदानीं संशय एव नोत्पद्यते इति वाच्यम् । शुद्धसंयोगविरोधावच्छिन्नविशेषणताभ्यां धूमतदभावकोटिकसंशयोत्पत्तौ बाधकाभावात् । एवं विरोधावच्छिन्नसंयोगादिसांसर्गिकप्रत्यक्षस्य शुद्धसंयोगादिपर्याप्तसांसर्गिकविषयताशालित्वे बाधकाभावः, तादृशविषयतानियामकबाधाभावादिघटितसामग्र्या अपि तदव्यवहितप्राक्काले सत्त्वात् । एवं च संशयस्यापि विरोधावच्छिन्नसंयोगादिनिष्ठसांसर्गिकविषयताशालितयोपदर्शितप्रणाल्यापि संशयव्यावर्तनमशक्यम् । न च शुद्धसंयोगादिपर्याप्तसांसर्गिकविषयताशालिबुद्धिं प्रति विरोधावच्छिन्नसंयोगादिसांसर्गिकबुद्धिसामग्र्याः प्रतिबन्धकत्वं कल्पयित्वा संशयस्य तादृशविषयताशालित्वं वारणीयमिति वाच्यम् । तथाविधानन्तत्सामग्र्यप्रतिबन्धकताकल्पने गौरवात् । एवं विरोधस्य संसर्गतया भानेपि भूयसां विवादः । न च संशयसमुच्चययोर्वैलक्षण्योपपत्तये तत्रावश्यं विरोधविषयता स्वीकरणीया तत्र विरोधानुपस्थितिकालीनसंशये विरोधस्य प्रकारतया भानं न सम्भवति, विशेषणज्ञानविरहात् , अतः परिशेषाद्विरोधस्य संसर्गतया सिद्धिरिति वाच्यम्। विरोधानुपस्थितिदशायां संशयस्याऽप्रामाणिकतया विरोधस्य प्रकारतामुपगम्यैव संशयसमुच्चययोर्वैलक्षण्योपपादनसम्भवात्। न च धूमालोकादिपरामर्शसाधारणनिश्चयत्वनिर्वचनान्यथानुपपत्त्यैव विरोधस्य संसर्गत्वं कल्पयिष्याम इति वाच्यम्। तन्निर्वचनाऽसम्भवेपि हेतुतावच्छेदकभेदेन परामर्शहेतुतासम्भवात् तदनुपपत्तेरकिञ्चित्करत्वात् । न चैवं सति कार्यकारणभावानन्त्यप्रसङ्गेन गौरवमिति लाघवात्तत्सिद्धिरिति वाच्यम् । कार्यकारणभावलाघवाद्विषयतासिद्धेः प्रतिबन्दिसहस्रकवलितत्वादित्यलमसद्ग्रहणेन ।

एवं हेतुतावच्छेदकविशेषघटितधूमाभाववद्विशेष्यतानिरूपितधूमप्रकारित्वप्रकारकनानाविधाप्रामाण्यग्रहाऽभावानां पृथक् पृथक् निवेशानुरोधेनापि धूमत्वालोकत्वादिभेदेन परा-

मर्शहेतुत्वाभेद आवश्यकः। तथाविधनिखिलपरामर्शानामेकरूपेण हेतुत्वे निखिलाप्रामाण्यग्रहाभावानामेकत्र निवेशप्रसङ्गादालोकाभाववद्विशेष्यतानिरूपितालोकप्रकारित्वादिप्रकारकग्रहकालेऽपि धूमादिपरामर्शादनुमित्यनुदयप्रसङ्गात्। न चाप्रामाण्यग्रहाभावानामनुमितिजनकतावच्छेदकत्व एवेयमनुपपत्तिर्न तु तस्य पृथक्कारणत्वमते, इति तन्मतमेवावलम्बनीयमिति वाच्यम्। तन्मतेपि हेतुतावच्छेदकभेदेन परामर्शहेतुताभेदस्यावश्यकत्वात्। अन्यथा धूमाभाववति धूमप्रकारकत्वादिभ्रमत्वग्रहकालेऽपि धूमादिपरामर्शादनुमित्यापत्तिसम्भवात्। तथाहि तन्मते आलोकादिपरामर्शकाले धूमाभाववति धूमप्रकारत्वादिरूपाप्रामाण्यग्रहकाले अनुमित्युत्पादप्रयोजिका याऽन्यविधाऽप्रामाण्यग्रहाभाववद्विव्याप्यत्वावच्छिन्नप्रकारकनिर्णयत्वावच्छिन्नप्रभृतिकारणस्तोमघटितसामग्री सा प्रकृतेऽप्यक्षतैव, आलोकपरामर्शत्वस्य कारणतानवच्छेदकतया तदवच्छिन्नविरहस्य कारणतावच्छेदकावच्छिन्नकारणस्तोमसामग्रीविरहासम्पादकत्वादिति।

अथ धूमप्रकारकत्वादिघटिताऽप्रामाण्यग्रहाणां स्वीयधूमाभाववद्विशेष्यतानिरूपितविशेष्यतावच्छेदकधूमप्रकारितात्वादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावाः अनुमितिजनकतावच्छेदकीभूतव्याप्यप्रकारितायां निवेश्यन्ते, तथाच तावत्तदभावकूटविशिष्टव्याप्यप्रकारताशालिनिर्णयत्वेनैकहेतुताकल्पनेपि नानुपपत्तिः। धूमपरामर्शदशायामालोकाभाववति आलोकप्रकारकत्वादिरूपाप्रामाण्यग्रहसत्त्वेपि तदयिव्याप्यप्रकारितायां स्वीयालोकाभाववद्विशेष्यतानिरूपितत्वप्रकारतानिरूपितविशेष्यतावच्छेदकभूतालोकप्रकारितात्वसम्बन्धेनाऽसत्त्वादुपदर्शिताप्रामाण्यग्रहाभावकूटस्य तत्राक्षतत्वादिति चेन्न। एवंसति तादृशाभावकूटस्य विशेषणविशेष्यभावे विनिगमनाविरहेण अनन्तकार्यकारणभावप्रसङ्गोऽवच्छेदकगौरवं चेति प्रत्येकाभावं निवेश्य धूमपरामर्शत्वादिना हेतुत्वकल्पनमेवोचितम्। न च तावतामभावानां प्रत्येकमभावांशे विशेषणत्वेनाऽपराभावो यदि निवेश्यते, तदैव विपर्यासक्रमेण निवेशो विनिगमनाविरहात्प्रसज्येत, तदेव च न, एकाभावे अपराभावस्य सामानाधिकरण्येन वैशिष्ट्यस्य निवेशनीयतया सम्बन्धगौरवात्, परन्तु सर्वेषामभावानां विशेषणताविशेषसम्बन्धेन प्रकारिताविशेषणत्वमुपगन्तव्यामिति न दोष इति वाच्यम्। प्रकारितानिष्ठैककारणतावच्छेदकतायां तावतामभावानामवच्छेदकत्वं न सम्भवति, तथासति अवच्छेदकतावच्छेदकभेदेनावच्छेदकतायास्तद्भेदेन च कारणताया भेदप्रसङ्गात्। कारणतावच्छेदकताया श्चैक्यस्यैवानुपपत्तेः। अवच्छेदकतायाश्च व्यासज्यवृत्तित्वस्यान्यत्र दूषितत्वात्। तावदभावेषु व्यासज्यवर्तिनीमेकां कारणतावच्छेदकतावच्छेदकतामुपगम्य कारणत्वतदवच्छेदकत्वैक्यप्रतिपादनप्रकारस्य हेयत्वात्, तस्मात्तादृशप्रकारितानिष्ठकारणतावच्छेदकतायामेकोऽभावोऽवच्छेदकस्तन्निष्ठतादृशावच्छेदकतायां च सामानाधिकरण्यसम्बन्धेनापराभावोऽवच्छेदक इत्येवं रीतिरादरणीया। तत्र विपर्यासक्रमेण निवेशमादाय विनिगमनाविरहो ब्रह्मणाप्यशक्यवारणः। न च निखिलानामप्रामाण्यग्रहाणां किञ्चिद्धर्मावच्छिन्नाभाववद्विशेष्यतानिरूपितत्वप्रकारतानिरूपितप्रकारित्वनिष्ठविशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकधर्मावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताक एको ऽभावो

व्याप्यप्रकारितायां निवेश्यत इति न विनिगमनाविरहप्रयुक्तगौरवावकाश इति वाच्यम्। तथासति आलोकाभाववति धूमप्रकारकमिदं ज्ञानमित्येतादृशज्ञानदशायां वह्निव्याप्यधूमवान् पर्वत इत्येतादृशपरामर्शादनुमित्यनुदयप्रसङ्गात्, तदानीं तादृशज्ञानस्योपदर्शितसम्बन्धेन तादृशधूमप्रकारितायां सत्त्वेन तादृसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नाभावस्यासत्त्वात्, तादृशविशेष्यतावच्छेदकतावच्छेदकधर्मे स्वीयप्रकारितानिष्ठविशेष्यतानिरूपितनिरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वप्रकारतानिरूपिताधिकरणप्रकारतानिरूपिताभावप्रकारतानिरूपितप्रतियोगिप्रकारतावच्छेदकत्वमाधिकं निवेश्य तत्रानुमित्युपपादनेऽपि धूमाभाववति आलोकप्रकारकमालोकाभाववति धूमप्रकारकं चेदं ज्ञानमित्येतादृशज्ञानकाले तादृशपरामर्शादनुमित्युपपादनाऽसम्भवात्, धूमत्वस्य तज्ज्ञानीयतथाविधप्रतियोगिप्रकारतावच्छेदकत्वात् तदीयतादृशप्रकारतानिष्ठविशेष्यतावच्छेदकतावच्छेदकत्वाच्चेति। एवं धूमालोकादिपरामर्शानामेकरूपेण हेतुत्वे सिद्धिकाले धूमलिङ्गकेच्छायामपि सत्यां सति आलोकपरामर्शे धूमलिङ्गकपरामर्शं विनैव धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावबलादनुमित्यापत्तिः। न हि एतन्मते धूमलिङ्गकेच्छाविरहविशिष्टसिध्यभावादिना फले जननीये धूमपरामर्शत्वाद्यवच्छिन्नस्य सहकारिता सम्भवति, धूमपरामर्शत्वादीनामनुमितिजनकतावच्छेदकत्वात्, किन्तु जनकतावच्छेदकीभूतव्याप्यवत्तानिर्णयत्वाद्यवच्छिन्नस्य तत्सहकारितया नोक्तानुपपत्तिर्वारयितुं शक्यते, तथाभूतस्यालोकपरामर्शस्यैव सत्त्वात् तस्या धूमलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकपरामर्शत्वेन विशेष्यहेतुत्वकल्पनमावश्यकमेव। अथ धूमलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिध्यभावत्वेन हेतुत्वं न सम्भवति, धूमालोकोभयविषयकसमूहालम्बनपरामर्शजन्यायामालोकलिङ्गकेच्छाधीनानुमितौ व्यभिचारप्रसङ्गात्। अपि तु सामान्यतः पर्वतपक्षकवह्न्यनुमितित्वावच्छिन्नं प्रति तत्तल्लिङ्गकपरामर्शविशिष्टतत्तल्लिङ्गकेच्छाविरहविशिष्टतथाविधसिध्यभावत्वेनैकमेव हेतुत्वं कल्पनीयम्। एवं च केवलं धूमलिङ्गकेच्छासत्त्वेपि धूमलिङ्गकपरामर्शविशिष्टधूमलिङ्गकेच्छारूपउत्तेजकविरहेण विशिष्टाभावसत्त्वान्नानुमित्यापत्तिरिति चेन्न। तल्लिङ्गकेच्छाविरहविशिष्टसिध्यभावजन्यतावच्छेदककोटौ तल्लिङ्गकेच्छाविरहविशिष्टासिद्धिविशिष्टान्यत्वनिवेशेनैवोक्तसमूहालम्बनजन्यानुमितौ व्यभिचारवारणसम्भवात्। तत्तल्लिङ्गकपरामर्शविशिष्टतत्तल्लिङ्गकेच्छाभावकूटं निवेश्य सिद्धेः प्रतिबन्धकत्वकल्पने प्रयोजनविरहात्। न च तत्तल्लिङ्गकानुमित्साविरहविशिष्टसिध्यभावत्वेन हेतुत्वे पक्षतायाः परामर्शस्य च लिङ्गभेदेन कारणताबाहुल्याद्गौरवमिति तदपेक्षया तादृशाभावकूटविशिष्टसिद्ध्यभावत्वेनैकहेतुत्वमेवोचितमिति वाच्यम्। अभावकूटस्यैकत्र निवेशो विशेषणविशेष्यभावविनिगमनाविरहेणानन्त्यप्रसङ्गात्, अवच्छेदकगौरवप्रसङ्गाच्च, लिङ्गभेदेन पक्षतापरामर्शयोः कारणत्वकल्पनस्योचितत्वात्।

एवं हेतुतावच्छेदकविषयतामनिवेश्य साध्यव्याप्यत्वावच्छिन्नप्रकारताशालिनिर्णयत्वेन हेतुत्वे व्यभिचारस्य हेत्वाभासत्वं विलीयेत। निर्धर्मितावच्छेदकव्याप्तिज्ञानस्य व्यभिचारज्ञानाऽप्रतिबध्यतया व्यभिचारग्रहेपि साध्याभाववदवृत्तिमान् पक्ष इत्येतादृशपरामर्शस्य व्याप्त्यंशे निर्धर्मितावच्छेदकस्योत्पत्तौ बाधकाभावेनानुमित्युत्पत्तेरावश्यकत्वात्। यत्तु सधर्मि-

तावच्छेदकस्यापि व्याप्तिज्ञानस्याऽनुमितिहेतुतया तद्विरोधितयैव व्यभिचारस्य हेत्वाभासत्वोपपत्तिरिति । तदसत् । अनुमितिकारणभूतयत्किञ्चिज्ज्ञानविरोधेनैव हेत्वाभासत्वे धूमलिङ्गकानुमितौ तज्जनकीभूतसमूहालम्बनपरामर्शविरोधिनो द्रव्यत्वादिनिष्ठवह्निव्यभिचारस्यापि तथात्वापत्तेः । तथाच यत्प्रत्युक्तो अनुमित्यनुत्पादः स एव हेत्वाभासः । नचैवं व्यभिचारो, भवन्मते तज्ज्ञानसत्त्वेपि हेतुतावच्छेदकाऽनवगाहिपरामर्शोत्पत्त्या अनुमित्युत्पादस्याऽवश्यकतया तज्ज्ञानस्यानुमित्यनुत्पादप्रयोजकत्वविरहादिति । यत्तु साध्यव्यभिचारी हेतुरिति व्यभिचारज्ञानकाले साध्यव्याप्यहेतुव्याप्यवान्पक्ष इत्येतादृशनिर्णयस्य घटानुमितिसामग्र्याश्च सत्त्वे अनुमित्यनुत्पादो व्यभिचारधीप्रयुक्तः, यदि तत्र व्यभिचारधीर्न स्यात्तदा साध्यव्याप्यहेतुमान्पक्ष इत्येतादृशानुमानिकपरामर्शोत्पत्त्या अनुमितिः स्यादेव, सास्तीति च न, तथाविधानुमानिकपरामर्शो जायते तत्र तस्याः विरोधितत्वात् । व्याप्त्यंशे निर्धर्मितावच्छेदकप्रात्यक्षिकपरामर्शस्तु भिन्नविषयकानुमितिसामग्रीरूपप्रतिबन्धकसत्त्वान्नोत्पद्यत इति न तत्रानुमितिरुत्पद्यत इति तत्र तदनुत्पादे व्यभिचारधीरपि प्रयोजिका इति । तदसत् । एतादृशरीत्या वह्निमानित्यादावपि पर्वतादिनिष्ठघटाभावादेरपि दोषत्वप्रसङ्गात् । तथाहि यत्र वह्निव्याप्यव्याप्यवान् पर्वतो घटव्याप्यवान् पर्वत इत्याकारकः परामर्शः, अथ च पर्वतो घटाभाववानित्येतादृशनिर्णयः, भूतलं घटवदित्याद्यनुमितिसामग्री च, तत्र यदि घटाभाववानित्येतादृशानुमानिकनिर्णयो न स्यात् तदा वह्निव्याप्यधूमवान्पर्वतो घटवानित्येतादृशानुमानिकनिर्णयोऽसत्यां पर्वतो वह्निमानित्येतादृशानुमितौ स्यादेव सोऽस्तीति च न तादृशानुमानिकनिर्णय उत्पद्यते, वह्निव्याप्यधूमवान् पर्वत इत्येतादृशप्रात्यक्षिकपरामर्शश्च भिन्नविषयकानुमितिसामग्रीरूपप्रतिबन्धकसत्त्वान्नोत्पद्यत इत्यतस्तत्र न वह्न्यनुमितिरुत्पद्यते, अतस्तत्र तदनुत्पादे घटाभाववान् पर्वत इत्येतादृशनिर्णयस्यापि प्रयोजकत्वमिति, तस्मादेतादृशरीत्या प्रयोजकत्वञ्च हेत्वाभासतासम्पादकमिति ॥

**अत्रेदं समाधीयते।** हेतुतावच्छेदकधर्मान्विशिष्याऽनिवेश्यापि निर्णयत्वं सुवचमिति न तन्निर्वचनान्यथानुपपत्त्या विशेष्य हेतुतावच्छेदकनिवेशः । तथाहि स्वनिष्ठाऽवच्छेदकताकप्रतियोगिताकभेदवत्त्व—व्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वमेव व्याप्यवत्तानिर्णयत्वमनुमित्याद्युपयोगि । स्वनिष्ठाऽवच्छेदकत्वं च स्वावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नं ग्राह्यम् । धूमत्वावच्छिन्नाभावादिकोटिको वह्निव्याप्यधूमादिमत्तासंशयश्च नैतादृशोभयसम्बन्धेन केनापि धर्मेण विशिष्टः धूमत्वान्यधर्मस्य तत्र व्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धेनासत्त्वात्, धूमत्वस्य तादृशसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदसम्बन्धेनासत्त्वात्, तथाहि यदि तादृशसम्बन्धावच्छिन्नधूमत्वनिष्ठप्रतियोगितावच्छेदकताकभेदस्तत्र वर्तेत तदैव तत्र धूमत्वं तादृशभेदसम्बन्धेन स्यात्, न च प्रतियोगितावच्छेदकताघटकसम्बन्धेन धूमत्वरूपप्रतियोगितावच्छेदकविशिष्टे तत्र तादृशभेदो वर्तितुमीष्टे इति । वह्निव्याप्यधूमवान् पर्वत इत्यादिनिर्णयानां च तादृशोभय-

सम्बन्धेन धूमत्वादिरूपहेतुतावच्छेदकधर्मवत्त्वमक्षतमेव । तादृशप्रतियोगितावच्छेदकताघटकसम्बन्धघटकपक्षविशेष्यतानिष्ठस्वावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपितत्वं च स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन साध्यव्याप्यत्वनिष्ठावच्छेदकताऽन्यास्वनिष्ठाऽवच्छेदकताऽन्याऽवच्छेदकताविशिष्टाऽन्या या स्वनिष्ठावच्छेदकता तन्निरूपकीभूतप्रतियोगिप्रकारतानिरूपिताभावप्रकारतानिरूपितत्वम् । यथाश्रुते नीलधूमाभाववान्पर्वतो वह्निव्याप्यधूमवान्पर्वत इत्यादिनिर्णयासङ्ग्रहात्, विशिष्टधूमत्वस्य धूमत्वानतिरेकितया नीलधूमत्वावच्छिन्नाभावस्यापि धूमत्वावच्छिन्नाभावत्वात् । वास्तवस्वावच्छिन्नाभावप्रकारतानिविशे धूमाभावत्वादिना अभावान्तरावगाहिसं शयवारणाऽसम्भवात्, अभावत्वादिना धूमाभावावगाहिज्ञानासङ्ग्रहाच्च, यथाविवक्षिते तु न दोषः । उपदर्शितनिर्णयीयाभावविषयतानिरूपितधूमप्रकारतावच्छेदकतायाः स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन नीलनिष्ठावच्छेदकताविशिष्टत्वात् । तादृशावच्छेदकतायां साध्यव्याप्यत्वनिष्ठावच्छेदकताभिन्नत्वनिवेशाद्यत्र संशये वह्निव्याप्यधूमत्वादिना तादृशधूमादिरभावप्रतियोगितया भाति, तादृशसंशयवारणम्, तत्र धूमत्वादिनिष्ठतादृशावच्छेदकतायाः स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन व्याप्तिनिष्ठावच्छेदकताविशिष्टत्वेपि तदन्याऽवच्छेदकताविशिष्टान्यत्वसत्त्वात् । न चैवं जातिविशेषत्वादिना धूमत्वं यत्राभावविशेषणतापन्नधूमांशे अवगाहमानस्य जातिविशेषत्वावच्छिन्नाभाववान् वह्निव्याप्यधूमवान्पर्वत इत्येतादृशनिर्णस्यासङ्ग्रह इति वाच्यम् । तादृशावच्छेदकतायां निरवच्छिन्नत्वस्यापि निवेशनीयत्वात् । अथैवं वह्निव्याप्यनीलधूमवान्न वा पर्वतो वह्निव्याप्यजातिविशेषवद्वान्न वा पर्वत इत्यादिसंशयसाधारण्यं दुर्वारम् पूर्वज्ञानीयाभावविशेष्यतानिरूपितधूमनिष्ठप्रकारतावच्छेदकतायाः स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन नीलनिष्ठावच्छेदकताविशिष्टतया तज्ज्ञानीयतादृशप्रकारतावच्छेदकतायाः सावच्छिन्नतया तादृशावच्छेदकताविशिष्टान्यनिरवच्छिन्नावच्छेदकताकप्रतियोगिप्रकारतानिरूपिताभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धेन धूमत्वविशिष्टस्य तत्र भेदसत्त्वादिति चेन्न । तादृशोभयसम्बन्धघटकीभूतचरमदलप्रविष्टस्वावच्छिन्नेत्यस्य स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन व्याप्तिनिष्ठावच्छेदकतान्यावच्छेदकताविशिष्टान्यनिरवच्छिन्नस्वनिष्ठावच्छेदकताकप्रकारतेत्यर्थः । एवं च व्याप्तिप्रकारतानिरूपिततादृशप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धेन तादृशसंशये धूमत्वविशिष्टत्वाभावेन न तत्साधारण्यप्रसङ्गः ।

अथैवं वह्निव्याप्यनीलधूमवान्पर्वतः वह्निव्याप्यजातिविशेषवद्वान्पर्वत इत्यादिनिर्णयाऽसङ्ग्रह इति चेत्, का क्षतिः । तादृशनिर्णयानां भवन्मत इवास्मन्मतेपि पृथगेव हेतुतायाः स्वीकरणीयत्वात् । एवमपि स्वरूपतः शुद्धधूमत्वालोकत्वाद्यनन्तधर्मधर्मितावच्छेदककव्याप्यवगाहिपरामर्शानामनुगमसम्भवेन लाघवस्याऽक्षतत्वात् । यत्तु एतादृशनिर्णयत्वस्य हेतुतावच्छेदकावगाहिव्याप्यवत्तानिर्णयसाधारण्यं न घटते तत्रोपदर्शितोभयसम्बन्धेन कस्यचिदपि धर्मस्य वैशिष्ट्यस्यासत्त्वादिति, तत् अनुगुणमेव, यतो हेतुतावच्छेदकानवगाहिज्ञानस्यानुमितिजनकत्वे व्यभिचारस्य हेत्वाभासता न स्यात्, इदानीं तु तादृशज्ञानस्यानुमितिजनकत्वाभावात् हेतुतावच्छेदकावगाहिज्ञानस्य च व्यभिचारज्ञानप्रतिवध्यतया व्यभिचारस्य हेत्वाभासता-

ऽनायासेनैवोपपन्नेति ।

एवमप्रामाण्यग्रहाभावनिवेशानुरोधेनापि न विशिष्य हेतुतावच्छेदकनिवेशः। धूमप्रकारकत्वालोकप्रकारकत्वादिघटितनानाविधाऽप्रामाण्यग्रहाणामनुगतरूपावच्छिन्नप्रतियोगिताकैकाभावस्यैव निवेशसम्भवात्। तथाहि निखिलाऽप्रामाण्यप्रकारताः स्वावच्छिन्नाभाववद्विशेष्यकत्वावच्छिन्नत्वप्रकारतानिरूपितत्व-स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टप्रकारित्वप्रकारतात्वेनानुगमय्य स्वीयतादृशप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टा या व्याप्यत्वावच्छिन्नप्रकारता तन्निरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिर्णयत्वेनैव परामर्शस्य हेतुत्वोपगमात्, वह्निव्याप्यधूमवान्पर्वत इत्येतादृशपरामर्शदशायां धूमाभाववति धूमप्रकारकमित्येतादृशाऽप्रामाण्यग्रहसत्त्वे तादृशपरामर्शीयव्याप्यप्रकारतायां नोपदर्शितसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावो वर्त्तते तत्रोपदर्शितोभयसम्बन्धेन धूमत्वविशिष्टा या तादृशाऽप्रामाण्यज्ञानीयधूमप्रकारित्वप्रकारता तदवच्छेदकतावच्छेदकीभूतधूमत्वावच्छिन्नत्वसत्त्वात्, अतो न तत्रानुमितिप्रसङ्गः। आलोकाभाववति आलोकप्रकारकं आलोकाभाववति धूमप्रकारकमित्यादिग्रहदशायां च न तादृशपरामर्शादनुमित्यनुपपत्तिः, तादृशपरामर्शीयधूमप्रकारतायां आलोकाभाववति आलोकप्रकारकमित्येतादृशज्ञानीयप्रकारित्वप्रकारितानिरूपितावच्छेदकतावच्छेदकीभूतालोकत्वावच्छिन्नत्वविरहात्। आलोकाभाववति धूमप्रकारकमित्येतादृशज्ञानीयधूमप्रकारित्वप्रकारतावच्छेदकतावच्छेदकावच्छिन्नत्वसत्त्वेऽपि तादृशधूमप्रकारित्वप्रकारतायाः उपदर्शितोभयसम्बन्धेन केनापि धर्मेणाऽविशिष्टत्वात्। स्वावच्छिन्नाभाववद्विशेष्यकत्वावच्छिन्नत्वप्रकारतानिरूपितत्वं च स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन साध्यव्याप्यत्वनिष्ठावच्छेदकताभिन्नावच्छेदकताविशिष्टं यत्तदन्यस्वनिष्ठावच्छेदकताकप्रतियोगिनिष्ठप्रकारतासम्बन्धावच्छिन्नप्रकारतानिरूपिताऽभावप्रकारतानिरूपिताधिकरणप्रकारतानिरूपितविशेष्यत्वप्रकारतानिरूपितावच्छिन्नत्वप्रकारतानिरूपितत्वम्। यथाश्रुते नीलधूमाभाववति धूमप्रकारकमित्येतादृशज्ञानीयधूमप्रकारित्वविषयताया अप्युपदर्शितोभयसम्बन्धेन धूमत्वादिविशिष्टत्वात्तादृशज्ञानकाले धूमादिपरामर्शादनुमित्यनुदयापत्तेः। इदानीं तु तादृशज्ञानीयधूमत्वादिनिष्ठप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकतायाः स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन नीलादिनिष्ठावच्छेदकताविशिष्टत्वात्तादृशसम्बन्धेनावच्छेदकताविशिष्टतदन्यस्वनिष्ठावच्छेदकताकप्रकारताघटितोपदर्शितसम्बन्धेन तादृशज्ञानीयप्रकारित्वविषयतायां न धूमत्वादिविशिष्टत्वमिति नानुपपत्तिः। भेदप्रतियोगितावच्छेदकीभूतावच्छेदकतायां साध्यव्याप्यत्वनिष्ठावच्छेदकताभिन्नत्वनिवेशाद्वह्निव्याप्यधूमाभाववति वह्निव्याप्यधूमप्रकारकमित्यतादृशज्ञानीयप्रकारित्वसङ्ग्रहः। एवं सति वह्निव्याप्यधूमाभाववति धूमप्रकारकमित्येतादृशज्ञानीयप्रकारताया अपि उपदर्शितोभयसम्बन्धेन धूमत्वादिविशिष्टत्वात्तादृशज्ञानकालेऽनुमित्यनुदयापत्तिः तादृशज्ञानस्य नीलधूमाभाववति धूमप्रकारकमित्येतादृशज्ञानसमशीलतयाऽप्रामाण्यज्ञानात्मकतया इष्टापत्तेरयोगादिति चेत्।

तादृशस्थले अनुमित्युत्पादस्य प्रामाणिकत्वे स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वेत्यत्र स्वावच्छिन्नाऽवच्छेदकतायां साध्यव्याप्यत्वावच्छिन्नत्वमपि निवेशनीयम् । व्याप्यत्वाविषयकानां धूमाभाववति धूमप्रकारकमित्याद्याकारकाऽप्रामाण्यग्रहाणां च पृथगेवाभावो निवेशनीयः । तत्र च प्रतियोगितावच्छेदकीभूतावच्छेदकतायां साध्यव्याप्यत्वनिष्ठावच्छेदकताभिन्नत्वमनिवेश्य सामान्यतोऽवच्छेदकताविशिष्टान्यत्वं स्वनिष्ठावच्छेदकतायां निवेशनीयम् । स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकेत्यत्रापि अवच्छेदकतायां साध्यव्याप्यत्वावच्छिन्नत्वं न निवेशनीयमिति जातिविशेषवदभाववति धूमप्रकारकमित्येतादृशज्ञानकाले धूमादिपरामर्शादनुमित्युपपत्तये स्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वमपि निवेशनीयम् । वह्निव्याप्यनीलधूमवान् पर्वत इत्याकारकपरामर्शान्नीलधूमाभाववति नीलधूमप्रकारकमित्येतादृशाप्रामाण्यग्रहसत्त्वे वह्निव्याप्यजातिविशेषवदभाववति जातिविशेषवत्प्रकारकमित्येतादृशाप्रामाण्यग्रहसत्त्वे अनुमित्यापत्तिरिति तु न शङ्कनीयम् । पूर्वोपदर्शितवह्निव्याप्यनीलधूमवान् पर्वतो वह्निव्याप्यजातिविशेषवद्वान्न वा पर्वत इति संशयादनुमित्यापत्तिवारणवर्त्मनैवाऽत्राप्यनुमित्यापत्तिवारणसम्भवात् ।

स्यादेतत् एवमप्युपदर्शितोभयसम्बन्धेनधर्मं विशिष्टा या स्वीयप्रकारित्वप्रकारता तदवच्छेदकतावच्छेदकधर्मावच्छिन्नत्वसम्बन्धेनाप्रामाण्यग्रहाभावस्य व्याप्यप्रकारतायां निवेशे प्रथमधूमादिपरामर्शे इदं ज्ञानं धूमाभाववति धूमप्रकारकमित्याद्याकाराप्रामाण्यग्रहसत्त्वे धूमादिपरामर्शान्तरादपि अनुमित्यनुदयप्रसङ्गो दुर्वार एव तदीयव्याप्यप्रकारतायामपि उपदर्शितसम्बन्धेन तादृशाऽप्रामाण्यग्रहसत्त्वात् , अतो विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभावस्यैव परामर्शांशे विशेषणत्वमुपगन्तव्यम्, तथाच हेतुतावच्छेदकनिवेशनमावश्यकमेव। न च तादृशप्रकारित्वप्रकारतावच्छेदकधर्मावच्छिन्नत्वतादृशप्रकारित्वप्रकारतानिरूपितविशेष्यताश्रयज्ञाननिरूपितत्वोभयसम्बन्धेनाऽप्रामाण्यग्रहस्याभावो निवेशनीयः, उक्तस्थले च द्वितीयधूमपरामर्शीयधूमप्रकारतायाः तादृशाऽप्रामाण्यज्ञानीयतथाविधप्रकारित्वप्रकारतावच्छेदकतावाच्छिन्नत्वसत्त्वेपि स्वीयप्रकारित्वप्रकारतानिरूपितविशेष्यताश्रयप्रथमपरामर्शनिरूपितत्वाभावात् उक्तोभयसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावोऽक्षत एवेति नानुपपत्तिरिति वाच्यम् । एवमपि यत्र प्रथमधूमपरामर्शानन्तरमिदं ज्ञानं धूमाभाववति धूमप्रकारकं भाविज्ञानमालोकाभाववति आलोकप्रकारकमित्याकारकोभयपरामर्शविशेष्यकसमूहालम्बनाप्रामाण्यग्रहः तदुत्तरं च द्वितीयो धूमपरामर्शस्तदनन्तरमनुमित्यनुपपत्तेर्दुर्वारत्वात् , तत्र द्वितीयपरामर्शीयधूमप्रकारतायास्तादृशाप्रामाण्यज्ञानीयतथाविधधूमप्रकारित्वप्रकारतावच्छेदकतावच्छेदकधूमत्वावच्छिन्नत्वात् तदीयतथाविधालोकप्रकारित्वप्रकारतानिरूपितविशेष्यताश्रयद्वितीयपरामर्शनिरूपितत्वाच्च, उक्तोभयसम्बन्धेन तादृशाप्रामाण्यग्रहस्यैव सत्त्वात् । यदि च स्वावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितविशेष्यताश्रयज्ञाननिरूपितत्वोभयसम्बन्धेन ज्ञानीयतथाविधप्रकारित्वप्रकारताया एवाभावो व्याप्यप्रकारतायां निवेश्यते उपदर्शितसमूहालम्बनाप्रामाण्यज्ञानीययत्प्रकारित्वप्रकारतावच्छेदकतावच्छेकावच्छिन्नत्वं द्वितीयपरामर्शीयधूमप्रकारतायां न तन्निरूपितविशेष्यता-

श्रयज्ञाननिरूपितत्वमित्युक्तोभयसम्बन्धेन तत्र ज्ञानयितथाविधप्रकारित्वप्रकारताऽभावोऽक्षत एवेति नानुमित्यनुपपत्तिरिति विभाव्यते, तथापि ज्ञानव्यक्तिभेदेन विषयताभेदानभ्युपगमेन द्वितीयपरामर्शीयधूमप्रकारतायाः तादृशोभयसम्बन्धेन तादृशाऽप्रामाण्यज्ञानीयप्रकारित्वप्रकारताविशिष्टा या प्रथमपरामर्शीयधूमप्रकारता तदभिन्नत्वान्न तादृशोभयसम्बन्धावच्छिन्नप्रतियोगिताकतथाविधप्रकारित्वप्रकारताभाव इति न निस्तार इति चेत्। मैवम्। प्रथमपरामर्शेऽप्रामाण्यग्रहे तत्समानाकारकात्परामर्शान्तरादपि तावदनुमितिर्नेष्यत एव यावन्न तस्य विनाश इति न काचिदप्यनुपपत्तिः।

अथ यत्र वह्निव्याप्यधूमवान् पर्वतः वह्निव्याप्यालोकवान्न वा पर्वत इत्येतादृशसमूहालम्बनानन्तरं धूमाभाववति धूमप्रकारकमित्याकारकाप्रामाण्यग्रहस्तत्रानुमित्यापत्तिर्दुर्वारैव तादृशपरामर्शस्योपदर्शितसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभावविशिष्टालोकप्रकारताशालित्वात् निरुक्तस्वावच्छिन्नप्रतियोगिताकभेदवत्त्वव्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन धूमविशिष्टतया निरुक्तस्य तादृशोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वरूपनिर्णयत्वस्यापि तत्र सत्त्वादिति चेत्।

सत्यम्। तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाऽप्रामाण्यग्रहाभावविशिष्टव्याप्यप्रकारतावत्त्वतथाविधनिर्णयत्वयोः स्वातन्त्र्येण निवेशे भवत्येवेयमनुपपत्तिः, तदेव न, परन्तूपदर्शितोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वरूपनिर्णयत्वशरीरस्य सम्बन्धविधया घटकीभूता या व्याप्तिप्रकारता तत्रैव तादृशसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभावो निवेश्यते, एवंचोक्तस्थले तादृशाप्रामाण्यग्रहाभावविशिष्टतथाविधस्वावच्छिन्नप्रकारताघटितोभयसम्बन्धेन न कस्यापि धर्मस्य वैशिष्ट्यं तादृशसमूहालम्बनपरामर्शेऽस्ति धूमत्वावच्छिन्नप्रकारतायां निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभावविशिष्टत्वाभावात्। स्वपदेन धूमत्वोपादानस्य स्वावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वरूपस्य स्वावच्छिन्नप्रतियोगिताकभेदवत्त्वदलस्य चालोकत्वनिरूपितस्य तादृशपरामर्शेऽसत्त्वेन स्वपदेनालोकत्वोपादानस्याप्यसम्भवादतो न तत्रानुमित्यापत्तिरिति।

एवं सिद्धिकाले धूमलिङ्गकेच्छासत्त्वे आलोकपरामर्शकाले धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावबलादनुमित्यापत्तिरिति धूमपरामर्शत्वादिना हेतुताकल्पनमावश्यकमिति यदुक्तम्, तदपि न, धूमलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकेच्छाविरहसहकृतसिद्ध्यभावत्वादिना न पक्षत्वम्, अपि तु सामान्यतः पर्वतत्वावच्छिन्नविशेष्यकवह्निविधेयकानुमितित्वावच्छिन्नं प्रति वह्निव्याप्यवत्तानिर्णयविशिष्टपर्वतत्वावच्छिन्नविशेष्यतानिरूपितत्वावच्छिन्नवह्निविधेयताप्रकारताकानुमितिगोचरेच्छाविरहसहकृतसिद्ध्यभावत्वादिना एकमेव हेतुत्वं कल्प्यते। एतादृशपरामर्शवैशिष्ट्यं च स्वीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तिप्रकारतानिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नलिङ्गकत्वप्रकारकत्व–स्वसामानाधिकरण्योभयसम्बन्धेन, धूमत्वादिमात्रावच्छिन्नलिङ्गकत्वप्रकारिका इच्छाश्च नैतादृशोभयसम्बन्धेनालोकत्वाद्यवच्छिन्नलिङ्गकपरामर्शविशिष्टा इति न तथाविधेच्छाकाले सिद्धिसत्त्वे आलोकत्वाद्यवच्छिन्नलिङ्गकपरामर्शादनुमित्यापत्तिः तादृश-

हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वे सतीत्यनेनापि विशेषणाद् वह्निमान् गगनादित्यादौ नातिव्याप्तिः । ननु तथाप्युभयत्वमुभयत्रैव पर्याप्तन्न त्वेकत्रेति सिद्धान्तादरे घटत्ववान् घटपटोभयत्वादित्यादौ पर्याप्तिसम्बन्धेन हेतुतायामतिव्याप्तिः ।

---

परामर्शविशिष्टेच्छारूपोत्तेजकविरहादिति धूमपरामर्शत्वादिना हेतुताकल्पनं विनैवोपपत्तिरिति । न चैकत्र द्वयमिति रीत्या एकविशिष्टे अपरवैशिष्ट्यमिति रीत्या वा धूमलिङ्गकत्वालोकलिङ्गकत्वोभयादिप्रकारकानुमित्साविशिष्टसिद्धिकाले तथाविधैकमात्रलिङ्गकपरामर्शादनुमित्यापत्तिः, तादृशेच्छाया अपि उपदर्शितसम्बन्धेन तथाविधपरामर्शविशिष्टत्वादिति विशिष्य धूमलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमान्यलिङ्गकत्वप्रकारत्वानिरूपितानुमितिनिष्ठविशेष्यताकेच्छाविरहविशिष्टसिद्ध्यभावत्वादिना हेतुत्वकल्पनमावश्यकमिति वाच्यम् । स्वावच्छिन्नलिङ्गकत्वप्रकारतानिरूपितत्व–स्वभिन्नधर्मावच्छिन्नलिङ्गकत्वप्रकारतानिरूपितत्वोभयसंबन्धेन किञ्चिद्धर्मविशिष्टान्या या स्वीयव्याप्तिप्रकारतानिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नलिङ्गकत्वप्रकारतानिरूपितानुमितिनिष्ठविशेष्यता तन्निरूपकत्व–स्वसामानाधिकरण्योभयसम्बन्धेनैव परामर्शवैशिष्ट्यस्येच्छायां निवेशनीयतयोपदर्शितेच्छानिरूपितानुमितिनिष्ठविशेष्यतायाश्चोपदर्शितोभयसम्बन्धेन धूमत्वादिविशिष्टतया तादृशेच्छायामुक्तसम्बन्धेन परामर्शवैशिष्ट्याभावेनापत्त्यभावादिति । एवं साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानहेतुतामते हेतुतावच्छेदकभेदेन अनुमितिसामग्रीप्रतिबन्धकताभेदाभावप्रयुक्तलाघवमक्षुण्णमेवेत्यलम् ।

**सम्बन्धित्वे सतीति** । तेन तादात्म्येन गगनादीनां द्रव्यत्वव्याप्यत्वोपपत्तिः । इदमुपलक्षणम् । वृत्त्यनियामकसंयोगमात्रस्याभावप्रतियोगितावच्छेदकत्वे पृथिवीत्वादिव्यापकत्वोपपत्तिश्चेति । **नातिव्याप्तिरिति** । हेतुतावच्छेदकीभूतसमवायसम्बन्धेन सम्बन्धित्वाभावाद्, गगनस्येति शेषः । **तथापि**–तथानिवेशेपि । **सिद्धान्तादरे इति** । इदं च पर्याप्तेरव्याप्यवृत्तित्वमभिप्रेत्य । तथा चोभयत्वमुभयमात्रवृत्तिधर्मावच्छिन्नानुयोगिताकवृत्तितावन्न तु प्रत्येकमात्रवृत्तिधर्मावच्छिन्नानुयोगिताकवृत्तितावदित्यर्थः । उभयत्वमुभयवृत्ति न त्वेकवृत्तीति यथाश्रुते उभयस्य प्रत्येकानतिरेकादुभयवृत्तित्वे प्रत्येकवृत्तित्वानपायादसङ्गत्यापत्तेः ।

(१)नन्वेवं घटत्वाभाववत्पटनिरूपिततत्तद्व्यक्तित्वावच्छिन्ननिरूपकताकवृत्तित्वाभावसत्त्वेपि

---

(१) केचित्तु ननु उभयत्वनिष्ठवृत्तिताया उभयनिरूपितत्वे प्रत्येकनिरूपितत्वस्यावश्यकतया साध्याभाववन्निरूपितवृत्तित्वस्योभयत्वरूपहेतोः सत्त्वात्कुतोऽतिव्याप्तिरिति चेन्न । सर्वत्ववान् समुदायत्वादित्यादौ सर्वत्वरूपसाध्यस्य पर्याप्तिसम्बन्धेन केवलान्वयित्वेपि तस्यैकत्वावच्छेदेनाभावसत्त्वान्निरवच्छिन्नसाध्याभावाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिरतः साध्यभेदेन लक्षणस्य नानात्वेन व्यासज्यवृत्तिसाध्यके तु निरवच्छिन्नाधिकरणत्वमनिवेश्य साध्याभावाधिकरणतावच्छेदकावच्छिन्ननिरूपकताकवृत्तित्वाभावस्य समुदायत्वहेतौ सत्त्वादव्याप्तिविरहादिति । न च केवलान्वयित्वात्तस्याऽलक्ष्यत्वमिति वाच्यम् । कपिसंयोगाभाववान् सत्त्वादित्यादौ अन्येत्वित्यादिना लक्ष्यत्वस्वीकारादत एव केवलान्वयिन्यभावादति मूलव्याख्यायां वाच्यं ज्ञेयत्वादिति

घटत्वाभाववति हेतुतावच्छेदकपर्याप्त्याख्यसम्बन्धेन हेतोरवृत्तेः । घटो न घटपटोभयमितिवद् घटत्वाभाववान्न घटपटोभयमिति प्रतीतेरिति चेन्न ।

---

घटपटोभयत्वावच्छिन्ननिरूपकताकवृत्तित्वस्य घटपटोभयत्वे सत्त्वेनातिव्याप्त्यभिधानमसङ्गतम् । एवमेतद्वृक्षत्ववान् कपिसंयोगादित्यत्र साध्याभाववद्वृक्षान्तरनिरूपितवृत्तित्वाभावस्य मूलावच्छेदेन हेतौ सत्त्वादतिव्याप्तिरतः प्रतियोगिव्यधिकरणत्वेन वृत्तित्वाभावो विशेषणीयः, तथा च नोभयत्वहेतावतिव्याप्तिः, घटपटोभयत्वस्योभयत्वावच्छेदेन घटवृत्तितया तादृशवृत्तित्वाभावे प्रतियोगिवैय्यधिकरण्यविरहात् । एतेन वृत्तित्वाभावश्च निरवच्छिन्नत्वेन विशेषणीय इति परास्तम् । घटनिष्ठैकत्वावच्छेदेनैव तादृशवृत्तित्वाभावसत्त्वादिति चेन्न ।

एकधर्मावच्छिन्नाधेयताया ऐक्यमते ह्रदनिरूपितसंयोगसम्बन्धावच्छिन्नप्रमेयत्वावच्छिन्नवृत्तिताया धूमे सत्त्वाद् वह्निमान् धूमादित्यादावव्याप्तिरतः साध्याभाववन्मात्रवृत्तिधर्मावच्छिन्ननिरूपकताकवृत्तित्वाभावो विवक्षणीयः, तथा च प्रमेयत्वावच्छिन्नवृत्तितानिरूपितनिरूपकतायां द्रव्यमात्रनिष्ठायां द्रव्यत्वावच्छिन्नायां वन्ह्यभाववन्मात्रवृत्तिधर्मावच्छिन्नत्वविरहात् ह्रदत्वादेस्तादृशनिरूपकतान्यूनवृत्तित्वेन तादृशनिरूपकतानवच्छेदकत्वात्तामादायाव्याप्तिविरहात् । इत्थं च घटत्ववान् घटपटोभयत्वादित्यत्रातिव्याप्तिर्दुर्वारैव, घटपटोभयत्वनिष्ठवृत्तितानिरूपितनिरूपकतायां साध्याभाववत्पटमात्रवृत्तिपटत्वावच्छिन्नत्वविरहात् । न चैकधर्मावच्छिन्नाधेयताया ऐक्यमते ह्रदत्वादेरपि वन्ह्यभाववन्मात्रवृत्तित्वं दुर्घटं तस्य वह्निमत्पर्वतादौ प्रमेयत्वादिना वृत्तेः साध्याभाववन्मात्रवृत्तिधर्मावच्छिन्नत्वाऽप्रसिद्धेः, ऐक्यानभ्युपगमे तु यथाश्रुतलक्षणे एव निरुक्ताव्याप्तेरभावाद्वृत्तितायां तादृशविशेषणस्याऽनावश्यकत्वेनाऽतिव्याप्त्यभिधानासङ्गतितादवस्थ्यमिति वाच्यम् । साध्याभाववन्निष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावस्यैव व्याप्तित्वात् । तावतैव द्रव्यत्वप्रमेयत्वावच्छिन्नवृत्तितामादायाव्याप्तिवारणसम्भवात् सामान्यधर्मावच्छिन्नाधेयताया ऐक्यानभ्युपगमस्य निर्बीजत्वात् । तथाच घटत्वाभाववत्पटनिष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावस्य घटपटोभयत्वहेतौ सत्त्वेन नासङ्गतिरिति । न च द्रव्यं सत्त्वादित्यत्रातिव्याप्तिः सत्तारूपहेतुनिष्ठाधेयतानिरूपितनिरूपकतायाः यावत्सन्निष्ठायाः सत्त्वेनैवावच्छिन्नतया साध्याभाववन्निष्ठैकत्वावच्छिन्ननिरूपकताकवृत्तित्वाभावस्य सत्तायामक्षतत्वादिति वाच्यम् । सत्तात्वावच्छिन्नाधेयतानिरूपितनिरूपकतायाः सन्निष्ठत्वेऽपि गुणवृत्तित्वविशिष्टसत्तात्वावच्छिन्नवृत्तितानिरूपितनिरूपकताया गुणमात्रनिष्ठाया गुणनिष्ठैकत्वावच्छिन्ननिरूपकताकतादृशवृत्तितामादायातिव्याप्तिवारणसम्भवादिति ।

**पर्याप्त्याख्यसम्बन्धेनेति** । ननु पर्याप्तौ मानाभावः । न च पर्याप्त्याख्यसम्बन्धानुपगमे केवलतार्णवह्निमति अतार्णवह्निमति वा तार्णातार्णोभयं नास्तीति प्रतीतिः प्रमा न स्यात् प्रतियोगितावच्छेदकताघटकसमवायसम्बन्धेनोभयत्वविशिष्टस्य केवलतार्णवह्नेर्विरो-

---

व्याप्यवृत्तिसाध्यककेवलान्वयिन्यव्याप्तिरिति ग्रन्थकृद् वक्ष्यति । इत्थं च घटत्ववान् घटपटोभयत्वादित्यादौ घटत्वाभावाधिकरणतावच्छेदकं यदेकत्वादिकं तदवच्छिन्ननिरूपकतानिरूपितवृत्तित्वाभावस्योभयत्वहेतौ सत्त्वादतिव्याप्तिसङ्गतिरित्याहुः ।

तादृशसिद्धान्तादरे हेतुतावच्छेदकसम्बन्धेन साध्यसमानाधिकरणत्वे सतीत्यनेनापि विशेषणीयत्वात् । अत एव 'निविशतां वा वृत्तिमत्वं साध्यसामानाधिकरण्यं वेति' केवलान्वयिग्रन्थे दीधितिकृतः । तद्विशेषणाद्वह्निमान् गगनादित्यादौ नातिव्याप्तिः ।

---

धिनः, सत्त्वादिति वाच्यम् । विशिष्टाधिकरणतया सार्धं विशिष्टाभावस्येव, उभयत्वावच्छिन्नाधिकरणतया सार्धमेवोभयत्वावच्छिन्नाभावस्य विरोधित्वोपगमात् ।

अथैवमपि एको न द्वाविति प्रतीतेः प्रामाण्यनिर्वाहाय पर्याप्तिसम्बन्ध आवश्यकः । अन्यथा समवायेन एकस्मिन्नपि तदभावस्य तत्रासत्त्वे तत्प्रामाण्यस्य ब्रह्मणोऽप्यशक्यत्वात्, इत्थं च पर्याप्तिसम्बन्धेन द्वित्वस्य प्रत्येकमभावादेको द्वाविति प्रत्ययस्य, एको न द्वाविति प्रत्ययस्य च नापत्त्यनुपपत्ती । यद्यपि समुदायपर्याप्तत्वे तदेकदेशप्रत्येकपर्याप्तत्वमनपवादं समुदायस्य एकदेशानतिरिक्तत्वादिति द्वित्वादेः प्रत्येकपर्याप्तत्वं दुर्वारम्, तथापि समुदायपर्याप्तस्य द्वित्वादेः प्रत्येकपर्याप्तिसत्त्वेप्येकधर्मावच्छिन्नेऽपर्याप्तेः इति चेत् । सत्यम् । समवायेनैव द्वित्वस्य वृत्तौ उभयमात्रवृत्तिधर्मस्यावच्छेदकत्वोपगमेनैकत्वादेस्तदभावेन तत्प्रामाण्यसौलभ्यादिति । मैवम् । समवायेनैको द्वित्ववानितिप्रतीतेरभ्युपगमेन एको द्वाविति प्रतीतेश्चानभ्युपगमेन पर्याप्तेरपि प्रतीयमानत्वात् । पर्याप्तिसमवायान्यतराविषयकत्वमादायैव द्वौ द्वित्ववानितिप्रतीत्योर्वैलक्षण्यसम्भवादन्यथा तयोरवैलक्षण्यापत्तेरिति केचित् ।

वस्तुतस्तु आकाशौ इत्यादिवाक्यस्याऽप्रामाण्यानुरोधेन पर्याप्तिरभ्युपेया तदभ्युपगम एव प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेन द्वित्वादेरन्वयबोधस्य शक्याभ्युपगमतया तदप्रामाण्यसम्भवात् । प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टसमवायेन द्वित्वादेरन्वयोऽभ्युपेय इति शङ्का तु नालोचनीया जगति समवायस्यैकतया प्रकृत्यर्थतावच्छेदकाव्याप्यत्वात् । प्रकृत्यर्थतावच्छेदकवैशिष्ट्यं द्वित्वे एव निविष्टं न समवाय इति नानुपपत्तिरिति चेत् । प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टद्वित्वादेरेव लाघवाद् द्वित्वसम्बन्धतोपेयताम् अलं समवायस्य निवेशेन तावतैव पर्याप्तेः संसर्गता निर्व्यूढा पर्याप्तेर्द्वित्वानतिरेकात्, तदुक्तम्—अयमेकोघट इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः पर्याप्तिरिति, अतिरिक्ते मानाभावाद् गौरवाच्चेति ।

यत्तु द्वित्वादेः समवायसम्बन्धावच्छिन्नवृत्तेरेवोभयवृत्तिधर्मावच्छिन्नत्वमुपगम्यतां तावतैवऽऽकाशावित्यादिप्रतीतेर्भ्रमत्वनिर्वाहात् । द्वित्वस्य समवायेनाऽऽकाशे सत्त्वेऽपि उभयवृत्तिधर्मावच्छेदेनाऽसत्त्वादिति । तन्न निरवच्छिन्नतदभाववति तत्प्रकारकज्ञानस्यैव भ्रमपदार्थतयाऽऽकाशादौ निरवच्छिन्नद्वित्वाभावाऽसत्त्वात्, अन्यथा कपिसंयोगी वृक्ष इत्यादिज्ञानस्य भ्रमत्वापत्तेः । एतेन द्वौ द्वित्ववानिति प्रतीत्योर्वैलक्षण्यस्य स्वकपोलमात्रकल्पिततया पर्याप्त्यसाधकत्वात्, एको द्वाविति प्रतीतेर्द्वित्वादिप्रकारतानिरूपितधर्मितावच्छेदकतासम्बन्धेन ज्ञानं प्रति एकत्वादिभेदस्य हेतुतयाऽपि निर्वाहाच्च पर्याप्त्याख्यसम्बन्धे मानाभाव इति निरस्तमिति दिक् ।

केचित्तु निरुक्तसाध्याभावत्वविशिष्टनिरूपिता या विशेषणतासम्बन्धेन यथोक्तसम्बन्धेन वा निरवच्छिन्नाधिकरणता तदाश्रयव्यक्त्यवर्त्तमानं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाधिकरणत्वसामान्यं तद्धर्मवत्त्वं विवक्षितम् । धूमवान् वह्नेरित्यादौ पर्वतनिष्ठवह्न्यधिकरणताव्यक्तेर्धूमाभावाधिकरणाऽवृत्तित्वेऽपि अयोगोलकनिष्ठवह्न्यधिकरणताव्यक्तेरतथात्वान्नातिव्याप्तिरित्याहुः ।

---

**इदमत्रावधेयम् । जगदीश**मते पर्याप्तिर्व्याप्यवृत्तिः । तेषामयमाशयः । उभयत्वं प्रत्येकमात्रवृत्तिधर्मावच्छेदेन प्रत्येकं न वर्त्तते किन्तूभयत्वावच्छेदेनैवेति यत्किञ्चिदेतत्, व्याप्यवृतेरवच्छेदकानङ्गीकारात्, तथाच प्रत्येकमपि द्वित्वसत्त्वेन तत्सामान्याभावो नास्तीति । अत एव प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वमिति नियमः । तथाच यः प्रत्येकमात्रवृत्तिधर्मावच्छेदेन तदभाववान् स उभयमात्रवृत्तिधर्मावच्छेदेन तदभाववानिति फलितार्थः । अन्यथा इमौ न द्वाविति प्रतीत्यापत्तेः । नन्वयं न द्वाविति प्रतीतिः प्रमा न स्याच्छुद्धपर्य्याप्तिसम्बन्धेन द्वित्ववद्भेदस्याऽसत्त्वात्, पर्याप्तेर्व्याप्यवृत्तितया इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्त्वप्रसिद्धः । न चेदन्त्वावच्छेद्यपर्याप्तिसम्बन्धावच्छिन्नप्रतियोगिताकद्वित्वात्यन्ताभाव एव तत्प्रतीतिविषय इति वाच्यम् । अनुयोगिवाचकपदोत्तरसप्तम्यभावेन तत्राऽत्यन्ताभावबोधनाऽसम्भवादिति चेन्न । पर्याप्तेर्व्याप्यवृत्तित्ववादिमते नञाऽत्यन्ताभावबोधनेऽनुयोगिवाचकपदोत्तरसप्तम्यपधेति नियमसङ्कोचेन तत्रात्यन्ताभावबोधनेन सर्वसामञ्जस्यादिति ।

**गदाधरमते**ऽव्याप्यवृत्तिः । तेषामयमाशयः । पर्याप्तेरव्याप्यवृत्तितया तेन सम्बन्धेन सम्बन्धिनोऽप्यव्याप्यवृत्तित्वमावश्यकम् । वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्याऽत्यन्तमसम्भावितत्वादिति वक्ष्यमाणत्वात्, तथा चोभयत्वं प्रत्येकस्मिन्नपि उभयत्वावच्छेदेनैव वर्त्तते न तु प्रत्येकवृत्तिधर्मावच्छेदेनेति अयं न द्वाविति प्रतीतेः प्रमात्वमुपपद्यते, इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन द्वित्ववद्भेदवति द्वित्ववद्भेदप्रकारकत्वात् । ननु समुदायस्य प्रत्येकानतिरिक्ततया प्रत्येकावृत्तित्वस्य समुदायावृत्तित्वप्रयोजकतया इमौ न द्वाविति प्रतीतिः प्रमा स्यादिति चेन्न । इदन्त्वावच्छेद्यपर्याप्तिसम्बन्धेन द्वित्ववद्भेदसत्त्वेऽपि द्वित्वावच्छेद्यपर्याप्तिसम्बन्धेन द्वित्ववद्भेदविरहेण तत्प्रतीतेर्द्वित्ववद्भेदाभाववति द्वित्ववद्भेदप्रकारकत्वेन न प्रमात्वमिति सर्वं चतुरस्रम् ।

केचित्त्विति । निरुक्तसाध्याभावत्वविशिष्टनिरूपितेति । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नाऽधेयतानिरूपितेत्यर्थः । अभावाऽभावस्या ऽतिरिक्तत्वमते **विशेषणताविशेषसम्बन्धेने**ति । तदनतिरिक्तत्वमते तु **यथोक्तसम्बन्धेनेति** । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याऽभाववृत्तिसाध्यसामान्यीयप्रतियोगितावच्छेदकसम्बन्धेनेत्यर्थः । तृतीयार्थो ऽवच्छिन्न-

अन्ये तु हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नस्वाधिकरणताश्रयवृत्ति यन्निरवच्छिन्नाधिकरणत्वं तदवृत्तिनिरुक्तसाध्याभावत्वविशिष्टनिरूपितयथोक्तसम्बन्धावच्छिन्नाधिकरणतात्वकत्वमिति विशेषणविशेष्यभावव्यत्यासे तात्पर्यम्, स्वपदं हेतुपरम्, इत्थं च कपिसंयोगाभाववान् सत्त्वात् कपिसंयोगिभिन्नं गुणत्वादित्यादावपि नाव्याप्तिरित्याहुरिति संक्षपः ।

इति श्रीमथुरानाथतर्कवागीशविरचिते व्याप्तिपञ्चकरहस्ये प्रथमलक्षणम् ।

---

त्वम् । यत्पदं हेतुतावच्छेदकपरम् । तथाच वह्निमान्धूमादित्यादौ वह्न्यभावाधिकरणजलह्रदादिनिरूपितवृत्तित्वाभावस्य धूमत्वावच्छिन्नाधिकरणतायां सत्वाल्लक्षणसमन्वयः । सामान्यपदस्य फलमाह **धूमवान्वह्नेरित्यादाविति** । तथाच धूमाभावाधिकरणाऽयोगोलकनिरूपितवृत्तित्वाऽभावस्य पर्वतनिष्ठवह्न्यधिकरणतायां सत्त्वादतिव्याप्तिरित्यर्थः । तथाच हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाऽधिकरणतात्वव्यापकतावच्छेदकं साध्याभावाऽधिकरणानिरूपितवृत्तित्वाभावत्वं तद्धर्मवत्वमिति फलितम् । तेन वह्निमद्गगनादित्यादौ हेत्वधिकरणाऽप्रसिद्ध्यैव नातिव्याप्तिः । एवं द्रव्यं विशिष्टसत्वात् सत्तावान्द्रव्यत्वादित्यादौ च नाव्याप्तिः । व्यासज्यवृत्तिधर्मावच्छिन्नाऽधिकरणताया अव्यासज्यवृत्तित्वमते घटत्ववान्घटपटोभयत्वादित्यादौ च नातिव्याप्ति रिति ध्येयम् ।

**अन्येत्विति । तात्पर्यमिति** । अत्र हेत्वधिकरणवृत्तिनिरवच्छिन्नाधिकरणतानिरूपितवृत्तित्वाऽभावः साध्याभावाधिकरणतात्वे **केचित्तु** मते साध्याभावाऽधिकरणनिरूपितवृत्तित्वाऽभावो हेत्वधिकरणतासामान्ये विवक्षित इति भावः । इदमुपलक्षणम् । केचित्तु मते साध्याभावाधिकरणतायां निरवच्छिन्नत्वं निवेशितम् । अत्र तु हेत्वधिकरणनिष्ठाऽधिकरणताया मित्यपि बोध्यम् ।

तथाच साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नयथोक्तसम्बन्धावच्छिन्नाऽधेयतानिरूपिताऽधिकरणतात्ववृत्तियोऽभावस्तदीयवृत्तित्वनिष्ठप्रतियोगितानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकतानिरूपिताऽवच्छेदकताश्रयत्वमिति फलितार्थः । अभावप्रतीत्याकारश्च हेत्वधिकरणवृत्तिनिरवच्छिन्नाऽधिकरणतानिरूपितवृत्तित्वं नास्तीति । **इत्थं चेति** । हेत्वधिकरणनिष्ठाऽधिकरणतायां निरवच्छिन्नत्वनिवेशे चेत्यर्थः । कपिसंयोगाभाववान्सत्त्वादित्यत्र कपिसंयोगिभिन्नं गुणत्वादित्यत्र च साध्याभावाऽधिकरणतायां निरवच्छिन्नत्वाऽप्रसिद्धावपि क्रमेण हेत्वधिकरणद्रव्यगुणनिष्ठाया द्रव्यत्वगुणत्वप्रमेयत्वाद्यधिकरणता निरवच्छिन्नायां तस्यां साध्याभावाऽधिकरणतात्वमवृत्त्येवेति तत्र तत्र लक्षणसमन्वयः ।

नन्वत्र तादृशहेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तितानवच्छेदकनिरुक्तसाध्याभावत्वकत्वमित्युक्तौ को दोष इति चेन्न । वह्निमान्धूमादित्यादौ हेत्वधिकरणपर्वतनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तिताया वन्ह्यभावे सत्त्वादव्याप्तिवारणाय तादृशवृत्तितायां साध्याभाववृत्तिसाध्य-

सामान्यीयप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वस्याऽवश्यं निवेशनीयतया द्रव्यत्वाभावान् जातित्वादित्यादौ हेत्वधिकरणजातिनिरूपितसमवासम्बन्धावच्छिन्नवृत्तित्वाऽप्रसिद्ध्याऽव्याप्तिः स्यादिति ! न च तथापि हेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तित्वाभाववन्निरुक्तसाध्याऽभावत्वावच्छिन्नाऽधिकरणताकत्वमेव व्याप्ति रस्त्विति वाच्यम् । अधिकरणभेदेना ऽधिकरणताया भिन्नत्वमते जलादिनिष्ठाधिकरणताव्यक्ते र्हेतुमत्यवृत्त्या धूमवान्वह्नेरित्यादावतिव्याप्तेः । यद्यपि तादृशहेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तिताऽनवच्छेदकनिरुक्तसाध्याऽभावत्वावच्छिन्नाऽधिकरणतात्वकत्वमेव वक्तुं मुचितं तथापि धूमाभावाधिकरणतात्वस्य वह्निमद्वृत्तितया अतिप्रसक्तत्वेनाऽवच्छेदकतया धूमवान्वह्नेरित्यत्रैवाऽतिव्याप्तितादवस्थ्य मत एतावान्प्रयासः ।



लक्षणान्तरमाह साध्यवद्भिन्नेति । साध्यवद्भिन्नो यः साध्याभाववान् तदवृत्तित्वमर्थः, कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकाऽव्याप्ति-वारणाय साध्यवद्भिन्नेति साध्याभाववतो विशेषणमिति प्राञ्चः । तदसत् । साध्याभाववदित्यस्य व्यर्थतापत्तेः, साध्यवद्भिन्नावृत्तित्वमित्यस्यैव सम्यक्त्वात् ।

---

**साध्यवद्भिन्नो यः साध्याभाववानिति ।** अभेदसम्बन्धावच्छिन्नसाध्यवद्भिन्न-निष्ठाऽवच्छेदकतानिरूपकसाध्याभाववन्निष्ठावच्छेदकताकवृत्तित्वाभाव इत्यर्थः । साध्याभा-ववन्निष्ठाऽवच्छेदकतायां साध्यवद्भिन्ननिष्ठाऽवच्छेदकतानिरूपकत्वनिवेशस्य प्रयोजनमाह—**अव्याप्यवृत्तिसाध्यकेति** । अव्याप्यवृत्तित्वं पूर्वोक्तं वेदितव्यम् । **अव्याप्तिवार-णायेति** । कपिसंयोगाभावाधिकरणमूलावच्छिन्नवृक्षनिरूपितवृत्तितामादायाव्याप्तिवारणा-येत्यर्थः । तथा च हेत्वधिकरणीभूतवृक्षस्य साध्यवद्भिन्नत्वाभावान्न दोषः । न च साध्या-भावाधिकरणतायां निरवच्छिन्नत्वनिवेशेनैव सामञ्जस्येऽलं साध्यवद्भिन्नत्वनिवेशेनेति वाच्यम् । तस्यापि लक्षणान्तरत्वात् । वस्तुतस्तु एतल्लक्षणकर्तृमते विरुद्धधर्माध्यासस्याऽभावभेदकत्वेन कपिसंयोगाऽभावोऽधिकरणभेदेन भिन्न इति साध्यवद्भिन्नत्वविशेषणेनाऽव्याप्तिवारणं सुकर-मिति विशेषप्रदर्शनाय तन्नोक्तम् ।

**साध्यवद्भिन्नेति । साध्याभाववतो विशेषणमितीति** । अभेदसम्बन्धेनेति शेषः । तथाच साध्यवद्भिन्नश्चासौ साध्याभाववांश्चेति कर्मधारयसमासः । कर्मधारयसमा-सापेक्षया तत्पुरुषादिसमासस्य जघन्यत्वम् । निपाताऽतिरिक्तनामार्थयोरभेदाऽतिरिक्त-सम्बन्धेनाऽन्वयस्याऽव्युत्पन्नतया तत्पुरुषादिसमासे लक्षणास्वीकारं विना शाब्दबोधाऽसम्भ-वात् । कर्मधारये तु विनैव लक्षणामन्वयबोधसम्भवादिति अधिकरणभेदेनाऽभावभेदमता-नाश्रयणं चेति प्राचामाशयः । इदमपि गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमङ्गीकृत्य । तेन साध्यवद्भिन्नवृत्तित्वत्वापेक्षया साध्यवद्भिन्नसाध्याभाववद्वृत्तितात्वस्य गुरुतया तदवच्छिन्ना-भावाऽप्रसिद्धावऽपि न क्षतिः ।

निराकरोति **तदसदिति** । तत्र हेतुमाह **साध्याभाववदित्यस्य व्यर्थतापत्तेरिति** । अत्रायमाशयः । लक्षणस्य इतरभेदानुमितिप्रयोजनकतया साध्यवद्भिन्नसाध्याभाववदवृत्तित्वं स्वेतराभिन्नं साध्यवद्भिन्नसाध्याभाववदवृत्तित्वादितीतरभेदसाधने व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धिप्रसङ्गः, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वत्वरूपहेतुतावच्छेदकस्य साध्यवद्भिन्न-साध्याभाववदवृत्तित्वत्वसामानाधिकरण्यम्, अथ च प्रकृतसाध्यीभूतेतरभेदव्याप्यतावच्छेदकं यद्धर्मान्तरं साध्यवद्भिन्नावृत्तित्वत्वं तद्घटितत्वेन व्याप्यतानवच्छेदकत्वात्, स्वसमानाधि-करणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तराऽघटितत्वस्यैव व्याप्यतावच्छेदकत्वात् । स्वं हेतुतावच्छेदकम् ।

एवं तद्वैयर्थ्ये तद्घटितधर्मस्य व्याप्यतावच्छेदकत्वाऽसम्भवादितरभेदानुमानाऽसम्भवेना-ऽनुमितिलक्षणघटकत्वात्तदुपोद्घातसंगत्या **केचित्तु मते** तन्निरूपणाऽसम्भव इत्यपिबोध्यम्।

न च स्वसमानाधिकरणं यत्प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरं तद्घटितत्वमेव

यदि वैय्यर्थ्यं तदा नीलधूमत्वादेर्वैय्यर्थ्याऽसम्भवः नीलधूमत्वस्य धूमत्वाऽनतिरेकात्, धूमत्वे तादृशधर्मान्तरत्वविरहात्। न चाऽन्तरपदेन स्वाविषयकप्रतीतिविषयत्वं विवक्षणीयम्, एवं च स्वसमानाधिकरणो यः स्वाविषयकप्रतीतिविषयीभूतो धर्मः अथ च प्रकृतसाध्यव्याप्यतावच्छेदको धर्मस्तद्वद्वित्वमेव तदिति वाच्यम्। एवमपि स्वपदेन केवलधूमत्वमादाय तद्दोषतादवस्थ्यात्। स्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताशून्ययत्किञ्चित्प्रतीतिविषयतावच्छेदकं स्वाश्रयसमानाधिकरणं यत्तदवच्छिन्नविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वरूपं वैय्यर्थ्यं यद्युच्यते, तदा शुद्धधूमत्वपर्याप्तनिरूपकतावच्छेदकतायाः नीलादिसहितधूमत्वपर्याप्तनिरूपकतावच्छेदकताभिन्नत्वेन दोषविरहेऽपि महानसीयवह्निसाध्यकमहानसीयधूमहेतावपि वैय्यर्थ्यापत्तिः, तथाहि स्वपदग्राह्यं यद् महानसीयत्वधूमत्वगतद्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिताशून्या या धूमो महानसीय इत्याकारिका प्रतीतिः तादृशप्रतीतिविषयतावच्छेदकं यद्धूमत्वविशिष्टमहानसीयत्वं तदवच्छिन्नविषयिताशून्यत्वं महानसीयधूमविषयप्रतीतौ धूमत्वविशिष्टमहानसीयत्वस्य महानसीयत्वाऽनतिरेकात्, तथाच धूमत्वविशिष्टमहानसीयत्वावच्छिन्नविषयिताशून्यप्रतीतिविषयताऽनवच्छेदकत्वं महानसीयधूमत्वेऽक्षतमेवेत्यतः स्वावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकनिरूपकताकविषयिताशून्यप्रतीतिविषयितानिरूपकताकनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यत्प्रकृतसाध्यव्याप्यतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपं तदेव विशिष्टान्तरं वाच्यम्। अत्र प्रकृतसाध्यव्याप्यतावच्छेदकत्वानुपादाने तत्रैव तद्दोषतादवस्थ्यम् धूमत्वे विशिष्टान्तरत्वसम्भवात्। एवं तादृशविषयिताशून्यप्रतीतिविषयितानिरूपकतावच्छेदकतायां निरवच्छिन्नत्वानुपादाने महानसं महानसीयवह्निमत् महानसीयधूमवत इत्यत्र महानसीयधूमस्य हेतुतावच्छेदकस्य वैय्यर्थ्यापत्तेः स्वपदग्राह्यं यन्महानसीयत्वधूमत्वगतद्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिताशून्या या धूमत्वेन महानसीयधूमावगाहिप्रतीतिस्तादृशविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यन्महानसीयधूमधूमत्वगतद्वित्वं तदेव साध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयिताशून्यप्रतीतिविषयतानिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य निरुक्तत्रित्वेऽनपायात्।

घटितत्वं च तदविषयकप्रतीत्यविषयत्वम्। न च स्वसमानाधिकरणेत्यादिनियमे मानाभाव इति वाच्यम्। प्राचीनमते विशेषव्याप्तौ 'अथवा यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्य'मित्यादिना साध्यसामानाधिकरण्यावच्छेदकहेतुतावच्छेदकस्यैव व्याप्तित्वाद् गुरोः हेतुतावच्छेदकस्य तादृशसामानाधिकरण्यावच्छेदकत्वाभावाद् व्याप्यत्वानुपपत्तेरेव मानत्वात्, नवीनमते च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वघटितव्याप्तेर्गुरुभूतहेतुतावच्छेदकधर्मघटिततादृशावच्छेदकत्वत्वावच्छिन्नाऽभावोऽप्रसिद्धेश्च मानत्वादिति ध्येयम्।

अथात्र अखण्डाभावघटकतया कथं न सार्थक्यं, तथाहि साध्यवद्भिन्नसाध्याभाववद्वृत्तित्वाभावो न तादृशवृत्तित्वनिष्ठप्रतियोगिताकाऽभावमात्रं वृत्तित्वविशेषाभावमादाय व्यभिचारिण्यतिप्रसंगात्, किन्तु तादृशवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावः, तथाच साध्यवद्भिन्ननिष्ठाऽभेदसम्बन्धावच्छिन्नाऽवच्छेदकताभिन्ना सती साध्याभावनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ च ईदृशाऽवच्छेदकताद्वयनिरूपिका या धर्मिनिष्ठावच्छेदकता तन्निरूपिता या वृत्तितात्वावच्छिन्ना प्रतियोगिता तन्निरूपकोऽभावः, साध्यवद्भिन्नाऽवृत्तित्वमित्यस्य च साध्यवद्भिन्ननिष्ठाऽभेदसम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता अथ च साध्यवद्भिन्ननिष्ठाऽभेदसम्बन्धावच्छिन्नाऽवच्छेदकतानिरूपिका या धर्मिनिष्ठावच्छेदकता तन्निरूपितवृत्तित्वनिष्ठप्रतियोगिताकाऽभाव इत्येव पर्यवसितार्थः । एवं च प्रतियोगितावच्छेदककोटौ साध्याभावनिवेशाऽनिवेशाभ्यामनयोरभावयोर्भेदात् कथं तादृशधर्मान्तरघटितत्वरूपं वैय्यर्थ्यमिति चेन्न । कर्मधारयपक्षे साध्याभावनिष्ठाऽवच्छेदकतायां न्यूनवारकपर्याप्तिनिवेशे प्रयोजनविरहेण साध्यवद्भिन्ननिष्ठाऽवच्छेदकताभिन्ना सती साध्याभावनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिता अथ केवलसाध्यवद्भिन्ननिष्ठावच्छेदकतानिरूपिता या धर्मिनिष्ठाऽवच्छेदकता इत्यादिक्रमेणैव निवेशात् । एवं च ईदृशाऽभावत्वस्या द्विविधाभावसाधारणतया तादृशधर्मान्तरघटितत्वसम्भवेन वैयर्थ्यसंगतेरिति ध्येयम् ।

केचित्तु व्यभिचारस्याऽभावो ह्यव्यभिचरितत्वशब्दप्रतिपाद्यः, तथाचाऽव्यावर्त्तकसाध्याभावघटितस्य व्यभिचारपदार्थत्वसम्भवे एव तदभावस्याऽव्यभिचारपदार्थत्वं सम्भवति तदेव तु न व्यभिचारशरीरे साध्याभावांशस्य व्यर्थत्वेन तद्घटितस्य व्यभिचारपदार्थत्वाऽसम्भवात् । यौगिकत्वसम्भवे पारिभाषाऽनुसरणस्याऽन्याय्यत्वादिति वदन्ति ।

न्यायरत्नकृतस्तु साध्याभावांशस्याव्याप्तिवारकत्वरूपसार्थकत्वाभाव एव वैय्यर्थ्यपदेन विवक्षित इति वदन्ति । **साध्यवद्भिन्नाऽवृत्तित्वमित्यस्यैव सम्यक्त्वादिति** साध्याभावनिष्ठाऽवच्छेदकताया न्यूनवारकपर्याप्तिनिवेशे प्रयोजनविरहादित्यर्थः ।

ननु साध्यवद्भिन्नश्चासौ साध्याभावश्चेति साध्यवद्भिन्नसाध्याभावः स विद्यते यत्राऽसौ साध्यवद्भिन्नसाध्याभाववान् तदवृत्तित्वमिति रीत्या साध्यवद्भिन्नस्य साध्याभावेन कर्मधारयसमासपक्षेऽपि साध्याभावपदस्य सार्थक्यसंभवे तत्परित्यागाऽनौचित्यम्, तथाहि—साध्यवद्भिन्नेत्यत्र साध्यवत्त्वं स्वप्रतियोगिकत्व–स्वसामानाधिकरण्योभयसम्बन्धेन, तेन सम्बन्धान्तरावच्छिन्नाभावमादाय न दोषः, समवायादिना वह्न्यभावस्य तादृशोभयसम्बन्धेन साध्यववत्तया लक्षणाऽघटकत्वादिति प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं न देयमित्यपि लाघवम् । न च सम्बन्धघटकीभूतस्वप्रतियोगिकत्वनिवेशो व्यर्थ इति वाच्यम् । तथासति घटाभावस्य सामानाधिकरण्यसम्बन्धेन साध्यवत्तया तदन्यत्वस्य वह्निसामान्याभावे एव सत्त्वेन साध्याभावपदवैयर्थ्यापत्तेः । स्वप्रतियोगिकत्वनिवेशे च घटाभावस्यापि साध्यवदन्यतया हेतोस्तद्वृत्तित्वादसम्भववारणाय साध्याभावपदसार्थक्यम् । न च विशिष्टसत्तावान् जातेरित्यादौ विशिष्टस्याऽनतिरिक्ततया साध्याभावे साध्यवदन्यत्वाभावेनाऽतिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवदन्यत्वस्य विव-

नव्यास्तु साध्यवद्भिन्ने साध्याभावः साध्यवद्भिन्नसाध्याभावस्तद्व-द्वृत्तित्वमिति सप्तमीतत्पुरुषोत्तरं मतुप्प्रत्ययः, तथाच साध्यवद्भिन्नवृत्तिर्यः साध्याभावस्तद्वद्वृत्तित्वमर्थः ।

---

क्षितत्वात् । रूपवत्ता च स्ववृत्तिनिरूपकताकाधिकरणतावद्वृत्तित्व—स्ववृत्तिप्रतियोगिताकत्वो-भयसम्बन्धेन इति चेन्न । सामानाधिकरण्यनिवेशस्याधिक्येन गौरवात्, साध्यवद्भिन्नप-दस्य तादृशार्थकत्वाभावेन लक्षणापत्तेश्च । स्वप्रतियोगिकत्वं सम्बन्धांशे निवेश्य साध्याभावपद-सार्थक्यमिति प्रक्षालनाद्धीतिन्यायेन द्वयोरनिवेश इति ध्येयम् ।

यत्तु स्वप्रतियोगिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन साध्यवदन्याऽभावनिवेशे महान-सीयवह्न्यभावस्य लक्षणघटकतापत्तिः महानसीयवह्न्यभावस्य यादृशसाध्यप्रतियोगिकत्वं न तत्स-मानाधिकरण्यमित्युक्तोभयसम्बन्धेन साध्यवद्भिन्नत्वात् । न च स्वाश्रयप्रतियोगिकत्वस्वाश्रय-सामानाधिकरण्योभयसम्बन्धेन साध्यतावच्छेदकवदन्यत्वं निवशनीयम्, तथा च न तस्य लक्षणघटकतेति वाच्यम् । तथासति साध्यवदन्याभावस्यापि लक्षणाघटकतया मूलस्वारस्य-भङ्गः स्यात् इति । तन्न । साध्यसामानाधिकरण्यावच्छेदकस्वप्रतियोगिकत्वसंसर्गतया निवेशे उक्तदोषाभावादिति । तच्चिन्त्यम् । संयोगेन द्रव्यस्याऽव्याप्यवृत्तितापक्षे निरुक्तसम्बन्धेन सा-ध्यवदन्याऽभावाऽप्रसिद्ध्याऽपत्तेः ।

एवमत्र सम्बन्धघटकस्वसामानाधिकरण्यघटकीभूतवृत्तित्वं यदि येन केनचित्सम्बन्धेनो-च्यते तदा वह्न्यभावस्य कालिकसम्बन्धेन साध्यविशिष्टत्वादव्याप्तिरतः स्वरूपसम्बन्धेनैव तन्निवेश्यम्, तथाच पर्वतत्वात्मकाऽभावमादाय साध्यपदसार्थक्यसम्भवे स्वप्रतियोगिकत्वं व्यर्थम् । न च स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन साध्यवद्वृत्तित्वं वक्तव्यं तत्र पर्वतत्वाद्यात्मकाभावस्य तादृशसम्बन्धेन साध्यवत्तया तमादाय न साध्यपदसार्थक्यमिति स्वप्रतियोगिकत्वानुसरणमिति वाच्यम् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाऽऽकाशाभावा-ऽभावस्य विशेषणताविशेषसम्बन्धेन साध्यतायामात्मत्वहेतावव्याप्तेः, तत्र स्वप्रतियोगि-मत्ताग्रहविरोधिताघटककालिकसम्बन्धेन साध्यवद्वृत्तित्वाऽप्रसिध्या गगनाऽभावात्मकसाध्याभा-वस्य लक्षणघटकत्वात् । न च स्वप्रतियोगिकत्वं त्यक्त्वा विशेषणताविशेषावच्छिन्नाभावस्य साध्यवत्त्वं वक्तव्यम्, तथाच तादृशसम्बन्धेनाऽऽकाशाभावस्य साध्यवत्त्वेऽपि आत्मवृत्तित्वाव-च्छिन्नाभावस्य साध्यप्रतियोगिकतया तमादायैव लक्षणसमन्वय इति वाच्यम् । तथा सति पर्वते स्वरूपसम्बन्धेनाऽवृत्तेः स्वरूपसम्बन्धेनाऽभावस्य साध्यप्रतियोगिकस्य लाघवात्पर्वतत्वस्वरू-पस्य निरुक्तसाध्यवद्भिन्नस्याऽधिकरणे हेतोर्वृत्तेस्तत्राव्याप्तेर्दुर्वारत्वात् । यद्यपि निरुक्तसाध्यव-द्भिन्नस्य विशेषणताविशेषसम्बन्धावच्छिन्नाधिकरणत्वविवक्षया तद्दोषवारणम्, तथापि तान-तैव पर्वतत्वाद्यात्मकाभावमादायाऽव्याप्तिवारणसम्भवात्साध्याभावपदवैय्यर्थ्यापत्तेरिति ध्येयम् ।

कर्मधारयसमासं निराकृत्य सप्तमीतत्पुरुषसमासं समर्थ्य व्याचष्टे **नव्यास्त्विति** । तथाच साध्यवद्भिन्नवृत्तिर्यः साध्याभाव इति । आधेयत्वं सप्तम्यर्थः, लक्षणया प्रकृत्यर्थो वा । इदन्त्वर्थकथनमात्रम् । तथाच साध्यवद्भिन्नस्य साध्याभावः साध्यवद्भिन्नसाध्याभाव इति

एवं च साध्यवद्भिन्नवृत्तीत्यनुक्तौ संयोगी द्रव्यत्वादित्यादावव्याप्तिः, संयोगाभाववति द्रव्ये द्रव्यत्वस्य वृत्तेः, तदुपादाने च संयोगवद्भिन्नवृत्तिः संयोगाभावो गुणादिवृत्तिः संयोगाभाव एव, अधिकरणभेदेनाऽभावभेदात् तद्वद्वृत्तित्वान्नाव्याप्तिः ।

---

आधेयतात्मकसम्बन्धबोधकषष्ठ्यन्तेन समासा षष्ठ्यर्थ आधेयत्वमिति स्थितिः तेन कारकसप्तम्यतिरिक्तसप्तम्यन्तेन समं समासस्याऽनुशासनाऽसिद्धत्वेऽपि न क्षतिः ।

साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणस्य प्रयोजनमाह **एवंचेति**। न च द्रव्ये तत्तत्संयोगाभावसत्त्वेऽपि व्याप्यवृत्तिगगनसंयोगस्याऽभावविरहात्संयोगसामान्याभाववत्वं न द्रव्यस्येति कुतोऽव्याप्तिरिति वाच्यम् । अधोमूले वृक्षे गगनसंयोगः, उपरि शाखायां वृक्षे गगनसंयोगः इत्यादिप्रतीतेर्मूलावच्छिन्नगगनसंयोगस्याऽधोदेशावच्छिन्नतया शाखाद्यवच्छिन्नस्य चोपरिदेशावच्छिन्नतया मूलशाखाद्यवच्छिन्नगगनसंयोगस्य भेद एव स्वीकरणीयः, अन्यथोपरि मूले वृक्षे गगनसंयोग इति प्रतीत्यापत्तेः । तथा चोक्तप्रतीत्याऽन्यत्र दर्शितरीत्या कार्यकारणभावलाघवानुरोधेन च गगनसंयोगस्याऽप्यव्याप्यवृत्तितया द्रव्ये संयोगसामान्याभावसिद्धेरित्यन्यत्र विस्तरः ।

ननु तथापि कपिसंयोगी एतद्वृक्षत्वादित्यत्र साध्यवद्भिन्ने गुणे द्रव्यवृत्तिकपिसंयोगाभावस्य कालिकेन सत्त्वादव्याप्तिः, दैशिकविशेषणतया साध्यवद्भिन्नवृत्तित्वनिवेशे च घटत्वात्यन्ताभाववान् पटत्वादित्यत्राऽव्याप्तिः । स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसम्बन्धेन तन्निवेशे च कपिसंयोगादिसाध्यके कालिकसम्बन्धे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवृक्षवृत्तिकपिसंयोगाभावाभावरूपप्रतियोगिमत्ताग्रहविरोधितानियामकत्वसत्त्वादव्याप्तिरिति चेन्न । साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन तन्निवेशात् । तदर्थश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसम्बन्धेनेति ।

अत्र साध्यनिष्ठाऽवच्छेदकतायां साध्यतावच्छेदकावच्छिन्नत्वाऽनिवेशे महानसीयवह्निमान् धूमादित्यत्रातिव्याप्तिः । वह्निमद्भिन्नह्रदवृत्तिमहानसीयवन्ह्यभाववद्वृत्तित्वाभावस्य हेतौ सत्त्वात् ।

न च तन्निवेशोऽपि तद्दोषतादवस्थ्यमिति वाच्यम् । न्यूनवारकपर्याप्तिनिवेशे तात्पर्यात् ।

एवमितरवारकपर्याप्त्यनिवेशे संयोगी द्रव्यत्वादित्यत्राऽव्याप्तिः । घटसंयोगवद्भिन्नवृत्तिसंयोगाभाववद्वृत्तित्वस्य हेतौ सत्त्वात् । यदि च तत्र संयोगवद्भिन्नवृत्तिसंयोगाभाववद्वृत्तित्वस्य हेतौ विरहान्नाव्याप्तिरित्युच्यते, तदा संयोगप्रतियोगित्वान्यतरसम्बन्धेन वह्निसाध्यकमहानसमहानसीयवह्न्यभावान्यतरत्वहेतौ महानसीयवह्निमद्भिन्नवृत्तिवह्न्यभाववद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरतस्तन्निवेशः ।

तथाच साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति-अवच्छेदकताकप्रतियोगिताकभेदवद्वृत्तित्वमर्थः । रूपवृत्तित्वं चाऽवच्छेदकतायां स्वावच्छे-

न च तथापि साध्यवद्भिन्नाऽवृत्तित्वमित्येवाऽस्तु किं साध्याभाववदित्यनेनेति वाच्यम्। यथोक्तलक्षणे तस्याऽप्रवेशेन वैयर्थ्याभावात्, तस्यापि लक्षणान्तरत्वात्। नच तथापि साध्यवद्भिन्नवृत्तिर्यस्तद्वद्वृत्तित्वमित्येवास्तु किं साध्याभावपदेनेति वाच्यम्। तादृशद्रव्यत्वादिमद्वृत्तित्वादसम्भवापत्तेः। साध्याभावेत्यत्र साध्यपदमप्यत एव, द्रव्यत्वादेरपि द्रव्यत्वाभावाभावत्वात्, भावरूपाऽभावस्य चाऽधिकरणभेदेन भेदाभावात्।

---

दकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन।

एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपि तत्र निवेश्यम्, अन्यथा यत्किञ्चित्सम्बन्धेन साध्यवतो भेदनिवेशे वह्निमान् धूमादित्यत्र समवायेन वह्निमतो भेदस्य पर्वतादौ सत्त्वादव्याप्तिः। संयोगेन द्रव्यमात्रस्याऽव्याप्यवृत्तितया वह्न्यभावस्य तत्र सत्त्वात्। सम्बन्धसामान्येन साध्यवतो भेदनिवेशे धूमवान् वह्नेरित्यत्र सम्बन्धसामान्येन धूमवतो भेदवद्वृत्तिधूमाभावस्याऽयोगोलकादावसत्त्वादतिव्याप्तिरिति ध्येयम्।

नव्यमतेन तत्पुरुषाश्रयणेऽपि कथं न साध्याभाववदित्यस्य वैयर्थ्यमित्याशङ्कते **नचेति। वैयर्थ्याऽभावादिति।** नव्यमते साध्यवद्भिन्नस्याऽभेदेन साध्याभाववतानाऽन्वयः किन्तु आधेयतासम्बन्धेन साध्याभावेन सहाऽन्वयस्तथाच साध्यवद्भिन्नवृत्तित्वनिष्ठाऽवच्छेदकतानिरूपकसाध्याभावनिष्ठाऽवच्छेदकतानिरूपकवृत्तित्वनिष्ठप्रतियोगिताकाभावस्य लक्षणत्वम्। तत्रापि वक्ष्यमाणदोषवारणाय साध्याभावनिष्ठाऽवच्छेदकतायां न्यूनवारकपर्याप्तिनिवेशस्यावश्यकतया तादृशधर्मान्तरघटितत्वाभावान्न वैयर्थ्यमित्यवधेयम्। **लक्षणान्तरत्वादिति।** लक्षणस्य लक्षणान्तराऽदूषकत्वादित्यर्थः। शङ्कते **नचेति। तथापि**—तत्पुरुषाश्रयणेऽपि। **असम्भवाऽपत्तेरिति।** वह्निमान् धूमादित्यादौ वह्निमद्भिन्नह्रदवृत्तिद्रव्यत्वाधिकरणपर्वतनिरूपितवृत्तिताया धूमे सत्त्वादसम्भववारणाय साध्याभावपदमिति भावः। न च साध्यवद्भिन्नवृत्तित्वं साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन निविष्टं तथाच कथं द्रव्यत्वाधिकरणतामादायाऽसम्भवः, द्रव्यत्वस्य तादृशविरोधितानियामकीभूतस्वरूपसम्बन्धेनाऽवृत्तित्वादिति वाच्यम्। आदिना प्रमेयत्वादेः परिग्रहः।

ननु तथापि विषयितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभावस्य साध्यत्वे पटत्वहेतौ साध्यवद्भिन्ने ज्ञाने तादृशविरोधितानियामकीभूतविषयितासम्बन्धेन वृत्तिर्यस्तस्य हेत्वधिकरणेऽसत्वात्, एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावे साध्ये आत्मत्वहेतौ च तादृशविरोधितानियामककालिकसम्बन्धेन साध्यवद्भिन्नजन्यवृत्तेः कस्यापि हेत्वधिकरणेऽभावात् लक्षणसमन्वयात्कथमसंभव इति चेन्न। विषयित्वकालिकादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य तत्सम्बन्धावच्छिन्नाऽधिकरणत्वाभावरूपसम्बन्धस्यैव साध्यवत्ताग्रहविरोधितानियामकतया प्रमेयत्वादिकमादायाऽसम्भवप्रसङ्गादिति।

**अतएवेति।** असम्भववारणायैवेत्यर्थः। तथाच साध्यवद्भिन्नवृत्तिर्योऽभावस्तद्वद्वृत्तित्व-

ननु तथापि घटत्वघटाऽऽकाशसंयोगान्यतराभाववान् गगनत्वादित्यादौ

---

मित्युक्तौ वह्निमान् धूमादित्यादौ वह्निमद्भिन्नह्रदवृत्तिर्यो द्रव्यत्वाभावाभावो द्रव्यत्वरूपः प्रमेयत्वरूपः प्रमेयत्वाभावाभावो वा, तदधिकरणं पर्वतादिरपि तन्निरूपितवृत्तितया धूमे सत्त्वादसम्भवापत्तिरतः साध्यपदमित्यर्थः । **भेदाभावादिति** । स्वप्रतियोगिसामानाधिकरण्यस्वप्रतियोगिवैय्यधिकरण्यविरुद्धधर्मयोरेवाऽभावभेदकतया भावरूपाऽभावस्य गगनाभावादेश्चाऽधिकरणभेदेन भेदे मानाभावाद् गौरवाच्च ।

साध्याभावोऽपि साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः, अन्यथा साध्यवद्भिन्नवृत्तिसमवायावच्छिन्नवह्न्यभावमादाय तद्वह्न्यभावं वह्निघटोभयाभावं चादाय वह्निमान् धूमादित्यादावव्याप्तेः । यदि च साध्यवद्भिन्नवृत्तिसंयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिकाभाववद्वृत्तित्वन्नास्तीतिप्रतीतिसिद्धाभावमादायाऽव्याप्तिवारणमित्युच्यते, तदा साध्यवद्भिन्नवृत्तिर्यः कालिकसम्बन्धावच्छिन्नसाध्याभावो यश्च संयोगेन द्रव्यं नास्तीतिप्रतीतिसिद्धसाध्यप्रतियोगिकोऽभावस्तत्तदधिकरणनिरूपितवृत्तित्वाभावमादाय धूमवान् वह्नेरित्यादावतिव्याप्तिरतो वृत्तित्वाभावकूटवत्त्वं निवेश्यम्, तथाचोक्ताऽव्याप्तिरतः प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं साध्यतावच्छेदकावच्छिन्नत्वं च निवेशनीयम् । प्रतियोगितायां साध्यतावच्छेदकाऽतिरिक्तवैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशे अधिकरणभेदेनाऽभावस्य भिन्नत्वे वा पृथिवीत्वाभावद्रव्यत्वाभावाऽन्यतरवान् जलत्वादित्यत्र साध्यवद्भिन्नपृथिव्यादिनिष्ठद्रव्यत्वात्मकसाध्याभावाधिकरणे जलादौ हेतौर्वृत्तेरव्याप्तेः । एवं कालिकेन द्रव्यत्वाभावे साध्ये कालत्वहेतौ साध्यवद्भिन्नपरमाणुवृत्तिस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य द्रव्यत्वात्मकस्याऽधिकरणे कालत्वस्य वृत्तेरव्याप्तिप्रसङ्गात् ।

तथाच साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वे सति साध्यतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगितावच्छेदकरूपवृत्तिप्रतियोगिताकाभावः । रूपवृत्तित्वं च प्रतियोगितायां स्वविशिष्टाऽवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । स्ववैशिष्ट्यं चावच्छेदकतायां स्वनिरूपितत्वस्वनिरूपितसंसर्गतानिरूपितत्वान्यतरसम्बन्धेन । स्वं प्रतियोगिता । एतेन महानसीयवह्निमान् वह्न्यभावत्वात् वह्निमान् धूमादित्यत्र महानसीयसंयोगेन वन्हेः साध्यतायां चोक्तक्रमेण प्रतियोगितया वह्न्यभावं शुद्धसंयोगेन च वह्न्यभावं चादायाऽतिव्याप्ती समाहिते ।

अत्र साध्याभावाधिकरणतायां सम्बन्धविशेषावच्छिन्नत्वाऽनिवेशे वह्निमान् धूमादित्यादावव्याप्तिः वह्निमद्भिन्नह्रदादिवृत्तिवह्न्यभावस्य कालिकसम्बन्धेन पर्वतादौ सत्त्वात् । स्वरूपसम्बन्धावच्छिन्नत्वनिवेशे घटत्वाभाववान् पटत्वादित्यादौ स्वरूपसम्बन्धेन घटत्वाधिकरणत्वाऽप्रसिद्ध्याऽव्याप्तिरतः साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिज्ञानत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकत्वोपलक्षितसम्बन्धावच्छिन्नत्वं निवेशनीयम् ।

**नन्विति** । अत्र घटाकाशसंयोगाभावस्य साध्यत्वे साध्यस्य केवलान्वयितया तत्राव्याप्ति-

घटाऽनधिकरणदेशावच्छेदेन घटाकाशसंयोगाऽभावस्य गगने सत्त्वात्सद्धेतु-तयाऽव्याप्तिः। साध्यवद्भिन्ने घटे वर्त्तमानस्य साध्याभावस्य घटाकाशसं-योगरूपस्य गगनेऽपि सत्त्वात्तत्र च हेतोर्वृत्तेः।

न च साध्यवद्भिन्नवृत्तित्वविशिष्टसाध्याभाववत्त्वं विवक्षितमिति वा-च्यम्। साध्याभावपदवैयर्थ्यापत्तेः, साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वात् इति चेन्न। अभावाऽभावस्याऽतिरिक्ततामतेनैतल्लक्षणकरणात्, तथाचाऽधिकरणभेदेनाऽभावभेदात् साध्यवद्भिन्ने घटे वर्त्तमानस्य साध्याभावस्य प्रतियोगिव्यधिकरणस्य प्रतियोगिमति गगनेऽसत्त्वादव्याप्तेरभावात्।

न चैवं साध्याभावेत्यत्र साध्यपदवैयर्थ्यमभावाऽभावस्याऽतिरिक्तत्वेन द्रव्यत्वादेरभावत्वाभावात् साध्यवद्भिन्नवृत्तिघटाभावादेस्तु हेतुमत्यसत्त्वाद-धिकरणभेदेनाऽभावभेदादिति वाच्यम्। यत्र प्रतियोगिसमानाधिकरणत्वप्र-तियोगिव्यधिकरणत्वलक्षणविरुद्धधर्माध्यासस्तत्रैवाऽधिकरणभेदेनाऽभावभेदा-भ्युपगमो न तु सर्वत्र, तथाच साध्यवद्भिन्नवृत्तिघटाभावादेर्हेतुमत्यपि सत्त्वा-दसम्भववारणाय साध्यपदोपादानात्।

---

वारणप्रयासाऽनौचित्यादन्यतराऽभावस्य साध्यता। घटाकाशसंयोगमादायैवाऽव्याप्तिरित्यभिप्रा-येण घटाकाशसंयोगेति। घटत्वाभावमात्रस्य साध्यत्वेऽव्याप्तिविरहादिति ध्येयम्। घटसंयोगा-ऽभावस्य घटानुयोगिकसंयोगाधिकरणत्वमाकाशे नास्तीत्यव्याप्तिर्न सम्भवतीत्यतो घटप्रतियो-गिकसंयोगलाभार्थमाकाशपदम्। आकाशसंयोगाभावस्याकाशेऽनभ्युपगमाद् घटपदम्। यद्यपि भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपाऽन्यतरत्वोपेक्षया धीविशेषविषयत्वरूपोभयत्वस्य प्रतियोगितावच्छेदकत्वे लाघवात् घटत्वघटाकाशसंयोगोभयाभावसाध्यकस्थलेऽव्याप्तिर्दातुमुचि-ता, तथापि साध्याभावत्वे साध्यवद्भिन्नवृत्तिताऽवच्छेदकत्वनिवेशादव्याप्तिवारणस्य सुकर-त्वात्तन्नोक्तम्। एकनिरूपितवृत्तिताविशिष्टाऽधिकरणत्वं नाऽपरत्रेत्यनुभवबलेनाऽव्याप्तिं वार-यति **नचेति**। **सम्यक्त्वादिति**। तथाच साध्यवद्भिन्नवृत्तित्वमुपलक्षणं न तु विशेष-णमिति भावः। अभावविशेष्यकभावभिन्नत्वप्रकारकप्रतीतेः प्रमात्वानुरोधेनाऽभावाऽभाव-स्याऽतिरिक्तत्वे साध्याभावस्य च घटे व्याप्यवृत्तितया गगने चाऽव्याप्यवृत्तितया वक्ष्यमाणयु-क्त्या तस्याऽधिकरणभेदेन भिन्नत्वे च साध्यवद्भिन्नघटवृत्तिसाध्याभाववत्त्वं घटस्यैव त-न्निरूपितवृत्तित्वाभावस्य हेतौ सत्त्वान्नाव्याप्तिरित्याह **तथा चेति**।

एवमभावाऽभावस्याऽतिरिक्तत्वे। **यत्रेति**। नन्वत्र प्रतियोगिसमानाधिकरणत्वमेवा-ऽभावभेदसाधकमस्तु किं तादृशविरुद्धधर्माध्यासस्य तथात्वेनेति चेन्न। प्रतियोगिसमा-नाधिकरणत्वमात्रं नाऽभावभेदसाधकं तस्य तथात्वेऽपि प्रतियोगिमति वर्त्तते याऽभाव-

यद्वा घटाकाशसंयोगघटत्वाऽन्यतराभावाभावोऽतिरिक्त एव, घटाकाशसंयोगादीनामननुगततया तथात्वस्य वक्तुमशक्यत्वात् । घटत्वद्रव्यत्वाद्यभावाभावस्तु नातिरिक्तः, घटत्वद्रव्यत्वादीनामनुगतत्वात् । तथाच द्रव्यत्वादिकमादायाऽसम्भववारणायैव साध्यपदमिति प्राहुरित्यास्तां विस्तरः । २

**साध्यवत्प्रतियोगिकान्योन्याभावेति** । हेतौ साध्यवत्प्रतियोगिकान्योन्याभावाधिकरणनिरूपितवृत्तित्वाभाव इत्यर्थः । अन्योन्याभावश्च प्रतियोग्यवृत्तित्वेन विशेषणीयः, तेन साध्यवतो व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्योन्याभाववति हेतोर्वृत्तावपि नासंभवः ।

---

व्यक्ति स्तस्य प्रतियोगिसमानाधिकरणत्वस्य भवतामप्यावश्यकत्वात् । तस्मात्तादृशविरुद्धधर्माध्यास एव तथा । अध्यासः प्रसङ्गः आपत्तिरिति यावत् । सा च कपिसंयोगाभावो यद्येकः स्यात्तदा प्रतियोगिसमानाधिकरणत्वं, प्रतियोगिव्यधिकरणत्वोभयं विरुद्धं न स्यादित्याकारिका । **ननु सर्वत्र** । मानाभावादिति शेषः । **तथाचेति** । तादृश विरुद्धधर्माध्यासस्यैवाऽभावभेदसाधकत्वे ।

नन्वेवमपि विरुद्धधर्माध्यासस्या ऽभावभेदसाधकत्वे गगनाभावादेरपि अन्यत्र दर्शितरीत्याऽधिकरणभेदेन भेदः स्यात् । न च तादृशविरुद्धधर्मस्यैवा ऽभावभेदकत्वं स्वीक्रियते न तु विरूद्धधर्ममात्रस्य तथाच साध्यपदस्य वैयर्थ्यं दुर्वारमेवेति वाच्यम् । तस्यापि विवादग्रस्तत्वादिति चेत्तत्राह । **यद्वेति** । **अत्रयमापत्तिः** । घटत्वतत्संयोगान्यतराभावसाध्यकस्थले ऽव्याप्ति र्दुर्वारैव तत्र घटत्वतद्घटाकाशसंयोगस्याऽनुगतया तत्रैवाऽन्यतराऽभावाऽभावत्वं कल्प्यते नत्वतिरिक्ताऽभावे ऽतिरिक्ताऽभावकल्पने गौरवादिति चेन्न । भवन्मते ऽन्यतराऽभावाऽभावत्वप्रतियोगिको घटत्वानुयोगिकः एकः स्वरूपसम्बन्धः, एतद्घटाकाशसंयोगानुयोगिकं श्चापर इति स्वरूपद्वयकल्पने गौरवापत्तेः । अस्मन्मते तु अतिरिक्ताऽभावानुयोगिक स्तादृशाऽन्यतराभावाभावत्वप्रतियोगिकः एक एवेति लाघवम् । ननु भवन्मते ऽपे अतिरिक्ताऽभावस्य एवं तदनुयोगिकस्वरूपसम्वन्धस्य च कल्पनात्पदार्थद्वयकल्पनम् । अस्मन्मतेस्वरूपसम्वन्धद्वयकल्पने पदार्थद्वयमेव कल्प्यते नत्वधिकपदार्थ इति गौरवाऽनवकाश इति चेत् सत्यम् । अस्मन्मते अतिरिक्ताऽभावः एवं तन्निष्ठानुयोगिता अभावत्वनिष्ठप्रतियोगिता एवं स्वरूपसम्वन्ध इतिपदार्थ चतुष्टयं कल्प्यते । भवन्मते तु घटत्वनिष्ठानुयोगिता एतद्घटाकाशसंयोगनिष्ठाऽनुयेगिता एवं स्वरूपसम्बन्धद्वयं एवमभावत्वनिष्ठं प्रतियोगित्वद्वयं मिति षट्पदार्थकपल्पने महागौरवापत्तेः ।

वस्तुतस्तु प्राचीनमते अभावस्यत्रितयप्रतियोगिकत्वेन अभावाभावस्य त्रितयरूपत्वाभ्युपगमात् । उक्तान्यतराभावाभावस्योक्तान्यतररूपत्वं तत्संयोगध्वंसरूपत्वं तत्प्रागभावरूपत्वं चेति गौरव मतो ऽतिरिक्तत्वाभ्युपगमः ।

केचित्तु वाकारो ऽनास्थायामित्याहुः ।

नन्वेवमपि नानाधिकरणसाध्यके वह्निमान् धूमादित्यादौ साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभाववति हेतोर्वृत्तेरव्याप्तिर्दुर्वारा प्रतियोग्यवृत्तित्वमपहाय साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावविवक्षणे तु पञ्चमेन सह पौनरुक्त्यमिति चेन्न । वक्ष्यमाणकेवलान्वय्यव्याप्तिवदस्यापि अत्र दोषत्वात् । न च तथापि साध्यवत्प्रतियोगिकान्योन्याभावमात्रस्यैव एतल्लक्षणघटकत्वे वक्ष्यमाणकेवलान्वय्यव्याप्तिः अत्रासङ्गता केवलान्वयिसाध्यकेपि साध्याधिकरणीभूततत्तद्व्यक्तित्वावच्छिन्नप्रातियोगिताकान्योन्याभावस्य प्रसिद्धत्वादिति वाच्यम् । तथापि तादृशान्योन्याभावस्य प्रसिद्धत्वेऽपि तद्वति हेतोर्वृत्तेरेवाव्याप्तेर्दुर्वारत्वात् ।

यद्वा साध्यवत्प्रतियोगिकान्योन्याभावपदेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाव एव विवक्षितः । न चैवं पञ्चमाभेदः, तत्र साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववत्त्वेन प्रवेशः, अत्र तु तादृशान्योन्या-

---

विशेषणीय इति । तथाचान्योन्याभावे स्वनिरूपितत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रतियोगिताविशिष्टान्यत्वं विशेषणीयमित्यर्थः ।

ननु अन्योन्यपदं व्यर्थं साध्यवदत्यन्ताभावस्य प्रतियोगिवृत्तित्वेन लक्षणाघटकत्वादिति चेन्न । धर्मिभेदस्य धर्मात्यन्ताभावरूपतया वह्निमद्भेदस्य वह्निस्वरूपस्वप्रतियोगिवृत्तित्वेन स्वप्रतियोग्यवृत्त्यन्योन्याभावाप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिरतः स्ववृत्त्यन्योन्याभावत्वनिरूपितप्रतियोगिताश्रयावृत्तित्वलाभायान्योन्यपदसार्थक्यम् ।

अथवा स्वनिरूपितयत्किञ्चित्प्रतियोगिताश्रयावृत्तित्वं स्ववृत्तियत्किञ्चिदनुयोगितानिरूपितप्रतियोगिताश्रयावृत्तित्वं वा निवेश्याव्याप्तिवारणम् । तथा चायं घट एतत्त्वादित्यत्राव्याप्तिर्दुर्वारैव घटात्यन्ताभावस्य घटवद्भेदस्वरूपतया घटवन्निष्ठप्रतियोगिताश्रयावृत्तित्वस्य तत्र सत्त्वादिति साध्यवन्निष्ठप्रतियोगितानिरूपितभेदत्वावच्छिन्ननिरूपकताकाधिकरणतावृत्तित्वं तदर्थः । एतेनान्योन्यपदनिवेशेऽपि तदत्यन्ताभावमादायाव्याप्तितादवस्थ्यमिति निरस्तम् ।

ननु अन्योन्याभावत्वनिवेशेऽपि अभावाधिकरणकाभावस्याधिकरणस्वरूपतया साध्यवत्प्रतियोगिकान्यान्योभाववृत्तियों घटाभावभेदस्तस्यापि साध्यवत्प्रतियोगिकान्योन्याभावस्वरूपतया स्वनिष्ठान्योन्याभावत्वनिरूपितं यत्प्रतियोगित्वं तदाश्रयभूते घटाभावे स्वप्रतियोगिनि वृत्तित्वात्स्वप्रतियोग्यवृत्त्यन्योन्याभावाप्रसिद्ध्या वह्निमान् धूमादित्यत्राव्याप्तिरिति चेन्न । अभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणस्वरूपत्वानभ्युपगमेनैतल्लक्षणकरणादिति ।

नव्यास्तु अन्योन्याभावत्वमनिवेश्य स्वप्रतियोग्यवृत्तिसाध्यवत्प्रतियोगिकावयविध्वं-

भावाधिकरणत्वेन इत्यधिकरणत्वप्रवेशाप्रवेशाभ्यामेव भेदात् अखण्डाभावघ-
टकतया च नाधिकरणत्वांशस्य वैयर्थ्यमिति न कोपि दोष इति दिक् । ३

**सकलेति** । साकल्यं साध्याभाववतो विशेषणम् । तथाच यावन्ति साध्याभावाधिकरणानि तन्निष्ठाभावप्रतियोगित्वं हेतोर्व्याप्तिरित्यर्थः ।

धूमाभाववज्जलह्रदादिनिष्ठाभावप्रतियोगित्वाद् वह्न्यादावतिव्याप्तिरिति यावदिति साध्याभाववतो विशेषणम् । साध्याभावविशेषणत्वे तत्तद्ह्रदावृत्तित्वेन रूपेण यो वह्न्याद्यभावस्तस्यापि सकलसाध्याभावत्वेन प्रवेशात्ता-वदधिकरणाप्रसिद्ध्याऽसंभवापत्तेः ।

---

साधिकरणीभूतावयवविशेषवृत्तित्वस्य सद्धेतौ सत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरतस्तद्वारणायान्योन्याभावत्वानिवेश इति वदन्ति ।

**वस्तुतस्तु** अन्योन्याभावत्वस्याखण्डोपाधितयाऽन्योन्याभावत्वप्रवेशेऽभावत्वापेक्षया गौरवानवकाशादिति ध्येयम् ।

**नासम्भव** इति । नन्वभावस्य साध्यतायां संयोगसमवायादिरेव साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकसम्बन्धस्तेन साध्यवद्भेदवति हेतोरवृत्तित्वान्नाव्याप्तिसम्भावना व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्यातिरिक्ततया संयोगसमवायादिना तद्वृत्ताऽप्रसिद्ध्या तमादाय न दोष इति चेन्न । अभावाभावोऽतिरिक्त एवेति मते स्वरूपसम्बन्धेन साध्यवद्भेदवत्त्वविवक्षयैवासम्भवाभिधानादिति ।

**असम्भवापत्तेरिति** । ननु तादृशस्तोमस्याधिकरणं गुणादिकमेव प्रसिद्धमतो नासम्भव इति चेन्न । साध्याभावविशेषणत्वे साध्यसामान्याभावघटितस्तोमस्य हेतुमत्यसत्त्वाद्विशिष्टाभावमन्यसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावं चादायाव्याप्तिविरहेण साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं साध्यतावच्छेदकेतरधर्मानवच्छिन्नत्वं चानुपादेयमेव । व्यभिचारिणि कालिकसम्बन्धावच्छिन्नाभावघटितसाध्याभावस्तोमस्यायोगोलकादावसत्त्वेपि ह्रदावृत्तित्वावच्छिन्नाभावादेरपि सकलान्तर्गततया तद्घटितस्तोमस्याधिकरणाप्रसिद्ध्या नातिव्याप्तिः । एवं च ह्रदावृत्तेः स्वरूपसमवायाद्यवच्छिन्नाभावस्यापि सकलान्तर्गततया गुणादेरपि न तद्घटितकूटाधिकरणत्वमित्यसम्भवो दुर्वार एवेति ध्येयम् ।

ननु कालिकसम्बन्धेन साध्याभावस्य हेतुमति सत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिरतः साध्याभाववृत्तिसाध्यीयप्रतियोगितावच्छेदकसम्बन्धेन तदधिकरणं वाच्यम् , तथाच साध्याभावे साकल्यविशेषणदाने कथमसम्भवः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रकारकप्रमाविशेष्यत्वाभावसाध्यकस्थले कालिकस्यैव तादृशसम्बन्धतया तेन सम्बन्धेन साध्याभावस्तोमस्याधिकरणत्वस्य महाकाले सत्त्वेन तत्राप्रसिद्ध्यनवकाशात् । न चाभावे साकल्यशङ्का यथाकथञ्चित्सम्बन्धेन साध्याभावत्वनिवेशाभिप्रायेणैव वह्निमान्धूमादित्यादौ कालिकसम्बन्धेन साध्याभाववत्त्वमादायाव्याप्तिरिति नादेश्यः सम्बन्धानिवेशेपि अव्या-

न च द्रव्यं सत्त्वादित्यादौ द्रव्यत्वाभाववति गुणादौ सत्त्वादेर्विशिष्टाभावादिसत्त्वादतिव्याप्तिरिति वाच्यम् । तादृशाभावप्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वस्येह विवक्षितत्वात् । प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या । तेन द्रव्यत्वाभाववति गुणादौ सत्तादेः संयोगसम्बन्धावच्छिन्नाभावसत्त्वेपि नातिव्याप्तिः । साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः, अन्यथा पर्वतादावपि वन्ह्यादेर्विशिष्टाभावादिसत्त्वेन समवायादिसम्बन्धावच्छिन्नवन्ह्याभावादिसत्त्वेन च यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावाद् धूमस्यासम्भवः स्यात् ।

न च कपिसंयोगी एतद्वृक्षत्वादित्यादौ एतद्वृक्षस्यापि तादृशसाध्याभाववत्त्वेन यावदन्तर्गततया तन्निष्ठाभावप्रतियोगित्वाभावादेतद्वृक्षत्वस्याव्या-

---

प्तेर्दुर्वारत्वादिति वाच्यम् । तदनिवेशे कालिकेन साध्याभावस्तोमस्याधिकरणप्रसिद्ध्याऽप्रसिद्ध्यभिधानस्य सन्दर्भविरोधापत्तेः प्रकृते साध्याभावस्तोमस्याधिकरणे हेतोर्वृत्त्याऽव्याप्तिरित्येवं वक्तुमुचितमिति चेन्न । स्वरूपेण साध्याभाववत्त्वमेवेदानीं निवेशनीयं लाघवात् घटभिन्नं कपालत्वादित्यत्रापि घटत्वरूपसाध्याभावघटितकूटस्य स्वरूपेणाधिकरणत्वाप्रसिद्धिरिति नासङ्गतिरिति ध्येयम् ।

ननु तथापि गगनभेदाभावस्य गगनावृत्त्यभावस्य च साध्याभावस्याधिकरणे विपक्षे गगने पटत्वस्य हेतोरवृत्तेर्गगनभिन्नं पटत्वादित्यत्र लक्षणगमनात्कथमसम्भव इति चेन्न। गगनभिन्नत्वं तद्घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वं चैतदुभयाभावं, गगनभिन्नत्वतद्घटभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावादिकं च साध्यप्रतियोगिकमादाय तद्दोषतादवस्थ्यात् तदभावाधिकरणाप्रसिद्धेरिति दिक् ।

ननु जगदीशेन साकल्यस्य साध्याभावविशेषणत्वेऽव्याप्तिर्दत्ता सा कथं सङ्गच्छते तत्तद्विपक्षावृत्त्यभावमादाय तावदभावाधिकरणाप्रसिद्ध्याऽसम्भवापत्तेस्तादवस्थ्यादिति चेन्न ।

एकमात्रविपक्षकगगनभिन्नं पटत्वादित्यत्र लक्षणसमन्वयात् । ननु स्वाधिकरणवृत्तित्वसम्बन्धेन घटभेदविशिष्टस्य साध्यस्य निरुक्तसम्बन्धेन पटभेदविशिष्टमठभेदविशिष्टसाध्यस्य चाभावानां घटत्वपटत्वमठत्वरूपाणां तावत्स्तोमाधिकरणाप्रसिद्ध्या पुनरसम्भव इति चेन्न । विशिष्टाभावस्य विशेषणाभावरूपत्वमिति मताभिप्रायकोऽयं ग्रन्थः । तथाच विशिष्टाभावे साध्यप्रतियोगिकत्वविरहान्न लक्षणघटकता, मथुरानाथमते विशिष्टाभावस्य विशेष्य एव प्रतियोगितास्वीकारादसम्भवसङ्गतिः ।

नचेति । नन्वत्र धूमवान् वह्नेरित्यत्र तादृशवह्निघटोभयाभावप्रतियोगित्वस्य वह्नौ

प्तिरिति वाच्यम् । किञ्चिदनवच्छिन्नायाः साध्याभावाधिकरणताया इह विवक्षितत्वात् । इत्थं च किञ्चिदनवच्छिन्नायाः कपिसंयोगाभावाधिकरणताया गुणादावेव सत्त्वात्तत्र च हेतोरप्यभावसत्त्वान्नाऽव्याप्तिः । न च कपिसंयोगाभाववान् सत्त्वादित्यादौ साध्याभावस्य कपिसंयोगादेर्निरवच्छिन्नाधिकरणत्वाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । केवलान्वयिन्यभावादित्यनेन ग्रन्थकृतैवास्य दोषस्य वक्ष्यमाणत्वात् । न च पृथिवी कपिसंयोगादित्यादौ पृथिवीत्वाभाववति जलादौ यावत्येव कपिसंयोगाभावसत्त्वादतिव्याप्तिरिति वाच्यम् । तन्निष्ठपदेन तत्र निरवच्छिन्नवृत्तिमत्त्वस्य विवक्षितत्वात् । इत्थं च पृथिवीत्वाभावाधिकरणे जलादौ यावदन्तर्गते निरवच्छिन्नवृत्तिमानभावो न कपिसंयोगाभावः किन्तु घटत्वाद्यभाव एव, तत्प्रतियोगित्वस्य हेतावसत्त्वान्नातिव्याप्तिः । न चैवमन्योन्याभावस्य व्याप्यवृत्तितानियमनये द्रव्यत्वाभाववान् संयोगवद्भिन्नत्वादित्यादेरपि सद्धेतुतया तत्राव्याप्तिः संयोगवद्भिन्नत्वाभावस्य संयोगरूपस्य निरवच्छिन्नवृत्तेरप्रसिद्धेरिति वाच्यम् । अन्योन्याभावस्य व्याप्यवृत्तितानियमनयेऽन्योन्याभावस्याभावो न प्रतियोगितावच्छेदकस्वरूपः किन्त्वतिरिक्तो व्याप्यवृत्तिः, अन्यथा मूलावच्छेदेन कपिसंयोगिभेदाभावभानानुपपत्तेरिति संयोगवद्भिन्नत्वाभावस्य निरवच्छिन्नवृत्तिमत्त्वात् ।

**वस्तुतस्तु** सकलपदमत्राशेषपरं न त्वनेकपरं, एतद्घटत्वाभाववान् पटत्वादित्येकव्यक्तिविपक्षके साध्याभावाधिकरणस्य यावत्त्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः । तथाच किञ्चिदनवच्छिन्नाया निरुक्तसाध्याभावाधिकरणताया व्यापकीभूतो योऽभावः हेतुतावच्छेदकसम्बन्धावच्छिन्नतत्प्रतियोगितावच्छेदकहेतुतावच्छेदकवत्त्वं लक्षणार्थः ।

न च सत्तादिसामान्याभावस्यापि प्रमेयत्वादिना निरुक्तसाध्याभावाधिकरणताया व्यापकत्वाद् द्रव्यं सत्त्वादित्यादावतिव्याप्तिः । तद्व-

---

सत्त्वदितिव्याप्तिसम्भवे तत्परित्यागानौचित्यमिति चेन्न । हेत्वभावपदेन हेतुताविशिष्टान्यप्रतियोगिताकाभावस्य विवक्षितत्वात् । वै० स्वाश्रयवृत्तित्वस्वानाश्रयवृत्तित्वोभयसम्बन्धेन । एवं चोभयाभावस्यातथात्वादेकव्यक्तिहेतुकस्थलेपि विशिष्टाभावस्य तथात्वेनाभिधानादिति ।

**वस्तुतस्त्विति । अशेषपरमिति** । व्यापकत्वपरमित्यर्थः । **नत्वनेकपरमिति** । यावत्वपरमित्यर्थः । व्यापकत्वं च न स्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्वम् । स्वं-

न्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं व्यापकत्वमित्युक्तौ तु निर्धूमत्ववान् निर्वन्हित्वादित्यादावव्याप्तिः निर्वन्हित्वाभावानां वह्निव्यक्तीनां सर्वासामेव चालनीयन्यायेन निर्धूमत्वाभावाधिकरणतावन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वादिति वाच्यम् । तादृशाधिकरणताया व्यापकतावच्छेदकं हेतुतावच्छेदकसम्बन्धावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वस्य विवक्षितत्वात् । व्यापकतावच्छेदकत्वं तु तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वं न तु तद्वन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वं, तद्वति निरवच्छिन्नवृत्तिमान् योऽभावस्तत्प्रतियोगितानवच्छेदकत्वं वा प्रकृते व्यापकतायां प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्नवृत्तित्वस्य वा प्रवेशे प्रयोजनविरहात्, तेन पृथिवीकपिसंयोगादित्यादौ नातिव्याप्तिः कपिसंयोगाभावत्वस्य निरुक्तव्यापकतावच्छेदकत्वविरहादित्येव परमार्थः । ४

---

व्याप्यीभूतं साध्याभावाधिकरणत्वम् । सद्धेतावपि वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावमादाय हेत्वभावे व्यापकत्वाऽसम्भवेना ऽसम्भवापाऽतात् । किन्तु स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्वं मेव तद्वाच्यम् । तत्रा ऽशङ्कते । **न चेति अत्रेदं बोध्यम्** । व्यापकता द्विविधा । अत्यन्ताभावघटिता, अन्योन्याभावघटिता च । तत्राऽऽद्या स्वाधिकरणवृत्त्यत्यन्ताऽभावप्रतियोगिताऽनवच्छेदकधर्मवत्वरूपा । **स्वं**—व्याप्यीभूतसाध्याभावाधिकरणत्वादिकम् । तथाच द्रव्यं सत्वादित्यत्रातिव्याप्तिः । **स्वं** द्रव्यत्वाभावाधिकरणत्वं तद्वान् गुण स्तत्र सत्ताभावे । नास्तीत्यभावस्य ग्रहीतुं शक्यत्वे ऽपि प्रमेयस्य केवलान्वयितया तदभावो ग्रहीतुं नैव शक्यते तथाच तादृशाऽभावप्रतियोगितावच्छेदकं सत्ताभावत्वादिक मनवच्छेदकं प्रमेयत्वं तद्वत्तायाः सर्वत्र सत्वेन सत्ताभावेऽपि सत्वेनसत्ताभावस्यापिव्यापकत्वाद् भवत्यतिव्याप्तिः । द्वितीया तु स्वाधिकरणवृत्त्यन्योन्याऽभावप्रतियोगिताऽनवच्छेदकत्वरूपा तत्र **वक्ष्यमाणरीत्या** धूमाभाववान् वह्न्यभावादित्यत्राऽव्याप्तिमाह । **निर्वह्नित्वानामिति** ।

**व्यापकतावच्छेदकं त्विति** । ननु द्रव्यं विशिष्टसत्त्वादित्यत्र द्रव्यत्वाभाववति गुणादौ सत्तारूपविशिष्टसत्ताभावाभावसत्त्वात्तत्प्रतियोगितावच्छेदकत्वादव्याप्तिरिति प्रतियोगिवैयधिकरण्स्य निरवच्छिन्नवृत्तिकत्वस्य वा व्यापकताघटकाभावे निवेशस्यावश्यकतया कथं प्रयोजनविरहाभिधानम् कथं वा पृथिवी कपिसंयोगादित्यत्रातिव्याप्त्यनभिधानम् कपिसंयोगरूपाभावे प्रतियोगिवैयधिकरण्यस्य निरवच्छिन्नवृत्तिकत्वस्य वाऽसत्त्वेन तादृशाभावान्तरप्रतियोगितावच्छेदकत्वस्य कपिसंयोगाभावत्वे सत्त्वादिति चेन्न । व्यापकताघटकाभावे तयोरन्यतरनिवेशे निरुक्तातिव्याप्तिवारणार्थं यद्धर्मावच्छिन्नाभावेपि प्रतियोगिवैय्यधिकर-

ण्यस्यावश्यकतया तदपेक्षया लाघवात् साध्याभाववन्निरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वमेव हेत्वभावे निवेशनीयमतो नोक्ताव्याप्त्यतिव्याप्तीति ध्येयम्।

ननु वह्न्यभाववद्ध्रदादौ कालिकेनाऽव्याप्यत्वेन वा तादृशाभाववद्धूमाभावाभावविषयकज्ञाने विषयितया वा धूमाभावाभावसत्त्वात्कथं धूमाभावत्वस्य निरुक्तप्रतियोगितानवच्छेदकत्वमिति वह्निमान्धूमादित्यादावव्याप्तिः । अभावे वृत्तित्वस्य स्वरूपेण निवेशेऽव्याप्तिवारणेपि भावहेतुकव्यभिचारिमात्रेऽतिव्याप्तिः । हेतुतावच्छेदकसम्बन्धेन वृत्तित्वस्य निवेशे सत्तावान् जातेरित्यत्र तादृशवृत्तित्वाऽप्रसिद्ध्याऽव्याप्तिः । न च हेतुतावच्छेदकसंसर्गातिरिक्तो यो हेतुतावच्छेदकसंसर्गेण वृत्तिहेतुप्रतियोगिकसम्बन्धस्तदनवच्छिन्नत्वमेव निवेशनीयम्, वह्निमान् धूमादित्यादौ स्वरूपेण संयोगेन वा वह्न्यभाववद्वृत्तिमान् योऽभावस्तत्प्रतियोगितावच्छेदकत्वस्य धूमाभावत्वे सत्त्वाल्लक्षणसमन्वयः, धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणार्थमतिरिक्तान्तम्, सत्तावान् जातेरित्यत्राव्याप्तिवारणाय प्रतियोगिकान्तम् । सत्तावान् प्रमेयादित्यत्र समवायेन हेतुतायामव्याप्तिः स्वरूपस्यापि हेतुप्रतियोगिकतया तदवच्छिन्नवृत्तितायां निरुक्तसम्बन्धानवच्छिन्नत्वविरहात्, अतो हेतुतावच्छेदकसम्बन्धेन वृत्तित्वमपि तत्र हेत्वंशे निवेशितमिति वाच्यम् । जन्यमहाकालान्यतरत्वस्य साध्यतायां कालिकेन प्रमेयस्य हेतुतायामव्याप्त्यापत्तेस्तत्र साध्याभाववति कालिकेन वृत्तेरप्रसिद्धेः, स्वरूपावच्छिन्नवृत्तितायाश्च निरुक्तहेतुप्रतियोगिकसम्बन्धावच्छिन्नतया तस्याधिकरणासम्भवादिति चेन्न । यत्किञ्चित्प्रतियोगित्वनिष्ठावच्छेदकताभिन्ना हेतुतावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वहेत्वभावाभावत्वावच्छिन्नत्वोभयाभाववत्त्वमेव वृत्तितायां निवेश्य सकलदोषवारणात् । अवृत्तिताघटकवृत्तित्वं च स्वावच्छेदकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन सद्धेतावभावान्तरस्यैव तादृशवृत्तित्वमिति तत्प्रतियोगितानवच्छेदकत्वं च हेत्वभावत्वे सुलभमेव । व्यभिचारिणि तु साध्याभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वभावाभावत्वावच्छिन्नवृत्तितायां तदुभयाभावसत्त्वान्नातिव्याप्तिः । वह्नित्वावच्छिन्नप्रतियोगिताकसंयोगेन वह्नेर्हेतुतायां व्यभिचारिण्यतिव्याप्तिः एकधर्मावच्छिन्नवृत्तितायामन्यधर्मावच्छिन्नप्रतियोगिताकसंसर्गानवच्छिन्नतया हेत्वभावाभावत्वावच्छिन्नवृत्तितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वाभावेन निरुक्तरूपावृत्तित्वघटितोभयाभावासत्त्वादतो भिन्नान्तमवच्छेदकताविशेषणम् । विशेषरूपेण संसर्गतानभ्युपगमे तन्न देयमेव ।

अथवा स्वावच्छिन्ना या स्वनिरूपितप्रतियोगिताश्रयवत्ताबुद्धिप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववन्निरूपितवृत्तितावच्छेदकत्वतादात्म्योभयसम्बन्धेनानुयोगिताविशिष्टानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वमेव हेत्वभावत्वे निवेश्यं व्यभिचारिणि हेत्वभावाभावत्वावच्छिन्नवृत्तितावच्छेदकीभूतानुयोगिता तादृशी न तु सद्धेतौ इति नाव्याप्त्यतिव्याप्ती । संयोगी संयोगाभाववोधं प्रति अव्याप्यवृत्तित्वज्ञानानास्कन्दितः समवायावच्छिन्नप्रकारकः तदभावनिश्चयो विरोधी न तु निरवच्छिन्नसमवाया-

**साध्यवदन्येति ।** अत्रापि प्रथमलक्षणोक्तरीत्या हेतौ साध्यवदन्यवृत्तित्वाभाव इत्यर्थः । तादृशवृत्तित्वाभावश्च तादृशवृत्तित्वसामान्याभावो बोध्यः । तेन धूमवान् वन्हेरित्यादौ धूमवदन्यजलह्रदादिवृत्तित्वाभावस्य धूमवदन्यवृत्तित्वजलत्वोभयाभावस्य च हेतौ सत्त्वेपि नातिव्याप्तिः । साध्यवदन्यत्वं च अन्योन्याभावत्वनिरूपितसाध्यवत्त्वावच्छिन्नप्रतियोगिताकाभावत्वम् , तेन वन्हिमान् धूमादित्यादौ तत्तद्वन्हिमदन्यस्मिन् धूमादेर्वृत्तावपि नाव्याप्तिः ।

---

वच्छिन्नप्रकारकः इति पृथिवी कपिसंयोगादित्यत्र हेत्वभावाभावे निरवच्छिन्नवृत्तित्वाप्रसिद्ध्या नातिव्याप्तिरिति ।

केचित्तु स्वरूपेणैव वृत्तिता निवेश्या, अभावाभावस्यातिरिक्तत्वान्न व्यभिचारिणि हेत्वभावाभावे तदप्रसिद्धिरित्याहुः ।

**तादृशवृत्तित्वसामान्याभावो बोध्य इति ।** प्रतियोगित्वसम्बन्धावच्छिन्नसाध्यवन्निष्ठाऽवच्छेदकताभिन्ना सती भेदत्वनिष्ठाऽवच्छेदकताभिन्नाऽयाऽवच्छेदकता तदनिरूपिका अथ चै तादृशाऽवच्छेककताद्वयनिरूपिका या भेदनिष्ठाऽवच्छेदकता तद्भिन्ना सती अधिकरणत्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ चैतादृशाऽवच्छेदकताद्वयनिरूपिका या अधिकरणनिष्ठाऽवच्छेदकता तद्भिन्नासती वृत्तितात्वनिष्ठाऽवच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका अथ चै तादृशाऽवच्छेदकताद्वयनिरूपिका या वृत्तित्वनिष्ठप्रतियोगिता तन्निरूपकोऽभावो बोध्य इत्यर्थः ।

प्रतियोगितायां साध्यवत्वावच्छिन्नत्वनिवेशस्य फलमाह **तेनेति ।** वह्निमत्पर्वतो नेति भेदाधिकरणमहानसादिनिरूपितवृत्तिताया धूमे सत्वादव्याप्तिः स्यादित्यर्थः ।

नन्वेवमपि महानसीयवह्निमान्नेति भेदस्य वारणाऽसम्भवः यदि च साध्यतावच्छेदकावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदवत्वं मेव साध्यवदन्यत्वं तथापि तद्दोषतादवस्थ्यम् । यदि च साध्यतावच्छेदकेतराऽनवच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदवत्वं तदा प्रमेयाश्रयवान् धूमादित्यादौ साध्यतावच्छेदकेतराऽप्रसिद्ध्याऽव्याप्तिः पूर्वोक्तरीत्याऽनवस्था च । न साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्त्यवच्छेदकताकप्रतियोगिताकभेदवत्वं तत्—वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेनेतिवाच्यम् । अव्यासज्यवृत्तिधर्मस्य पर्याप्त्यनभ्युपगमे वह्निमान् धूमादित्यादौ तादृशरूपाऽप्रसिद्ध्याऽव्याप्तेः । उक्तरीत्याऽनस्थापाताच्चेतिचेन्न । साध्यताविशिष्टाऽवच्छेदकताकप्रतियोगिताकभेद एव साध्यवद्भेदः । साध्यतावैशिष्ट्यं चा वच्छेदकतायां स्वनिरूपिताऽवच्छेदकताविशिष्टान्याऽवच्छेदकत्वानिरूपितत्व स्ववृत्तित्वोभयसम्बन्धेन स्ववृत्तित्वं च स्वनिरूपिताऽवच्छेदकताविशिष्टान्याऽवच्छेदकत्वानिरूपितत्वसंम्बन्धेन । अवच्छेदकतावैशिष्ट्यं चा अवच्छेवच्छेदकतायां प्रसिद्धचतुष्टयसंम्बन्धेन ।

न वा वन्हिमत्त्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य स्वावच्छिन्न-भिन्नभेदरूपस्याधिकरणे पर्वतादौ धूमस्य वृत्तावप्यव्याप्तिः । तस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताया अत्यन्ताभावनिरूपितत्वेनान्योन्याभावत्व-निरूपितत्वविरहात् । अन्योन्याभावत्वनिरूपितत्वं च तादात्म्यसम्बन्धावच्छिन्नत्वमेव । साध्यवत्त्वं च साध्यतावच्छेदकसम्बन्धेन बोध्यम्, तेन वन्हिमान् धूमादित्यादौ वन्हिमत्त्वावच्छिन्नप्रतियोगिताकस्य समवायेन वन्हिमतोऽन्योन्याभावस्याधिकरणे पर्वतादौ धूमादेर्वृत्तावपि नाऽव्याप्तिः । सर्वमन्यत्प्रथमलक्षणोक्तदिशावसेयम् । यथा चास्य न तृतीयलक्षणाभेदस्तथोक्तं तत्रैवेति समासः ।

सर्वाण्येव लक्षणानि केवलान्वय्यव्याप्त्या दूषयति केवलान्वयिन्यभावादिति । पञ्चानामेव लक्षणानामिदं वाच्यं ज्ञेयत्वादित्यादिव्याप्यवृत्तिकेवलान्वयिसाध्यके द्वितीयादिलक्षणचतुष्टस्य तु कपिसंयोगाभाववान् सत्त्वादित्याद्यव्याप्यवृत्तिसाध्यकेपि चाभावादित्यर्थः । साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभावस्य साध्यतावच्छेदकसम्बन्धेन साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभावस्य चाप्रसिद्धत्वात् । कपिसंयोगाभाववान् सत्त्वादित्यादौ निरवच्छिन्नसाध्याभावाधिकरणत्वस्य अप्रसिद्धत्वाच्चेति भावः । तृतीयलक्षणस्य केवलान्वयिसाध्यकासत्त्वं च तद्व्याख्यानावसरे एव प्रपंचितम् । एतच्चोपलक्षणम् । द्वितीये कपिसंयोगी एतद्वृक्षत्वादित्यादावप्यव्याप्तिः अधिकरणभेदेन अभावभेदे मानाभावेन कपिसंयोगवद्भिन्नवृत्तिकपिसंयोगाभाववति वृक्षे एतद्वृक्षत्वस्य वृत्तित्वात् । न च साध्य-

---

अन्यत्स्वयमूहनीय मिति ध्येयम् ।

प्रतियोगितायां अन्योन्याभावत्वनिरूपितत्वनिवेशस्य प्रयोजनमाह नवेति । **स्वावच्छिन्नभिन्नभेदरूपस्य** । समनियतत्वादितिशेषः । स्वावच्छिन्नाभिन्नभेदस्य स्वस्वरूपतया वह्निमान्नास्तीत्यन्ताभावस्य वह्निमान्नास्तीत्यन्ताभावाऽवच्छिभिन्नभेदरूपतयाऽन्योन्याभावस्वरूपत्वात । **अव्याप्तिरिति** । न च सर्वत्राऽसम्भवसम्भवेऽव्याप्तिदानमसंगत मिति वाच्यम् । शब्दवान् गगनत्वादित्यादौ लक्षणगमनसम्भवात तत्र साध्यवदत्यन्ताभावस्य केवलान्वयितया तदवाच्छिन्नभिन्नाऽप्रसिद्धेरिति ध्येयम् ।

साध्यनिष्ठावच्छेदकतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशस्य फलमाह । **तेनेति** । **नाव्याप्तिरिति** । न च सम्बन्धान्तरेण साध्यवद्भेदमादायाऽसम्भवसम्भवे-

द्भिन्नवृत्तित्वविशिष्टसाध्याभाववदवृत्तित्वं वक्तव्यम् एवं च वृक्षस्य विशिष्टाधिकरणत्वाभावान्नाव्याप्तिरिति वाच्यम् । साध्याभावपदवैयर्थ्यापत्तेः, साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वस्यैव सम्यक्त्वात् । सद्धेतौ हेत्वधिकरणे विशिष्टाधिकरणत्वाभावादेव असम्भवाभावात्। तृतीये साध्यवत्प्रतियोगिताकान्योन्याभावमात्रस्य घटकत्वे चालनीयन्यायेन अन्योन्याभावमादाय नानाधिकरणसाध्यके वह्निमान् धूमादित्यादावव्याप्तिश्चेत्यपि बोध्यम् ।

इति श्रीमथुरानाथतर्कवागीशकृतं व्याप्तिपञ्चकरहस्यम् ।

---

व्याप्तिदान मसङ्गत मिति वाच्यम् । तादात्म्येन गगनसाध्यकतद्याक्तित्वादिहेतौ साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धेन गगनविशिष्टस्याऽप्रसिद्ध्या तादृशसम्बन्धेन साध्यवद्भेदस्याऽप्रसिद्धिः तादात्म्येन गगनविशिष्टभेदस्य गगनेऽसत्वादव्याप्तेरभावात् । एवमव्रत्ति गगनादेर्लक्ष्यत्वमते च नाऽसभव इति चिन्त्यम् ।

**मानाभावेनेति** । अन्यत्र प्रपंचयिष्यते ।

इति श्री महामहोपापाध्याय श्रीप्रभुदत्तशास्त्रि सुत श्रीशिवदत्तमिश्रविरचित

माथुरीव्याप्तिपंचकरहस्यव्याख्या समाप्ता ।

शिवम्भूयात् ।

---

श्रीगणेशायनमः ।

## अथ श्रीमथुरानाथतर्कवागीशकृता

# सिंहव्याघ्रलक्षणव्याख्या ।

**नापि साध्यासामानाधिकरण्याऽनधिकरणत्वम्। साध्यवैयधिकरण्यानधिकरणत्वं वा। तदुभयमपि साध्यानधिकरणाऽनधिकरणत्वम् । तच्च तत्र यत्किंचित्साध्यानधिकरणे धूमे चाऽप्रसिद्धम् ।**

नापीति । अत्र साध्यस्याऽसामानाधिकरण्यं न साध्याधिकरणवृत्तित्वाऽभावः द्रव्यं सत्त्वादित्यादावतिव्याप्तेः, द्रव्यत्वाधिकरणवृत्तित्वाभावानधिकरणत्वात्सत्तायाम्, नापि साध्यवद्भिन्नवृत्तित्वं, द्वितीयेन पौनरुक्त्यापत्तेः । किन्तु साध्याधिकरणत्वाभाववद्वृत्तित्वं, तदनाधिकरणत्वं च तद्वद्भिन्नत्वम्, अधिकरणत्वप्रवेशे प्रयोजनविरहात्, तथा च साध्याधिकरणत्वाभाववद्वृत्तिभिन्नत्वं हेतोरव्यभिचरितत्वमिति फलितम् ।

यत्कारुण्यकणस्पर्शान्मूको वाचस्पतीयति ।
ब्रह्मोपेन्द्रशिवैर्वन्द्यां नौमि तां वागधीश्वरीम् ॥ १ ॥

**न साध्याधिकरणवृत्तित्वाभाव इति ।** साध्याऽसामानाधिकरण्यमित्यत्र समानमधिकरणं यस्य स समानाधिकरणः, तस्य भावः सामानाधिकरण्यं, साध्यस्य सामानाधिकरण्यं साध्यसामानाधिकरण्यं, साध्यसामानाधिकरण्यस्याऽभावः साध्याऽसामानाधिकरण्यमिति ससम्बन्धिकार्थबोधकोत्तरपदघटितसमुदायेन समं नञ्समास इति नञ्मध्यनिवेशोपपत्तिः । तथा च साध्यनिष्ठाधेयतानिरूपकाधिकरणनिरूपितवृत्तित्वाभावः साध्यासामानाधिकरण्यपदार्थः। एतदर्थाभिप्रायेण निषेधमुखत्वमस्य । तदर्थे दोषमाह **अतिव्याप्तेरिति** । **नापीति** । समानमेव सामानं साध्यस्य सामानं न भवतीति साध्यासामानं "समानशब्दार्थे आधेयतानिरूपकमधिकरणमिति यावत्" तदधिकरणं यस्य स साध्याऽसामानाधिकरणस्तस्य भावः साध्यासामानाधिकरण्यमिति समासेऽधिकरणपदार्थः । "लक्षणया" साध्यानधिकरणवृत्तित्वं—साध्यासामानपदं तात्पर्यग्राहकं—तथा च साध्यासामानाधिकरण्यपदस्य साध्यानधिकरणवृत्तित्वरूपार्थः फलितः । एतदर्थाभिप्रायेण विधिमुखत्वमस्य, तत्र दोषमाह **पौनरुक्त्यापत्तेरिति** । साध्यवैयधिकरण्याऽनधिकरणत्वरूपद्वितीयलक्षणार्थाऽभेदापत्तेरित्यर्थः । तत्रापि साध्यस्य वि अधिकरणं यस्य स साध्यव्यधिकरणस्तस्य भावः साध्यवैयधिकरण्य-

अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिवारणायाधिकरणत्वप्रवेशः । अव्याप्यवृत्तेरधिकरणता तु नाव्याप्यवृत्तिः । साध्याधिकरणत्वं च साध्यतावच्छेदकावच्छिन्नं साध्यतावच्छेदकसम्बन्धावच्छिन्नं च ग्राह्यम् । अन्यथा गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ सत्ताया एव साध्यत्वेन साध्याधिकरणत्वाभाववत्सामान्याद्येव तदवृत्तित्वाज्जातेरतिव्याप्तिः स्यात्, स्याच्च समवायेन वह्न्यादौ साध्ये संयोगेन धूमादिहेतावतिव्याप्तिः, वह्न्यधिकरणत्वाभाववज्जलह्रदाद्येव तदवृत्तित्वाद्धूमादेः । इत्थं च साध्यतावच्छेदकविशिष्टसत्तात्वावच्छिन्नसाध्याधिकरणत्वाऽभाववद्गुणादि तद्वृत्तित्वाज्जातेः, साध्यतावच्छेदकसमवायसम्बन्धावच्छिन्नवह्न्यधिकरणत्वाभाववत्पर्वताद्यपि धूमस्य तद्वृत्तित्वान्नातिव्याप्तिः । वृत्तिश्च हेतुतावच्छेदकसम्बन्धेन विवक्षणीया, तेन तादृशवह्न्यधिकरणत्वाभाववति धूमावयवे समवायेन धूमस्य वृत्तावपि न क्षतिः ।

न चैवं सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः, सत्ताधिकरणत्वाभाववति हेतुतावच्छेदकसमवायसम्बन्धेन वृत्तेरेवाऽप्रसिद्धेरिति वाच्यम् । तादृशसाध्याधिकरणत्वाभावव्यापकाऽन्योन्याभावप्रतियोगिताऽवच्छेदकत्वमिति विवक्षितत्वात् । साध्याधिकरणत्वाभावसमानाधिकरणेत्युक्तौ धूमवान् वह्नेरित्यादौ धूमाधिकरणत्वाभाववति जलह्रदादौ वह्निमदन्योन्याभावसत्त्वादतिव्याप्तिरतो व्यापकत्वानुधावनम् । अन्योन्याभावप्रतियोगितावच्छेदकत्वं हेतुतावच्छेदकसम्बन्धावच्छिन्नं हेतुतावच्छेदकावच्छिन्नं च ग्राह्यम् । अन्यथा वह्निमान् धूमादित्यादौ वह्न्यधिकरणत्वाभाववति धूमावयवे धूमवदन्योन्याऽभावाऽसत्त्वादव्याप्तिः स्यात् । स्याच्च द्रव्यं जातेरित्यादौ घटत्वप-

---

मितिविग्रहे वि पदस्याऽधिकरणं भेदश्च खण्डशक्त्यार्थः । अधिकरणत्वं चाऽऽधेयतानिरूपकत्वं, तदेकदेशाऽऽधेयतायां षष्ठ्यत्र साध्यपदार्थसाध्यनिष्ठत्वस्याऽन्वयः । अधिकरणस्य प्रतियोगितया भेदः । तथा च यन्निष्ठाधेयतानिरूपकं साध्याधिकरणभिन्नमिति विग्रहवाक्याद्बोधः एवं च पुनरुक्तिः स्पष्टैवेति बोध्यम् । **फलितमिति** । न च साध्याधिकरणत्वाभाववद्वृत्तित्वात्यन्ताभाववत्त्वमित्येव कुतो नोक्तमन्योन्याभावप्रवेशो व्यर्थ इति वाच्यम् । द्रव्यं सत्त्वादित्यादावतिव्याप्तेः ।

**विवक्षितत्वादिति** । न चात्र व्यापकत्वं तद्वन्निष्ठात्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वं तथा च धूमवान् वह्नेरित्यादावतिव्याप्तिः धूमाधिकरणत्वाभाववदयोगोलकादिवृत्त्यत्य-

द्रव्यत्वादितत्तज्जातिमतोऽन्योन्याभावस्य द्रव्यत्वाधिकरणत्वाभावव्यापकत्वेनाऽतिव्याप्तिः। अव्याप्यवृत्तिमतोऽन्योन्याभावस्तु नाऽव्याप्यवृत्तिरिति पृथिवी कपिसंयोगादित्याद्यव्याप्यवृत्तिहेतुके व्यभिचारिणि नातिव्याप्तिरिति संक्षेपः।

साध्यवैयधिकरण्येति। साध्यवैयधिकरण्यं साध्यवद्भिन्नवृत्तित्वम्। साध्यवदवृत्तित्वपरत्वे द्रव्यं सत्त्वादित्यादावतिव्याप्तिः। अव्याप्यवृत्तिमतोऽन्योन्याभावस्तु नाऽव्याप्यवृत्तिरित्यव्याप्यवृत्तिसाध्यकसद्धेतौ नाव्याप्तिः। अनधिकरणत्वमित्यत्राऽधिकरणत्वांशस्याऽधिकस्य प्रवेशान्न साध्यवदन्यावृत्तित्वमित्यनेन यथाश्रुतस्य पौनरुक्त्यम्, अखण्डाऽभावघटकतया चाऽधिकरणत्वांशस्य न वैयर्थ्यम्। साध्यवद्भिन्नत्वं च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकं बोध्यम्। तेन वह्निमान् धूमादित्यादौ धूमस्य समवायेन वह्निमतो भिन्ने यत्किंचित्साध्यवद्व्यक्तिभिन्ने च पर्वतादौ वृत्तित्वेऽपि न क्षतिः। तादृशसाध्यवद्भिन्नत्वव्यापकाऽभावप्रतियोगिताऽवच्छेदकत्वमिति तु समुदायार्थनिष्कर्षः। अन्यथा पूर्ववत्साध्यवद्भिन्नवृत्तिकत्वमित्यत्र वृत्तेर्हेतुतावच्छेदकसम्बन्धेनैव वाच्यतया सत्तावान् द्रव्यत्वादित्यादावव्याप्त्यापत्तेः। शेषं पूर्ववत्।

लक्षणद्वयमेकदैव दूषयति तदुभयमपीति। साध्याऽनधिकरणानधिकरणत्वं साध्यानाधिकरणाऽनधिकरणत्वनियतम्, साध्याऽनधिकरणाऽवृत्तित्वव्याप्यमिति यावत्। तच्च—व्यापकीभूतं साध्यानधिकरणाऽवृत्तित्वं च। तत्र—केवलान्वयिसाध्यकेऽप्रसिद्धमित्यन्वयः। साध्यानधिकरणत्वस्य साध्याधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्य तत्राऽप्रसिद्धेः। यत्किंचिदिति। यदि च साध्याऽनधिकरणत्वं न तत्सामान्यभेदः किन्तु साध्याधिकरणप्रति-

---

न्ताभावप्रतियोगितावच्छेदकीभूतप्रमेयत्वादिकमादाय वह्निमद्भेदस्यापि धूमाधिकरणत्वाभावव्यापकत्वसम्भवादिति वाच्यम्। यद्धर्मावच्छिन्नाऽवच्छेदकताकप्रतियोगिताकभेदत्वं साध्याधिकरणत्वाभाववन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकमित्यर्थे तात्पर्यात्। न च हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाभावत्वं साध्याधिकरणत्वाभावव्यापकतावच्छेदकमित्येव कुतो नोक्तमिति वाच्यम्। वृत्त्यनियामकसम्बन्धेन हेतुतायामव्याप्तिप्रसङ्गात्। सङ्क्षेप इति। तथा च व्यापकत्वं प्रतियोगिवैयधिकरण्याऽघटितमेव वाच्यमित्यन्यत्र विस्तरः।

**तदुभयमपीतीति।** साध्यवैयधिकरण्यानधिकरणत्वमित्यस्य साध्यानधिकरणवृत्तित्वाभाववत्त्वमर्थः। चरमाधिकरणत्वांशस्य वैयर्थ्येन तत्र निवेशे प्रयोजनाभावात्। न च वह्नि-

योगिताकभेदवत्त्वमात्रं तदा वह्निमान् धूमादित्यत्र यत्किंचिद्वह्न्यनधिकरणे पर्वतादौ वर्त्तमाने धूमेऽप्यप्रसिद्धमित्यर्थः । अप्यर्थकचकारात्केवलान्वयिसाध्यकसमुच्चयः । तथा च व्यापकाभावाद्व्याप्यीभूतं तदुभयलक्षणमपि तदुभयत्राऽप्रसिद्धमिति भावः । साध्यानधिकरणाऽनधिकरणत्वमिति यथाश्रुतं तु न संगच्छते यथोक्तलक्षणद्वयस्य तत्स्वरूपत्वाऽभावादिति ध्येयम् ।

भट्टाचार्यानुयायिनस्तु तदुभयमपि—तदुभयलक्षणवाक्यमपि साध्यानधिकरणानधिकरणत्वं साध्यानधिकरणाऽनधिकरणत्वबोधजनकं साध्याधिकरणत्वसामान्याभाववद्वृत्तित्वाभाव—साध्यवत्सामान्याभिन्नवृत्तित्वाभावान्यतरबोधजनकमिति यावत् । तच्च—तादृशान्यतराभाववत्त्वं च, तत्र- केवलान्वयिसाध्यकेऽप्रसिद्धमित्यन्वयः । साध्याधिकरणत्वसामान्याभावादेरप्रसिद्धत्वादिति भावः । ननु तदुभयवाक्यं न प्रागुक्ताऽभावान्यतरविषयकबोधजनकमपि तु साध्याधिकरणत्वप्रतियोगिकाभाववद्वृत्तित्वसामान्याभावसाध्यवत्प्रतियोगिकभेदवद्वृत्तित्वसामान्याभावान्यतरबोधजनकमेव साध्याधिकरणत्वप्रतियोगिकाभावसाध्यवत्प्रतियोगिकभेदौ च केवलान्वयिन्यपि प्रसिद्धावित्यत आह यत्किंचिदिति । शेषं पूर्ववदित्याहुः ।

इति श्रीमथुरानाथतर्कवागीशकृतसिंहव्याघ्रलक्षणव्याख्या समाप्ता ।

---

मान् गगनादित्यत्रातिव्याप्तिः, अवृत्तिगगने तथाविधवृत्तित्वाभावसत्त्वादिति वाच्यम् । व्याप्याश्रये तत्र भ्रमात्मकपक्षधर्मताज्ञानादनुमित्यङ्गीकारेण क्षतेरभावात् । यदि च तत्र न व्याप्यत्वव्यवहारस्तदा वृत्तिमत्त्वं निवेश्य साध्यानधिकरणवृत्तित्वाभावविशिष्टवृत्तिमत्त्वमित्यस्यैवोपदर्शितरीत्या सम्यक्त्वात् । नचैवं सति साध्यवदन्यावृत्तित्वं व्याप्तिरित्यनेन पौनरुक्त्यमिति वाच्यम् । साध्यवदन्यवृत्तिभिन्नत्वस्याऽत्र लक्षणं वाक्यार्थत्वम् तत्र च वृत्तित्वात्यन्ताभावनिवेशात् इति ।

इति श्रीशिवदत्तमिश्रकृतमाथुरीसिंहव्याघ्रलक्षणव्याख्या समाप्ता ।

शिवं भूयात् ।

# काशीसंस्कृतसीरीज़-ग्रन्थमाला ।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते ।

---

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीदुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यांसमन्वितम् (वैशेषिकं१)रु०२—०

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः । ( व्याकरणं १ ) रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ )रु० ०—८

८ अलङ्कारप्रदीपः । श्रीविश्वेश्वरपाण्डेयनिर्मितः । (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः । महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्प-

१८ संक्षेपशारीरकम् । मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका—अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः । (कर्मकाण्डं ) रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम् । श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम् । हरिहरपक्षीय—मधुसूदनीटीकया ( संस्कृतटीका—संस्कृतपद्यानुवाद—भाषाटीका—भाषापद्यानुवाद—भाषाबिम्ब ) पञ्चमुखीनाम्न्या टीकया—शक्तिमहिम्नस्तोत्रेण च समन्वितम् । ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः। भाषाटीकासहितः। ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः । (व्याकरणं ३)रु०४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका। श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः। (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः । ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः । (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। ( कर्मकाण्डवि० ३ ) रु० ०—४

२७ लघुशब्देन्दुशेखरः । म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम् पञ्चसर्गात्मकम् । म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं०श्रीकनकलाल ठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् । (काव्य३) रु० १२-०

२९ कामसूत्रम्। श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम्। बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम्। ( काम०२ )यन्त्रस्थ

३० न्यायकुसुमाञ्जलीः। न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः। ( न्यायं ४ ) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः। (व्याकरणं ५) यन्त्रस्थ

३२ अर्थसंग्रहः। पूर्वमीमांसासारसंग्रहरूपः। श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२)रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम्। महर्षि—गोतमादि...

५७ शक्तिवादः । श्रीगदाधरभट्टाचार्यप्रणीतः । टीकात्रयोपेतः । कृष्णभट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः । ( न्या० वि० ७ ) रु० २

५८ प्रौढमनोरमा । म. म. श्रीभट्टोजीदीक्षितावरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्ययासमेता । म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता । श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता । श्रीयनजगन्नाथशास्त्रिविरचितयाव्ययीभावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता ( अव्ययीभावान्तः प्रथमो भागः ) ( व्याकरण वि० ९ ) रु० ५-

५९ आपस्तम्बगृह्यसूत्रम् । श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदन, मीमांसापदार्थविवरणेन च संयोजितम् । ( कर्म० वि० ५ ) रु० ३-

६० नाट्यशास्त्रम् । भरतमुनिप्रणीतम् ( सम्पूर्णम् ) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवापाध्यायेन च सम्पादितम् । ( नाट्यशास्त्र वि० १ ) रु० ५

६१ काव्यालङ्कारः । श्रीभामहाचार्येण विनिर्मितः । काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भूमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभूषयद्भिः श्रीमदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्कथनेन सनाथीकृतः । (अलङ्कार वि० २) रु० १

६२ ब्रह्मवादः । गोस्वामि श्रीहरिरायजी महाराज विरचितः । श्रीगोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्यासमलङ्कृतः । तथा गोस्वामी श्रीव्रजनाथविरचितो ब्रह्मवादः । तथा शुद्धाद्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः । श्रीरघुनाथशास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम् । श्रीहरिशङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत भूमिकया विविधपारिशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः । ( शुद्धाद्वैतसम्प्रदाय वि० १ ) रु० १-

६३ प्रेमरसायनम् । श्रीविश्वनाथपण्डितरचितम (का०वि० ८)रु० १-

६४ व्याप्तिपञ्चकरहस्यम् सिंहव्याघ्रलक्षणरहस्यं च । श्रीमथुरानाथतर्कवागीशकृतम् । न्यायाचार्य पं० शिवदत्तमिश्र विरचित गंगानिर्झरिणीव्याख्यया टिप्पण्यादि विभूषितं च । ( न्या० वि० ८ ) रु० ०—१

---

